प्राच्यभारतीग्रन्थमाला–८

**Prachyabharati Series—8**



# विधिविवेकः

सम्पादकः

**डा० महाप्रभुलाल गोस्वामी**

# VIDHIVIVEKA

OF

ŚRĪ MAṆḌANA MIŚRA

with the Commentary

## NYĀYAKAṆIKĀ

OF

VĀCASPATI MIŚRA

*Edited with detailed Introduction*

BY

Dr. MAHAPRABHU LAL GOSWAMI

Ācārya (Nyāya, Vyākaraṇa; Sāhitya, Vedānta) Mīmāṃsā Śāstrī

M. A., Ph. D., D. Litt.

TARA PRINTING WORKS

VARANASI

श्रीमण्डनमिश्रविरचितः

# विधिविवेकः

श्रीवाचस्पतिमिश्रप्रणीत-

न्यायकणिकासहितः


सम्पादको विस्तृतभूमिकालेखकश्च

महाप्रभुलालगोस्वामिना

न्याय-व्याकरण-वेदान्त-साहित्याचार्यः मीमांसाशास्त्री,

एम्० ए०; पी-एच्-डी०, डी० लिट्०



तारा प्रिंटिंग वर्क्स

वाराणसी

१९८६ तमः ख्रिष्टाब्दः ]  [ २०४३ तमो वैक्रमाब्दः

# सम्पादकीयम्

विदितमेवैतद्विश्वेषामपि विदुषाम्, यत् संस्कृतसाहित्ये आचार्यमण्डनस्य कीदृशं महत्त्वम्। शङ्करावतारभूतस्याचार्यशङ्करस्यापि अद्वैतवेदान्तप्रतिष्ठापने यदि कस्याप्याचार्यस्यापेक्षा ऐतिह्यालोचकानां भवति तर्हि भारतीमण्डितस्य मण्डनस्यैव। शङ्करस्य उपनिषन्मूला वृद्धतमा भारती तावद्विगतबला यावन्मण्डनस्य भारत्याः च हस्तावलम्बनपरा न भवति। भारतीशून्यमण्डनभारतीविभूषितैव भारते शङ्करभारती भातीति प्राचीनैतिह्यप्रचारः।

स्मरणातीतयुगात् भारते दार्शनिकज्ञानस्य मेध्याग्निः प्रज्वलति। खीष्टीयाष्टमशतके दर्शनराज्यस्य गाम्भीर्य्ये उच्चतायां व्यापकत्वे च हिमालयसदृशः भारतीयः भारतीमण्डितः मण्डननामा पण्डितमण्डलीमण्डनभूतः कश्चित्पण्डितः आसीत्। कर्ममीमांसकोऽसौ मण्डनमिश्रः शङ्कराचार्येण सह शास्त्रविचारणायां पराजितः सन्न्यासग्रहणपूर्वकं सुरेश्वराचार्याख्यां जगाम। किन्तु, मण्डनसुरेश्वरौ भिन्नौ, नासीत्तयोर्भेदः इति विचारः इदानीमपि दोलायमानः वर्तते।

पूज्यमहामहोपाध्यायडाक्टरश्रीयोगेन्द्रनाथबागचीशास्त्रिपादाः महामहोपाध्यायकुप्पुस्वामिशास्त्रिपादाः, प्राध्यापकश्रीहिरियण्णमहोदयाः, प्राध्यापकश्रीशतकरीमुखोपाध्यायपादाः अन्ये च केचन मण्डनसुरेश्वरयोरैक्यं न स्वीकुर्वन्ति, यतः, विश्वरूपस्यैव सुरेश्वरत्वात्। अपरत्र माधवीयशङ्करदिग्विजयस्य प्रामाण्यमवलंब्य मण्डनसुरेश्वरयोरैक्यमिति महामहोपाध्यायपण्डितप्रवरानन्तकृष्णशास्त्रिमहोदयाः अन्ये च तदनुयायिनः समामनन्ति।

नात्र कापि विप्रतिपत्तिर्यत् आचार्यसुरेश्वरः शङ्कराचार्यस्यान्यतमशिष्य आसीत्। साक्षात् शिष्य इति तस्य समसामयिकत्वेऽपि नास्ति सन्देहावसरः। खृष्टीयाष्टमशतके उभयोः स्थितिरित्यपि निश्चप्रचं वचः। वैयक्तिकदृष्ट्या शङ्कराचार्यस्य कालविषये वर्तते मतभेदः, परं न युक्तिसह इत्यूहापोहकुशलैः नैव गण्यतेऽसौ मतभेदः। आचार्यशङ्करेण धर्मस्थितिहेतवे भारतस्य पश्चिमप्रान्ते द्वारकायां शारदापीठस्य पूर्वप्रान्ते जगन्नाथे गोवर्द्धनपीठस्य उत्तरप्रान्ते बदरीक्षेत्रे ज्योतिष्पीठस्य दक्षिणप्रान्ते च शृङ्गेरीपीठस्य स्थापना कृता। मठाम्नायाख्ये ग्रन्थे एतेषां पीठानां विशिष्टं विरणमुपलभ्यते—

धर्मस्य पद्धतिस्त्वेषां जगतः स्थितिहेतवे।
सर्ववर्णाश्रमाणां हि यथाशास्त्रं विधीयते॥ (म० आ० २४)

पीठेषु च श्रौतपरायणस्य जितेन्द्रियस्य, वेदवेदाङ्गादिपारगस्य सकलशास्त्र-प्रयोगकुलस्य विदुषः अभिषेको भविष्यतीति—

शुचिर्जितेन्द्रियो वेदवेदाङ्गादिविशारदः ।
योगज्ञः सर्वशास्त्राणामस्मदास्थानमाप्नुयात् ॥
अन्यथारूढपीठोऽपि निग्रहार्हो मनीषिणाम् ॥ (म० आ० ९-१०)

भगवान् शङ्करः भारतस्याखण्डतार्थं तत्कल्याणार्थञ्चैतत्सर्वमनुष्ठितवान् । सत्यमेतद्यत् ऐतिहासिकानुसंधानं नैतस्य मुखबन्धस्योद्देश्यम्, किन्तु संक्षेपेण किमपि वक्तव्यमेव । अस्मद्दृष्टिरपि मण्डनमिश्रः सुरेश्वरश्च भिन्नावेवेति मतमनुवर्तते । शङ्करदिग्विजये कर्ममीमांसकमण्डनमिश्र एव पराजितः सन् कषायवस्त्रं दधार । किन्तु ब्रह्मसिद्धिकारो मण्डनः कर्ममीमांसको नास्ति अपि तु ब्रह्मवादी वेदान्ती, परन्तु आचार्यशङ्करसिद्धान्तेन सुरेश्वरसिद्धान्तेन च महत्पार्थक्यं मण्डनसिद्धान्तस्य वर्तते । मण्डनस्य ब्रह्मवादे स्फोटवादस्य प्रचुरप्रभावोऽवलोक्यते, अतः शब्दब्रह्मवादी असौ मण्डनमिश्रः वस्तुतः कर्ममीमांसको नास्ति । ब्रह्मसिद्धिकारः स्वतन्त्राद्वैतवेदान्ती ब्रह्मसिद्धिं निर्माय पराजितः शङ्करशिष्यः सुरेश्वराचार्यः सन् शङ्करसिद्धान्तं गृहीतवान् ।

शङ्करदिग्विजयानुसारेण मण्डनः कुमारिलभट्टस्य छात्रः, मीमांसादर्शने असाधारणवैदुष्यसम्पन्नमाहिष्मत्यां निवसति स्म । कुमारिलभट्टेन सह शङ्करस्य साक्षात्कारः प्रयागे भवति । तत्रैव मण्डनमिश्रेण सह विचारार्थं शङ्करं प्रेरयामास । उभयोर्विचारयुद्धे माध्यस्थ्यमुभयभारती मण्डनपत्नी चकार । विचारे पराजितः मण्डनः तच्छिष्यत्वं स्वीचकार इत्येवाधारभूतः मण्डनसुरेश्वरयोरैक्ये । किन्तु, विचारेण सिद्धान्तदृष्ट्योभयोः पार्थक्यमेवेति ।

अनन्तकृष्णशास्त्रिभिस्तु मण्डनमिश्रमतस्य शङ्करसुरेश्वरानुसारित्वं प्रदर्शयद्भिः यदुक्तं तत्संक्षेपेण तद्वचसैवोच्यते—

"स्फोटवादः भगवत्पादानामद्वैतमताविरोधीति व्यवस्था मण्डनमिश्रस्य हरिकारिकासिद्धान्तमनुसृत्य, स्फोटस्यैव चैतन्यरूपत्वमपि अङ्गीकृत्य । अयं प्रकारो जयन्तभट्टेनाप्यनुक्रियते इति मण्डनमिश्रो नाद्वैतविरुद्धं कुत्रापि किमपि निबन्धमन्य इव निबध्नाति, स्फोटसिद्धेरप्यत्रैव तात्पर्यमिति ब्रह्मसिद्धेराशयः । सति चैवमिष्टसिद्धिकाराणाम् "तस्मादद्वैतमेव सिध्यति, न शब्दाद्वैतम् घटाद्वैतं वा" इति स्फोटब्रह्मवादनिरसनं न स्फोटसिद्धेर्निरसनम्, न वा ब्रह्मसिद्धेर्मङ्गलश्लोकगताक्षरपदस्य स्फोटवादसमर्थनपरतयाऽपि विवरणस्य । किन्तु अन्ते शास्त्रिणोक्तं यत् "स्फोटवादोऽप्यद्वैतस्य प्रस्थानान्तरमिति" एतत्कथनेनैव स्फोटाद्वैतवादः न शङ्करसम्मतः ।

कुप्पुस्वामिपादैरुक्तं यत् "ज्ञानकर्मसमुच्चयो मण्डनेन विवक्ष्यते, ज्ञानकर्मसमुच्चयस्तु भगवत्पादैर्निरस्यते" इति भगवत्पादविरुद्धं मण्डनोऽत्र निबध्नाति[1] इति प्रतिभाति ।

अत्रापि कर्मणा सह श्रवणाद्यनुष्ठाने क्षिप्रं मुक्तिसिद्धिः, विना कर्म श्रवणादिकं तु चिरेण मोक्षोपयोगीति ब्रह्मसिद्धिप्रस्थानमेव विशदं प्रतीयते । किन्तु एतत्स्वीकारे मण्डनमतस्यैव विवेचनमाचार्यशङ्करः करोति, नास्ति तस्याद्वैतवेदान्ते वैशिष्ट्यम्, इति मण्डनपृष्ठसेवी शङ्करभगवत्पाद इत्यापतति ।

शास्त्रिपादाः स्वीयभूमिकायाम् "विपरीतख्यातिरियमनिर्वचनीयख्यातितो न विवेक्तुं शक्यते"[2] तथापि भाट्टमतमेव मण्डनः समर्थयति । व्यवहारे भाट्टनय एवाद्वैतिनां शरणमिति मत्वा लिखन्ति अत्राप्यनन्तकृष्णशास्त्रिमहोदयाः ।

स्वरूपपररूपाभ्यां नित्यं सदसदात्मके ।
वस्तुनि ज्ञायते रूपं किञ्चित् कैश्चित् महात्मनः ॥

इति भाट्टाः मन्वानाः नियतसदसत्ख्यातिवादिनः सांख्या इव नान्यथाख्यातिवादिनः, न वा विपरीतख्यातिवादिनः । भाट्टाः नियतसदसत्ख्यातिवादिनः, आर्हतास्त्वनियतसदसत्ख्यातिवादिनः ।

न च व्यवहारे भाट्टनय इत्येकान्तो मण्डनस्येति विधिविवेकः, ब्रह्मसिद्धेर्नियोगकाण्डश्च न केवलं प्राभाकरम्, किन्तु भट्टपादमपि वेदान्तविचारावसरेऽपीष्टसाधनत्वविध्यर्थतावादस्वीकारेण निरस्यति । अत्र शास्त्रिपादाः "मण्डनस्य विपरीतख्यातिरियं नान्यथाख्यातिः । अन्यथाख्यातिपदेनानिर्वचनीयख्यातिं व्यपदिशति । तात्पर्यं तु मण्डनस्यानिर्वचनीयख्यातावेव"[3] ।

मण्डनमिश्रः अख्यातिवादं निरस्यान्यथाख्यातिवादमुक्तवान्, अर्थात् सकलज्ञानस्य समीचीनत्वखण्डनपूर्वकं भ्रमज्ञानं स्वीकृतवान् । एतत्तु सत्यं यत् भ्रमज्ञानसमर्थने एव मण्डनस्य तात्पर्यं न तु नैयायिकमतसिद्धान्यथाख्यातिसमर्थने । ब्रह्मसिद्धौ तर्ककाण्डस्य—

प्रतिष्ठितं च विज्ञानमर्थमात्रावलम्बनम् ।
भेदेषु त्वप्रतिष्ठत्वमस्तीन्द्रियधियामपि ॥ ३१ ॥

इत्यनया कारिकया भेदमात्रस्य मिथ्यात्वं साधयति, भेदमात्रस्य मिथ्यात्वं संसाध्य जीवब्रह्मणोरैक्यं समर्थयति । नैयायिकमतसिद्धसत्ख्यातिविशेषान्यथाख्यातिसमर्थने उन्मत्तप्रलपितत्वं तस्य भवेत् । एतावता एतदेव सिद्ध्यति यदयं

१—ब्र० भू० पृ० XXXIV
२—पृ० २७—५ ।
३—ब्र० भू० पृ० ७९ ।

मण्डनः न द्वैती। आचार्यशङ्करोपि "सर्वथापि तु अन्यस्यान्यधर्मावभासतां न व्यभिरति" इति कथयति किन्तु, नैतावता उभयोरेकविधमेवाद्वैतमपि तु मण्डनस्याद्वैतवादः भर्तृहरिसमर्थितः न शाङ्कराद्वैतवादः।

सर्वज्ञात्ममुनिः जीवन्मुक्तविषये स्थितप्रज्ञविषये वा मण्डनवचः प्रस्थानान्तरमिति प्रतिपादयति—"तद्ध्यन्यथा प्रस्थितम्" इति विश्ववेदव्याख्यायामपि "मण्डनमिश्रस्य तु प्रस्थानान्तरत्वात् तदीयं वचो यथाश्रुतमेवास्तु"[1]। वेदानन्दव्याख्यायामपि "अयमेव न्यायो वार्तिकादिषु नेतव्यः परिहृत्य मण्डनवचः; तस्यान्यथा प्रस्थितत्वात्। सुरेश्ववार्त्तिकेऽपि "अन्ये तु पण्डितमन्याः" इति कथनेन सिद्धान्तभेदमूलकमनैक्यमेव।

"तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः"

इति श्रुतिव्याख्याप्रसङ्गे भर्तृप्रपञ्चमतमुपन्यस्य तन्निरासानन्तरम्—

"अन्ये तु पण्डितमन्याः सम्प्रदायानुसारतः।
विज्ञायेति वचः श्रौतमिदं व्याचक्षतेऽन्यथा॥
तत्त्वमस्यादिवाक्योत्थविज्ञानेन यथोदितम्।
विज्ञायेति वस्त्वसंसर्गिप्रज्ञां कुर्वीत यत्नतः॥"

( पृ० १८५२–७२६ )

इत्यत्र आनन्दगिरिणोक्तं यत् मण्डनमतमुत्थाप्य वार्त्तिके तन्मतं निरस्यति इति मण्डनसुरेश्वरयोः सिद्धान्तभेदः वर्तते। यद्यपि अनन्तशास्त्रिमहोदयः एतस्य अन्यथा समर्थनं प्रदर्शयति तथापि तत्र स्फुटार्थप्रतिपादकस्य वचनस्यान्यथोन्नयनं तदाग्रहमेव सूचयति।

शास्त्रिपादास्तु कथयन्ति—"तत्र प्रभाकरमण्डन-ब्रह्मदत्त-भर्तृप्रपञ्च-सुरेश्वर-कुमारिलानां सर्वेषां परस्परं भगवत्पादकालिकानाम्, भगवत्पादानां च प्रभाकरेण साकं वादः कश्चनासीत्, यत्र मण्डन-ब्रह्मदत्त-भर्तृप्रपञ्च-वार्तिककारा एकमता आसन्।

अतो ज्ञायते—प्रभाकरोऽपि पराजितोऽद्वैतसिद्धान्तं कर्मसंन्याससाधुतापक्षमपि स्वीकरोति स्मेति[2]।

न्यायरत्नदीपावल्यां मण्डनविश्वरूपयोर्भेदः सुरेश्वरविश्वरूपयोश्चैक्यं प्रत्यपीपदत्। आनन्दगिरिप्रणीतशङ्करदिग्विजये मण्डनस्य संन्यासग्रहणचर्चा न वर्तते। आनन्दगिरिकृतशङ्करविजये विश्वरूपोऽपरः सुरेश्वरः। विश्वरूप एव मण्डन इति माधवीये सप्तमाध्याये ( श्लोकसंख्या–११३–११८ )।

१. पृ० ५५० ९० ३३।
२. ब्र० भू० पृ० ११०।

गुरुवंशकाव्यमपि शृङ्गगिर्यास्थानपण्डितरचितम्—गृहावस्थायां विश्वरूप एव संन्यासावस्थायां सुरेश्वर इति सिद्धान्तं पोषयति। केचित्तु मण्डन एव विश्वरूप इति वदन्ति। अनन्तानन्दशङ्करविजये विश्वरूप एव सुरेश्वरः निर्दिष्टः।

म० म० अनन्तकृष्णशास्त्रिमहोदयानां विश्लेषणेन एतदवगम्यते यत् मण्डनः विश्वरूपश्च एक एवासावेव संन्यासानन्तरं सुरेश्वराख्यां जगाम।

"भारतीय शास्त्र आ साहित्ये अद्वैतवाद" इत्याख्ये म० म० डा० श्री योगेन्द्रनाथबागचीमहोदयग्रन्थे—शारदामठस्य मठाधीशः विश्वरूपाचार्यः भगवतः शङ्करस्य शिष्य आसीत्। अयं विश्वरूपाचार्यः याज्ञवल्क्यस्मृतेः बालक्रीडानाम्नीं टीकां व्यरचयत्। मिताक्षरायां विज्ञानेश्वरेण लिखितम्—"याज्ञवल्क्यमुनिभाषितं मुहुर्विश्वरूपविकटोक्तिविस्तृतम्"। अयमेव विश्वरूपाचार्यः बृहदारण्यकभाष्यवार्त्तिकमरचयत्। सुरेश्वराचार्यरचितत्वेनैतस्य वार्त्तिकस्य प्रसिद्धिर्वर्तते। सुरेश्वराचार्यश्च विश्वरूपाचार्यः। विद्यारण्यविरचिते—"विवरणप्रमेयसंग्रहे" सुरेश्वराचार्यप्रणीतवार्त्तिकश्लोकस्य विश्वरूपाचार्यप्रणीतत्वेनोद्धारः वर्तते—

आम्रे फलार्थं इत्यादि ह्यापस्तम्बस्मृतेर्वचः।
फलवत्त्वं समाचष्टे नित्यानामपि कर्मणाम्॥

बृ० वा० पृ० १।१।९७

इदं वाक्यं नित्यवाक्यविषयत्वेन वार्त्तिके विश्वरूपाचार्य उदाजहार। ( पराशरमाधवीयभाष्यम् Vol. 1 Part I P. 57 ) ब्रह्मानन्दभारतीकृते "पुरुषार्थप्रबोधे" नैष्कर्म्यसिद्धिग्रन्थस्य प्रणेता सुरेश्वर एव विश्वरूपाचार्य इत्युक्तम्—

इत्येवं नैष्कर्म्यसिद्धौ ब्रह्मांशैर्ब्रह्मवित्तमैः !
श्रीमद्भिर्विश्वरूपाद्यैराचार्यैः करुणार्णवैः॥

पी० पी० काणेमहाशयः स्वरचिते "History of Dharmashastra" इत्याख्ये ग्रन्थे विश्वरूपाचार्यविरचितबालक्रीडायाः वाक्यान्युद्धृत्य भगवतः शङ्कराचार्यस्यानुयायित्वमसाधयत्। अपवर्गार्थं हि पारिव्राज्यं ज्ञानैकसाधनं न तत्र कर्मणां प्रयोजनमित्युक्तमेव।

तत्त्वाग्रहणात्मकेनाविद्योत्थत्वात्प्रपञ्चस्य एवमादिचोद्यानवकाश एव।
तत्त्वेन ब्रह्मणो नान्यद् वस्त्वन्तरमस्तीति ब्रह्मविदां स्थितिः॥

( या० स्मृ० ६६ श्लो० )

आचार्यः सुरेश्वरः "नैष्कर्म्यसिद्धौ" सर्वथा शाङ्करसिद्धान्तमनुसरति। किन्तु, मण्डनमिश्रः "ब्रह्मसिद्धौ" न शाङ्करसिद्धान्तमनुसरति न वा नैष्कर्म्यसिद्धौ प्रतिपादितमनुवदति, अतः मण्डनः सुरेश्वरादभिन्नो नास्ति। न्यायकन्द-

लीटीकायां[1] श्रीधराचार्यः मण्डनमिश्रविरचिता ब्रह्मसिद्धिरिति, एवमेव चित्सुखाचार्यः तत्त्वप्रदीपिकायामपि[2] तथैव कथयति। कुत्रापि सुरेश्वरविरचिता ब्रह्मसिद्धिरिति न प्रतिपादयति। नैष्कर्म्यसिद्धिः, वार्त्तिकम् वा मण्डनस्य इति न कोऽपि आचार्यः स्वीकरोति तस्मादुभयोर्भेदः स्वाभाविकः। संक्षेपशारीरके २।१७४ कारिकायां परिहृत्य मण्डनवचः इति कथयति। एवमेव विद्यारण्यः विवरणप्रमेयसंग्रहे विश्वरूपाचार्यस्य चर्चां करोति, अतः विश्वरूप एव मण्डनः।

प्राध्यापकहिरियण्णामहोदयः स्वकीयनिबन्धे[3] उभयोः पार्थक्यमेव प्रमाणयति। तत्र दार्शनिकसिद्धान्तभेदमवलंब्य शृङ्गेरीमठाध्यक्षाणां विवरणमनुसृत्य च उभयोः भेदं साधु संसाधयति। अनन्तरं म० म० कुप्पुस्वामिशास्त्रिमहोदयोऽपि ब्रह्मसिद्धिभूमिकायां[4] भेदमेव साधयति।

## मण्डनमिश्रस्य शब्दब्रह्मवादः

मण्डनमिश्रः आसीदद्वैतवेदान्ती किन्तु तदीयाद्वैतवादः न ब्रह्माद्वयवादोऽपितु भर्तृहरिसम्मतः शब्दब्रह्माद्वयवादः। स्फोटवादस्य समर्थनार्थं 'स्फोटसिद्धिः' इत्याख्यं ग्रन्थमपि व्यरचयत्। विमुक्तात्मयतिः इष्टसिद्धिग्रन्थे सुरेश्वराचार्यमतमनुसृत्य ब्रह्माद्वैतवादः एव प्रकृताद्वैतवादः न शब्दाद्वैतवादः[5] इति समर्थयति। एतेनापि ज्ञायते मण्डनमिश्रः न सुरेश्वरादभिन्नः।

---

१. न्या० पृ० २१८।

२. तत्त्व० पृ० १४०।

3. Journal of Asiatic Society, April 1923, January 1924.

4. A careful study of Maṇḍana Miśra's Brahmasiddhi in comparison with his other known works, all of which are now available in print, and with the known works of Sureśvara and Śaṁkara ......and a careful consideration of the references to Maṇḍana contained in certaion important works of Mīmānasā, Nyāya, Dvaitavedānta and other systems have made it possible to assemble here several data of overwhelming cumulative weight, which would be quite sufficient to kill the common belief in the Maṇḍana-Sureśvara equation, and to exihibit Maṇḍana and Sureśvara as two different individuals, maintaining strikingly divergent views within the purviews of Advaitism.

( Introduction P. X X VI )

५. तस्मादात्माद्वैतमेव सिद्ध्यति, शब्दाद्वैतं घटाद्वैतं वा। ( इष्टसि० पृ० १७६ )

मण्डनमिश्रस्वीकृतस्य भावाद्वैतवादस्य खण्डनं सुरेश्वराचार्यः बृहदारण्यक-वार्त्तिके युक्तिभिः करोति। एवम् अद्वैतसिद्धौ आचार्यः मधुसूदनोऽपि भावाद्वैत-वादस्य यौक्तिकत्वं प्रतिपाद्यापि खण्डनं करोति। "वस्तुतस्तु अविद्यानिवृत्तेः पञ्चमप्रकारत्वं भावाद्वैतञ्चाभ्युपगमपराहतम्" ( अ० सि० पृ० ४६७ ) एतदपि उभयोः पार्थक्यं समर्थयति।

मण्डनमिश्रस्य चिन्तायां स्वातंत्र्यं वर्तते। शाङ्करभाष्यस्यैकापि पंक्ति-र्नैवोद्धृता तेन। एतेन च ज्ञायते असावासीत् वस्तुतः शङ्करप्रतिद्वन्द्वी सन्नपि अद्वैतवेदान्ती। मण्डनसिद्धान्तस्य अवतारणा प्रकरणपञ्चिकायाम् न्याय-मञ्जर्य्याञ्च द्रष्टव्या। अतः उभयोरभिन्नत्वे प्रमाणं नोपलभ्यते।

मण्डनमिश्ररचिताः ग्रन्थाः—

१. विधिविवेकः।
२. भावनाविवेकः।
३. विभ्रमविवेकः।
४. मीमांसानुक्रमणिका।
५. ब्रह्मसिद्धिः।
६. स्फोटसिद्धिः।

मण्डनसुरेश्वरप्रस्थानयोः सिद्धान्तभेदः—

| मण्डनमिश्रप्रस्थानम् | सुरेश्वरप्रस्थानम् |
| --- | --- |
| १—मण्डनमिश्रः स्फोटवादं स्वीकृत्य शब्दब्रह्मवादस्य समर्थनं कृतवान्। | १—शङ्कराचार्यः सुरेश्वराचार्यश्च स्फोटवादं नैव स्वीकुरुतः। ब्रह्माद्वैतवादमङ्गीकृत्य शब्दब्रह्म-वादस्य स्फोटवादस्य च खण्डनं कुरुतः। |
| २—मण्डनमिश्रस्य भावाद्वैतवादः तन्मते ब्रह्मव्यतिरिक्तोऽपरो भाव-पदार्थः नास्ति। सत्यपि ब्रह्मज्ञाने प्रपञ्चस्य अविद्यायाश्च अभावस्या-स्तित्वं तत्कालेऽपि वर्तते एव। विज्ञानात्मनो ब्रह्मणोऽस्थूल-त्वादिरिव दुःखाभावोप्युपाधिवि-शेषः इति ब्रह्मणोऽभावरूपत्वम्, इति तद्व्यतिरेकेण भावरूपद्वैता-भावः एवाद्वैतवादः इति भावाद्वैत-मतम्। | २—शङ्करस्य सुरेश्वरस्य च मते अवि-द्यानिवृत्तिः ब्रह्मस्वरूपा ब्रह्मव्य-तिरिक्तः न भावपदार्थः नाभाव-पदार्थः तिष्ठति। ब्रह्माद्वैतवाद एव वर्तते। |

३—मण्डनमते अविद्यायाः आश्रयः जीवः विषयः ब्रह्म। वाचस्पतिरपि मण्डनमिश्रमतमेव स्वीकरोति।

३—शङ्करसुरेश्वरयोर्मते आश्रयविषयौ ब्रह्म एव। पद्मपादः प्रकाशात्मयतिरपि एतन्मतमेव स्वीकरोति।

४—मण्डनमते अग्रहणान्यथाग्रहणभेदेन अविद्यायाः द्वैविध्यम्।

४—सुरेश्वराचार्यः वार्त्तिके एतन्मतस्य खण्डनं करोति।

५—भ्रमज्ञानव्याख्यायामयं भट्टसम्मतां विपरीतख्यातिं समर्थयति।

५—सुरेश्वरः विपरीतख्यातिं नैव स्वीकरोति।

६—वेदान्तश्रवणजन्यं ज्ञानं परोक्षात्मकम्, शब्दजन्यं ज्ञानं प्रत्यक्षात्मकं न भवति, मनननिदिध्यासनानन्तरं मनसा प्रत्यक्षात्मकं ब्रह्मज्ञानं जायते।

६—एतन्मते शब्दजन्यमपरोक्षात्मकं ज्ञानं जायते।

७—मण्डनः प्रतिबिम्बवादी।

७—सुरेश्वरः आभासवादी

८—मण्डनमते दृष्टिसृष्टिवादः।

८—सुरेश्वरमते जगतः व्यावहारिकसत्यत्वम्।

९—जीववन्मुक्तिर्नास्ति।

९—जीवन्मुक्तिर्वर्तते।

## विधिस्वरूपे विभिन्नदार्शनिकदृष्टिः

**"स्वर्गकामोऽश्वमेधेन यजेत"** इत्यादिवाक्यस्थं यजेत इति पदं लिङ्बोधकप्रत्ययघटितम्। यज्धातोः लिङ्प्रत्यये सति यजेत इति। अत्र यज+इत यजेत इत्यत्र इतइति लिङर्थबोधकः प्रत्ययः। लिङ्प्रत्ययः विधिप्रत्ययः। विधिप्रत्ययस्यार्थश्चात्र आप्ताभिप्रायः। आप्ताभिप्रायो नाम वेदवक्तृपुरुषाभिप्रायः। आचार्यस्य मते आप्ताभिप्राय एव विधिप्रत्ययस्यार्थः। प्रथमतः वेदः अल्पज्ञजीवोच्चरितो न भवितुमर्हतीत्यवधारितम्। आप्ताभिप्रायार्थकविधिप्रत्ययेन यस्यायमभिप्रायोऽनुमितो भवति स एव ईश्वरः। अनुमानाकारः—(पक्षः) वैदिकविधिप्रत्ययः (साध्यम्) आप्ताभिप्रायबोधकः (हेतुः) विधिप्रत्ययत्वात्।

आचार्यः पाणिनिः विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् इति सूत्रेण विध्यादिष्वर्थेषु लिङः विधानं करोति। प्रवर्तनात्वस्य विध्यादिषु चतुर्षु अनुस्यूतत्वात् तेन रूपेण प्रवर्तना एव लिङर्थः। प्रवृत्त्यनुकूलः व्यापारः

प्रवर्त्तना। प्रवृत्तिः शिष्यादिनिष्ठा। तदनुकूलव्यापारस्तु प्रेरणात्मकः प्रवर्तयितृगुर्वादिनिष्ठः।

प्राभाकरमते विधिप्रत्ययस्यार्थः नियोगः। नियोगशब्दः कर्तृवाच्ये घञ्प्रत्यये निष्पन्नो भवति—नियुङ्क्ते इति नियोगः। नियोगः नियोज्यं पुरुषं नियोगस्य सिद्धये नियोगविषये नियुक्तं करोति—"स्वसिद्धये नियोज्यं स्वविषये नियुञ्जानः नियोग" इति। कार्य्यम् अपूर्वम् इत्यादयः शब्दाः नियोगशब्दस्य समानार्थकाः। नियोगः स्वसिद्धये पुरुषं नियुञ्जानः नियोग इत्यभिधीयते[1]। नियोगस्य अपरं नाम कार्य्यं, कार्य्यं हि कर्तुः कृतिसाध्यमर्थात् कर्तुः कृतेरुद्देश्यम्। कृतिसाध्यत्वादेव कार्य्यमित्युच्यते। कार्य्यमेव स्वसिद्धये नियोज्यपुरुषस्य नियोगं करोतीति नियोगनाम्नाभिधीयते। अत एव "स्वसिद्धये स्वात्मनि नियुञ्जानं नियोग" इति। विधिवाक्यश्रवणानन्तरं यः पुरुषः इदं मत्कार्य्यमित्यवगच्छति स एव नियोज्यः। स्वर्गकामो यजेत (आपस्तम्बगौतमसू० १०।२।८) इति वाक्ये साध्यस्वर्गकामनावान् पुरुष एव स्वर्गकामः। स्वर्गकामनावान् पुरुषः तादृशकर्मण्येव नियोज्यो भवति यद्धि कार्यं स्वर्गकामनावतः पुरुषस्य काम्यस्वर्गस्य साधकं भवितुमर्हति।

काम्यस्वर्गफलाव्यवहितप्राक्काले विद्यमानं वस्तु एव स्वर्गफलस्य साधनं भवितुमर्हति। यागक्रिया च क्षणविनाशिनीति कालान्तरभाविनः स्वर्गफलस्य अव्यवहितप्राक्क्षणे न विद्यते इति यागरूपक्रिया कार्यरूपे स्वर्गकामरूपनियोज्येन सह अन्विता न स्यात्। यत् काम्यफलस्य साधनं नास्ति तादृशकार्ये कदापि स्वर्गकामः पुरुषः नियोज्यरूपेणान्वितो न भवितुमर्हति। अत एव "स्वर्गकामो यजेत" इत्यत्र यागक्रियातिरिक्तं प्रमाणान्तरावेद्यं कार्यमेव लिङादिप्रत्ययेन अभिधीयते। तादृशकार्यस्यैवाभिधायकः लिङादिविधिप्रत्ययो भवति यद्धि कार्यमेतद्वाक्यातिरिक्तेन केनापि प्रमाणेन विदितं न भवति। प्रमाणान्तरावेद्यत्वादेव अपूर्वमिदम् इति जेगीयते। कार्यस्य विषय एव करणम्। कार्यस्य स्वरूपप्रतीतौ यत् विषयरूपेण भासते तदेव कार्यस्य स्वरूपनिवर्त्तकरूपे करणरूपेण भासते। कार्यप्रतीतौ यद्धि विषयरूपेणापेक्षितं तदेव कार्योत्पत्तौ करणं भवति। कार्यं कृतिघटितशरीरम्। कृतिसाध्यमेवं कृतिं प्रति प्रधानीभूतमेव कार्यम्। ज्ञानं यथा नियतं सविषयकम् तथैव कृतिरपि नियतसविषयिका। तथा च कार्यस्य प्रतीतौ कृतेर्विषयस्यापेक्षा वर्तते। विषयमन्तरा कृतेः प्रतीतिरेव न स्यात्। उत्पत्तिक्रिया सकरणिकैव। करणं विना क्रिया न भवितुमर्हति। धात्वर्थरूपकरणेन नियोज्यपुरुषरूपः कर्ता कार्यस्योत्पादको भवति। कार्यमुत्प-

१. पुरुषं नियुञ्जानः नियोग इति व्यपदिश्यते।—न्यायक० पृ० ५३

द्यमानमर्थात् निर्वर्त्यम्, कार्यस्य निर्वर्तयिता नियोज्य एवं करणं धात्वर्थः। यस्य पूर्वं कार्यस्य विषयरूपेण प्रतीतिस्तस्यैव कार्यस्य उत्पत्तौ करणरूपेण प्रतीतिः। प्रथमतः नियोज्यपुरुषस्य समीपे विधिवाक्येन प्रतीतिरनन्तरं नियोज्यरूपकर्तृपुरुषेण कार्यं निर्वर्त्यं—निष्पाद्यं स्यात्।

कृतिसाध्यं वस्त्वेव कार्यं तस्मात् कृतेर्ज्ञानं विना कार्यस्य ज्ञानं न सम्भवति। यद्धि कृतिसाध्यं कृतिं प्रति प्रधानीभूतन्तदेव कार्यम्। यद्वस्तु उद्दिश्य कृतिर्जायते तदेव कृतिं प्रति प्रधानीभूतम्, नियोज्यरूपकर्तृपुरुषस्य कृतिः कार्यस्य सिद्धयुद्देश्येन प्रवर्तते। कृतिर्हि चेतनस्य आत्मनः गुणः। चेतन एव नियोज्यो भवति। यत्र कार्ये चेतनः पुरुषः अप्रधानरूपेण प्रतीयते तदेव कार्यम्। कार्यस्य स्वरूपसिद्धयर्थमेव चेतनः प्रयत्नवान् भवति। कार्यं हि कृतेरुद्देश्यमिति कार्यं प्रधानम् अत्र कृतिरप्रधाना एवं कृत्याश्रयः पुरुषोऽपि अप्रधानभूतः। ज्ञानं यथा सविषयकं तथैव कृतरपि नित्यं सविषयिका। विषयमन्तरेण कृतेः स्वरूप-निरूपणं न भवितुमर्हति। कृतेः विषयः पुरुषव्यापारः—चेष्टा, यागः दानं, होमादिकम्। क्रियाविषयिणी कृतिः अपूर्वाख्यकार्यमुद्दिश्य प्रवर्तते। तथा च नियोज्यपुरुषस्य कृत्या अपूर्वं सिध्यति। यागादिविषयिणी या कृतिस्तया-कृतिसाध्यं कृतिं प्रति प्रधानीभूतमपूर्वं कार्यं जायते। कार्यं कृतिं विना न सम्भवति, कृतिश्च क्रियां विना न सम्भवति इति कृतिः क्रियाविषयिणी। तथा अनया कृतिप्रणाल्या यजेत इति कथिते यागविषयकं कार्यमित्यर्थोऽवगम्यते। विपूर्वकस्य बन्धनार्थक "षिञ्" धातोः अच्प्रत्यये विषयः। विषिण्वन्ति विष-यिणं बध्नन्ति स्वेन रूपेण निरूपणीयं कुर्वन्तीति विषयाः। ज्ञानादीनां विषयः विषयिणं ज्ञानं वध्नाति। विषयनिरूपणाधीनमेव ज्ञानं निरूपणीयं भवति। घटादिविषयः स्वविषयकं ज्ञानमितरविषयकज्ञानात् व्यावर्तयति अत एव घटादिः ज्ञानस्य विषयः जायते। एवमेव कार्यमपि इतरकार्याद्व्यावर्तयति इति धात्वर्थरूपक्रिया कार्यस्य बन्धनकारिका। कृतिः क्रियाभिन्ननिरूपिता न भवति। धात्वर्थ एव क्रिया। धात्वर्थरूपक्रियाविषयककृत्या लिङर्थकार्यस्य निष्पत्तिर्भवति। यागविषयकं कार्यमित्यत्र धात्वर्थक्रिया यागलिङर्थकार्यस्य बन्धनं व्यवच्छेदकं विशेषणं वा भवतीति कार्यस्य विषयो जायते। **स्वर्गकामो यजेत** एतादृशवाक्यस्य यथा नियोज्यः स्वर्गकामनावान् पुरुषः तथैव लिङर्थ-कार्ये एव पुरुषः नियोज्यरूपेणान्वित इति कार्यरूपः लिङर्थः नियोज्यपुरुषकाम्यस्य स्वर्गस्य साधनं भवतीति। कार्यं लिङर्थं एव नियोज्यकाम्यस्य स्वर्गस्य साधनम्। तथा च लिङर्थकार्यविषयः धात्वर्थक्रिया नियोज्यपुरुषकाम्यफलस्य साधनम्।

अत्रेयमाशङ्का यत् लिङर्थः कार्यं नियोज्यपुरुषस्य यत्काम्यं फलन्तस्य साधनमत एव नियोज्यः पुरुषः लिङर्थकार्यस्य सिद्धयर्थं प्रवृत्तो भवति। लिङर्थः

कार्यं यदि नियोज्यपुरुवस्य यत्काम्यं फलन्तस्य साधनं न स्यात् तदा नियोज्यः पुरुषः कदापि लिङर्थकार्यस्य सिद्धयर्थं प्रवृत्तो न स्यात्। तस्मात् गुरुमते कार्यं नियोज्यपुरुषस्य काम्यफलस्य साधनम्। तथा च कार्यं फलस्य जनकमिति कार्यमप्रधानं फलञ्च प्रधानम्। विधिवाक्ये कार्यस्यैव मुख्यविशेष्यत्वमित्यपि न संघटते, यतः अप्रधानभूतं कार्यं मुख्यं विशेष्यं न भवितुमर्हतीति कार्यस्यैव समस्तवाक्यप्रधानीभूतत्वं न संगच्छते।

अत्र गुरुमतानुयायिनः कथयन्ति—कार्यं स्वसिद्धयर्थमेव नियोज्यं नियुनक्ति। तथा च कार्य्यं नियोगो वा स्वसिद्धयनुकूलनियोज्यप्राप्त्यर्थमेव फलसाधनतामात्मनि स्वीकरोति न तु फलसिद्धयर्थं फलसाधनतां स्वीकरोति। कार्य्यं स्वसिद्धयर्थमेव नियोज्यं प्रेरयति नियोज्योऽपि काम्यफलस्य असाधने नैव प्रवृत्तो भवतीति नियोगः कार्य्यं वा नियोज्यपुरुषकाम्यफलसाधनतां स्वीकरोति फलतः कार्य्यं स्वसिद्धयनुकूलनियोज्यपुरुषलाभार्थं नियोज्यपुरुषस्य यत्काम्यं फलन्तस्य साधनं भवतीति कार्य्यस्य नियोगस्य वा प्राधान्यस्य हानिर्न जायते।

शब्देन विधेर्ज्ञानमनायासेनैव सर्वेषां यदि जायते तदा साधनत्वेन ज्ञाते कर्मणि प्रवृत्तौ सत्यां निष्पादितक्रिये कार्ये साधनस्य अनुपपत्तिरेव स्यात, शब्दात्प्रसिद्धस्य प्रतिपादनं वृथैव भवति इति शब्देन विज्ञातं वस्तु नैव ज़िज्ञासितं भवति। विधिश्च सर्वथाऽप्रसिद्धस्तदा अप्रसिद्धत्वादेव वेदार्थतया प्रतिपाद्यः न स्यात्। विधिः शब्देन अवगम्यते इति प्रसिद्ध एव तथापि विधौ वर्तन्ते दार्शनिकानां काश्चन विप्रतिपत्तिय इति संशयापन्नः विधिः जिज्ञासितो भवति। तत्र सतीषु वह्वीषु विप्रतिपत्तिपु इयं हि विमतिर्जायते लिङादिः लडादिरूपादन्यशब्दात् भिद्यते इति शब्दभेद एव विधिः। यथा अयस्कान्तमणिस्वरूपे वस्तुनि अस्त्येव स्वस्वभावजन्यः तादृशः कश्चिदतिशयः यद्वशात् अतचेतनं लौहं प्रवर्त्तयति तथैव लिङादावपि तादृशोऽतिशयः कश्चिद् वर्तते यद्वशात् चेतनं पुरुषं कर्मणि प्रवर्त्तयति। लिङादेर्व्यापारातिशयो वा चेतनस्य प्रवृत्तिकारणं स्वीक्रियते किम्वा शब्दभेदवदर्थभेद एव विधिरभ्युपेयते। यद्यप्यत्रेयं शङ्कोदेति यत् अर्थभेदस्य विधित्वे शब्दे विधिव्यवहारः कथमिव स्यात्, दृश्यते च शब्देऽपि विधिव्यवहारः। यथा—"चोदनेति क्रियायाः प्रवर्त्तकं वचनम्" इति, "विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः" इति च उभयत्रापि शब्दे एव विधिशब्दव्यवहारः दृश्यते नार्थे। चोदनेतिशब्दस्यैव क्रियायाः प्रवर्त्तकत्वं प्रतिपादितम् तथैव एकवाक्यता च वाक्यरूपेण शब्देन वाक्यान्तरस्य शब्दस्याभिहितम्। सत्यम्, परमियमाशङ्का नैव दुष्परिहरा। विध्यर्थाभिधायके शब्देऽपि विधिशब्दव्यवहारो भवति।

मण्डनमिश्रस्य मते इष्टसाधनत्वमेव विध्यर्थः। कृतिसाध्यत्वं हि लोकादेव अवगम्यत इति न तत्र विध्यपेक्षा। यागो मत्कृतिसाध्यः, मत्कृतिसाध्यविरोधिधर्मानधिकरणत्वात् इत्यनुमानेनैव कृतिसाध्यत्वस्य लाभात्, तथा च कृतिसाध्यत्वज्ञानस्य प्रवर्त्तकत्वेऽपि "अनन्यलभ्यो हि शब्दार्थः" इति न्यायेन प्रदर्शितरीत्या अनुमानेनैव कृतिसाध्यत्वज्ञानस्य प्रवर्तकत्वलाभात् न तत्र विधेः शक्तिरस्ति। स्वर्गादीनामिष्टसाधनत्वन्तु प्रमाणान्तरेणावगन्तुं न शक्यतेऽपि तु आम्नायवाक्यादेव तदवगम्यते इत्यनन्यलभ्यत्वात्तत्र विधेः शक्तिः स्वीक्रियते। केचित्तु "अनन्यलभ्यो हि शब्दार्थः" इति न्यायस्य तत्रैव प्रवृत्तिः यत्र पदान्तरलभ्योऽर्थः भवति—पदान्तरलभ्ये हि अर्थे पदस्य शक्तिः न भवति, अन्यथा कुत्रापि शक्तिर्न सिद्ध्येत् सर्वस्यैवार्थस्य शब्दातिरिक्तप्रमाणान्तरवेद्यत्वात्। अनन्यलभ्यन्यायेन प्रदर्शितरीत्या कृतिसाध्यत्वे विध्यर्थनिषेधास्वीकारेऽपि कृतिसाध्यत्वज्ञानं न प्रवर्त्तकं, कृत्यसाध्यत्वेन निश्चिते प्रवृत्तिस्तु न जायते। कृत्यसाध्ये इष्टाभावेन वृथा श्रमजनकत्वेन द्वेषादेव प्रवृत्तेरभावात्। यद्यपि प्रदर्शितरीत्या कृतिसाध्यत्वज्ञानं प्रवर्तकं न भवेत् तथापि कृतिसाध्यत्वज्ञानं विना कृतिसाध्यत्वप्रकारिकेच्छात्मिका या चिकीर्षा सा नैव जायते। चिकीर्षाया अभावे च प्रवृत्तिरपि नैव स्यादिति कृतिसाध्यत्वज्ञानस्य प्रवर्तकत्वमावश्यकम्। लोकव्यवहारादेव तस्यानुगमात् चिकीर्षोपपत्तेः चिकीर्षानुरोधेन कृतिसाध्यत्वे शक्तिकल्पनमनावश्यकम्।

अत्रेयमाशङ्का भवति—अनिष्टजनके उदासीने च कर्मणि वृथा श्रमजनकतया द्वेषादेव प्रवृत्तिर्न स्यात् तथा च इष्टसाधनत्वज्ञानस्य विध्यर्थत्वाभावेऽपि इष्टसाधने एव कर्मणि प्रवृत्तिः स्यान्नान्यत्र। इष्टसाधनताज्ञानस्य प्रवृत्तिहेतुत्वाभावे इष्टाजनके कर्मणि यत्र आन्तरालिकश्रमो वर्तते तत्र द्वेषाभावसत्वेऽपि प्रवृत्तिर्न भवतीति सकलजनसम्मतोऽयं विषयः, इदानीमिष्टसाधनत्वज्ञानस्य प्रवृत्तिहेतुत्वानभ्युपगमेऽत्र प्रवृत्तिर्दुर्निवारा स्यात् इष्टसाधनत्वज्ञानस्य प्रवृत्तिहेतुत्वाभ्युपगमे तु प्रदर्शितस्थले इष्टसाधनत्वात्मकस्य प्रवृत्तिहेतुत्वस्याभावादेव प्रवृत्तिर्न भवतीति सर्वं सुसमञ्जसम्। इष्टसाधनत्वज्ञानस्य प्रवृत्तिहेतुत्वञ्च न मदंशरहितस्यापि तु मदिष्टसाधनमितिज्ञानस्यैव प्रवृत्तिहेतुत्वमभ्युपगन्तव्यम् अन्यथा मदंशस्य विधिवाक्यादलाभेन मदिष्टसाधनेऽपि यागादौ प्रवृत्तेरनुदयात्।

अयमाशयः—लिङादिप्रत्ययेभ्यः प्रवर्त्तना प्रतीयते। सर्वापि चेष्टा मानसिकी भवतु कायिकी वा प्रयत्नपूर्विकैव भवति। प्रयत्नो हि रागपूर्वक एव, विना रागं न कस्मिंश्चिदपि कार्ये प्रेक्षावतां प्रवृत्तिर्भवति। रागो हि नैव दुःखे नाप्यसुखे अपि तु सुखानुशयी राग इति सुखे सुखसाधने वा रागो भवति दुःखे

द्वेषादेव रागो न असुखदुःखे च उपेक्षणाच्च न रागः। सुखस्य चान्येच्छानधीनेच्छाविषयत्वमिति सर्वानुभवसिद्धम्। क्रिया च दुःखात्मिका इत्यत्र नास्ति केषामपि सचेतसां विमतिः लोकानुभवसिद्धत्वात्। क्रियायां लोकाः प्रवर्त्तन्ते इत्यवश्यमेव क्रियायां सुखसाधनत्वमवगन्तव्यम् अन्यथा सुखार्थिनस्तत्र नैव प्रवर्तेरन् वैदिकक्रियाश्च नैव साक्षात् सुखसाधिका इति प्रेक्षावतां वैदिकव्यापारोपरमप्रसङ्गः समापतति इति दुःखरूपास्वपि क्रियासु सुखसाधनत्वमवश्यमेवाभ्युपगन्तव्यम्। सुखसाधनतैवेच्छोपहारमुखेन सुखोपायत्वात् क्रियासु प्रवर्त्तयितुमीशते। यदि शब्दः सुखसाधनतां न प्रतिपादयेत् तदा न कोऽपि क्रियायां पुरुषं प्रवर्त्तयेत्। लिङा शब्देन इष्टसाधनतामात्रमभ्युपगम्यत इति कथमिवास्मात् प्रवर्त्तनायाः प्रतीतिः स्यात्। प्रवृत्तिसमर्थस्तावत्कश्चिद्भावातिशयो व्यापार एव प्रवर्त्तना[1]। एतन्मते केवलं परिस्पन्दनमेव व्यापारशब्देन नोच्यते येन परिस्पन्दनातिरिक्तत्वेन व्यापारशब्दस्य प्रयोगो न भवेत्। तस्मादिष्टसाधनत्वस्य परिस्पन्दनातिरिक्तत्वेन अप्रवर्तनात्मत्वं स्यात्, भावधर्म एवं कश्चित्समीहितसाधनानुगुणो व्यापारपदार्थः। यथा कश्चित् ज्ञानजनने प्रवृत्तो भवति तदा भावधर्मः नैव सामान्यतः परिस्पन्दः भवति अपि तु मनःसंयोग एवायं भावधर्मः तथैव स्पन्देतरः इष्टसाधनत्वाख्यः भावधर्म एव प्रवृत्तिजननेऽनुकूलतया व्यापारविशेषः प्रवर्तना। शब्दः तद्भावना वात्र न भवति प्रवर्तना यतः न अपेक्षितोपायत्वप्रतिपादनं विना कोऽपि क्रियासु प्रवर्तते[1]। अत्रेयमाशङ्का जागर्ति यत् राज्ञः सेवकः यत्र यत्र कर्मणि प्रवर्तते तत्र सर्वत्रापेक्षितोपायत्वनिबन्धनैव प्रवृत्तिर्भवतीति वक्तुं न शक्यते, राजाज्ञया अनपेक्षितोपायेऽपि प्रेक्षावतां राजसेवकानां प्रवृत्तिर्दृश्यते, इति अपेक्षितोपायतां प्रतिपाद्यैव क्रियासु प्रवृत्तिरिति सैव प्रवर्तना इति न सार्वत्रिकः प्रवृत्तिहेतुः। सत्यम्, भवति आज्ञादिभ्यः प्रवृत्तिः क्रियायां तथापि केनापि रूपेणापेक्षितोपायनिबन्धनतामाश्रित्यैव सा प्रवृत्तिर्जायते। यद्यपि यत्र आज्ञादिना कस्यांश्चित्क्रियायां प्रवृत्तिर्भवति तत्र नियोक्तुरेव अर्थकर्मणि इति नियोक्तुरेवापेक्षितोपायनिबन्धना आज्ञादयो वर्तन्ते तथापि नियोज्यस्य पुरुषस्य या तद्विषयसम्पादने प्रवृत्तिर्भवति सा नियोज्यापेक्षितनिबन्धनैव भवति। यतः नियोज्यः प्रेक्षावान् आज्ञाद्यनन्तरं मनसि परिकल्पयति एतत्कार्यसम्पादनानन्तरं कार्यसम्पादनेन सम्यक्तोषितः ममाज्ञापयिता अभीष्टं मह्यं प्रयच्छेत् ममाहितं वा न विदध्यात् इति समीहितलाभरूपमहितविनिवृत्तिरूपं वा अपेक्षितमुपाश्रित्यैव भृत्यस्य नियोज्यस्य स्वनियोक्तुराज्ञाविषयसम्पादने प्रवृत्तिर्भवति नान्यथात एव यः पुरुषः यस्य

---

१. प्रवृत्तिहेतुं धर्मं च प्रवदन्ति प्रवर्त्तनाम्। वि० वि० पृ०—२४३

हितप्राप्तौ अहितपरिहारे वा नैव यत्नं विधत्ते तस्य आज्ञामपि नैवासौ नियोज्यः अनुरुणद्धि इति अकामेनापि एतत्स्वीकर्तव्यं यत् नियोक्त्रर्थसमुद्देशेन नियोज्यस्य प्रवृतिरानुषङ्गिकी आज्ञाविषयस्य स्वापेक्षितत्वादेव प्रवृत्तिरिति लिङादिभ्यः प्रवर्त्तनावगतिर्नानुपपन्ना।

केचन वेदं प्रति अतिशयश्रद्धावन्तः इदं मम कर्तव्यमिति ज्ञानानन्तरमेव प्रवृत्तिरित्यवोचन्। कस्यचित्कर्मणः दर्शनोत्तरं कर्त्तव्यतामेव प्रवृत्तिहेतुत्वे-नावगच्छन्ति। स्तनन्धयस्य बालस्य या तावदादौ प्रवृत्तिर्भवति सापि न समी-हितोपाय इत्येतावतैवापि तु कर्तव्यमेतदिति। तस्मात् कर्तव्यतैव प्रवृत्तिहेतुरिति लिङादिश्रवणानन्तरा प्रवृत्तिः कर्तव्यताभिधानमेव लिङादीनां संसाधयति। लौकिकवचनं हि न निरपेक्षं प्रवृत्तिजनकं भवत्यपि तु प्रमाणान्तरापेक्षम् अपेक्षितोपायप्रतीतिपुरस्सरमेव। क्रिया हि दुःखरूपा, तथा च दुःखरूपायां क्रियायां प्रवृत्तिर्न स्वाभाविकी नापि केवलं कर्तव्यत्वज्ञानसापेक्षा परमियं हि प्रमाणा-न्तरापेक्षैव प्रवृत्तिरिति दुःखरूपक्रियाकर्तव्यतावगतेरपेक्षितोपायतां तत्प्रमाण-भूतामन्तर्भाव्य कर्तव्यतावगतिः। वेदो हि अपौरुषेय इति निरपेक्षत्वात् न स्वार्थे प्रमाणान्तरमपेक्षत इति अपेक्षितोपायतावगतेरपेक्षा तत्र न जायते तथा च अपेक्षितोपायतावगमनिरपेक्ष एव कर्तव्यतावगमहेतुः। कर्तव्यता हि वेदे लिङादि-प्रयोगेनाभिधीयते। यथा लोके लिङादिश्रवणान्तरा प्रवृत्तिः कर्तव्यताभिधान-मेव लिङादीनामापादयति। अवगतसङ्गतितया लिङादयो वेदेऽपि कर्तव्यता-मेवाभिदधते। वेदे लिङादिनाऽवगम्यमाना कर्तव्यता अनुष्ठानकर्तारमधिकारिणं नियोज्यं पुरुषमपेक्षते। तत्र कश्चिद्विधिः साध्यः यथा—**स्वर्गकामो यजेत**। अत्र यदा नियोज्यः साध्यविशिष्टस्तदा साध्यविवृद्धिर्भवति। यत्र तु नियोज्यः निमित्तवान् यथा '**यावज्जीवमग्निहोत्रं जुहुयात्**' तत्र भावविषयं कार्यं हित-साधनतावगमनिरपेक्षोऽपि अवगमयन्प्रवृत्तिं जनयति। यत्र वा '**न कलञ्जं भक्षयेदिति**' तत्र भगवानाम्नाय एव निरस्ताखिलदोषाशङ्कोऽहितसाधनताव-गमनिरपेक्ष एव नञर्थविषयं कार्यमवगमयन् निवृत्तिं विधत्ते इति अपेक्षितोपाय-तायाः प्रवृत्तिं प्रति साधनत्वस्वीकारे न किमपि फलम्।

एतस्य पूर्वप्रदर्शितस्य शङ्काग्रन्थस्य समाधाने न्यायकणिकायामेतदभिहितं यत् अपेक्षितोपायताम्—इष्टसाधनत्वमन्तरेण कर्तव्यमिति शतशोऽभिधीय-मानमपि न कार्यप्रवृत्तये समर्थो भवति। शब्दो हि कर्तव्यतायां विदितसंगति-रवश्यमेवापेक्षितोपायतामवगमयति, अपेक्षितोपायतावशादेवानुष्ठाने प्रवृत्तिर्भवति, अर्थात् इष्टसाधनत्वादेव प्रमाणान्तरानपेक्षादाम्नायादवगता कर्तव्यता अनुष्ठान-

१. सा च क्रियाणामपेक्षितोपायतैव। वि० वि० पृ०—२४३

माक्षिपति। एवमेव नैमित्तकविधौ च प्रतीयमाना अपेक्षितोपायसाधनता न शक्या नेति वक्तुम्। कर्तव्यताज्ञानस्य हि अपेक्षितोपायनान्तरीयकत्वात् कर्तव्यताज्ञानस्य प्रवृत्तिजनकत्वेऽपेक्षितोपायत्वज्ञानस्यैव प्रवृत्तिजनकत्वं सेत्स्यति। अन्यथा कर्तव्यमिति प्रतिपद्यमानोऽपि कथं तत्र प्रवर्त्तते[1]। तस्मादीप्सितस्योपायतैव कर्तृप्रवृत्तिहेतुः।

अत्र पूर्वपक्षिणा एतदुच्यते यत् कर्तव्यताऽवगमादेव कर्त्ता कर्मणि प्रवर्त्तते इति कर्त्तव्यतैव प्रवृत्तिहेतुरस्तु। इयं कर्तव्यता का? न निरालम्बनं ज्ञानं भवति। किमपि विषयमवलम्ब्यैव ज्ञानं भवति निरालम्बनं ज्ञानं च न भवति इति कर्तुरीप्सितोपायतैव प्रवृत्तिहेतुः कर्तव्यताज्ञानस्यालम्बनम्। कृतिव्याप्यतागोचरं कर्तव्यत्वज्ञानन्तद्विपरीततागोचरं हि अकर्तव्यत्वज्ञानमिति तत्कथं समीहितसाधनत्वमेवं तद्विपरीतसाधनत्वं गोचरयितुमर्हति? कर्तव्यत्वसमीहितसाधनत्वयोस्तादात्म्यं नास्ति यतः एकस्य सिद्धत्वादपरस्य च साध्यत्वात् दहनतुहिनवदुभयोः स्वभावविरुद्धत्वात्। यथा शुक्लः प्रत्यय इत्यत्र शुक्ल एवार्थः प्रत्ययेऽन्वेति इति शुक्ल एव शुक्लप्रत्ययस्य विषयो भवति समीहितोपायतां तद्विपरीततां चानुयातौ कर्तव्यमकर्तव्यमिति प्रत्ययौ प्रवृत्तिनिवृत्तिहेतू लौकिकानाम्। तथा च अपेक्षितोपायतासत्त्वे कर्तव्यत्वप्रत्ययः अपेक्षितोपायताभावे चाकर्तव्यत्वप्रत्ययः। कृतिसाध्यतामात्रं कर्तव्यता, परं कृतिसाध्यतामात्रं नैव प्रवृत्तिकारणं समीहितस्यापि कर्तव्यतया समीहितस्यापि प्रवृत्तिहेतुत्वप्रसङ्गात्। फलं हि कर्तव्यस्य कृतिसाध्यस्य सुखं सुखसाधन प्रवृत्तिगोचरः स्यादेवेति कर्तव्यतायाः प्रवृत्तिगोचरत्वं स्यादेव। सत्यम्, साधनत्वं प्रवृत्तिहेतुः न तु कर्तव्यतामात्रमपि तु कर्तुरिष्टसाधनं प्रवृत्तिकारणम्। तथा च कर्तव्यतैकार्थसमवायिनी समीहितसाधनता प्रवृत्तिहेतुः सैव च कर्तव्यताज्ञानस्यालम्बनमभिमता। यद्युच्यते कर्तव्यतामात्रोपयोगिनी या समीहितसाधनता वर्तते सा नैव प्रवृत्तिहेतुः। स्वीक्रियतेऽपि तु कर्तव्यतैव प्रवृत्तिहेतुर्भवति। सा च कर्तव्यता क्वचित्साधनतयाऽवगम्यते क्वचिच्च सा कर्तव्यता शब्दतः कृतिसाध्यत्वेन रूपेण प्रवृत्तिहेतुर्भवति। तथा चासत्यामपि समीहितसाधनतायां कृतिसाध्यत्वरूपा कर्तव्यतैव प्रवृत्तिहेतुरिति कर्तव्यतामात्रमेव प्रवृत्तिहेतुरिति। समीहितोपायता हि कृतियोनिः। अयमाशयः—समीहितोपायता हि प्रमाणान्तःपातिनी इत्यत्र नास्ति ममापि विमतिः, परमेतादृशमप्यस्ति किञ्चित्प्रमाणं यस्य प्रमाणस्य अभावात् प्रमेयं निवर्त्तते। यदि कोऽपि भावपदार्थः अनित्यो भवति तदाऽवश्य-

---

१. ननु कर्तव्यमिति प्रतिपत्तेः प्रवृत्तिः। कथं हि तथा प्रतिपद्यमानो न प्रवर्त्तते। वि० वि० पृ० २४५, ४४६।

मेवासौ कृतकोऽपि भवति। तथा च कृतकस्त्वन्तत्र भावानामनित्यत्वे प्रमाणम्। कृतकत्वाभावादनित्यत्वं निवर्त्तते। कदाचिदपि कस्मिंश्चिद् भावे एतन्नैव भवितुमर्हति यदसौ भावोऽकृतकः सन्नपि अनित्यो भवेत्। एवमेवात्रापि कार्यत्वं नाम कृतिव्याप्यत्वं तथा च सति कार्यत्वे कृतिरवश्यमेव स्यात्, कृतिः चेतनप्रयत्नः पुरुषप्रयत्नो वेति। सा च कृतिः इच्छाजन्या अर्थात् इच्छाद्वेषजीवनयोनिस्तथा च इच्छाद्वेषात्मकयोः कृतियोनिभूतयोः निवृत्तौ कृतिरपि नैव भवति। ज्ञानजन्या भवेदिच्छा इच्छाजन्या कृतिर्भवेदित्यंशे न कस्यापि विमतिः। तस्मात्समीहितसाधनतायाः निवृत्तौ प्रवृत्तिर्नैव भवितुमर्हति समीहितस्य कृतियोनित्वात्। तस्मात्कर्तुः समीहितसाधनतैव कर्तव्यता कर्तुरपेक्षितोपायताविपरीता ह्यकर्तव्यता[1]। यः पुरुषः यदिच्छति तदेवासौ करोति नान्यत् इति भावनायाः प्रारम्भः इच्छैव भवति। प्रारब्धया इच्छया च भावनाप्रयत्नः जायते, इच्छापूर्वकत्वात्प्रयत्नस्येति पूर्वमेव प्रतिपादनात्। इच्छापूर्वकत्वात्प्रयत्नस्य इच्छाकर्म एव भावनासाध्यमिति सिद्धोऽपि स्वर्गः इच्छाकर्मतया साध्यात्मनैव भावनायामन्वेति समीहितसाधनतैवैतन्मते लिङर्थ इति संक्षेपः।

### नव्यमते विधिविवेकः

वेदो हि आचारमूलः, आचारश्च प्रवृत्तिः। तथा च जनकतासम्बन्धेन प्रवर्त्तकज्ञानवत्त्वं वेदस्य, प्रवृत्तिप्रयोजकत्वादेव प्रवर्त्तकज्ञानं नितान्तमपेक्षितं भवति।

भाट्टमते हि लिङादीनामर्थः अभिधा। विधेः व्यापारीभूतः विधिसमवेतः भावनाख्यः अतिरिक्तपदार्थविशेषः अभिधा। अस्याश्चाभिधायाः ज्ञानं प्रवर्त्तकम् भावनायाञ्च भावनात्वरूपेण विधिशक्तिः। प्रयोजनज्ञानं प्रवृत्तिहेतुर्न भवितुमर्हति एवमेव प्रयोजनज्ञानस्याहेतुत्वे विश्वजिद्यागादौ फलकल्पनमनुपपन्नं स्यात्। यागविषयकभावनाजन्यो भवति पुरुषव्यापारः। तत्र यागविषयकव्यापारेऽभिधाजन्यत्वस्य अन्वये व्यापारनिष्ठं यदिष्टसाधनत्वन्तद्धि अन्वयप्रयोजकं जायत इति योग्यताबलादेवात्र लिङर्थे इष्टसाधनत्वज्ञानस्य भानं भवति इति अन्यथालभ्ये इष्टसाधनत्वे लिङादीनां न शक्तिग्रहो भवति। यागविषयकभावनाजन्यः पुरुषव्यापारः आख्यातसामान्यशक्तिवललभ्ये कृतिरूपव्यापारे जन्यत्वसम्बन्धेन भावनायाः अन्वयसिध्यर्थं व्यापारनिष्ठेष्टसाधनत्वस्यान्वयप्रयोजकत्वम् इति योग्यतयैव तदिष्टसाधनत्वस्य भानं भवति। अथवा विधिबलादेव स्वर्गादिसाधनत्वस्य ग्रहो जायते। इष्टसाधनत्वञ्च प्रवृत्तिरूपव्यापारे आख्यातार्थेऽन्वेति, प्रवृत्तौ च इष्टसाधनताज्ञानमेव हेतुः। नचात्रेदं

---

१. तस्मात्कर्तव्यताऽपि नान्या कर्तुः समीहितोपायतायाः। वि० वि० पृ० ३०४

चिन्तनीयं यत्—न्यायमतेऽपि इष्टसाधनत्वमेव विध्यर्थ इति कोऽनयोर्विशेषः ? न्यायमते क्रियागतेष्टसाधनत्वं विध्यर्थः, भाट्टमते तु प्रवृत्तिगतमेव तदिष्टसाधनत्वमिति विशेषः। भाट्टमते चाभिधाया अभ्युपगमः, न्यायमते अभिधाया अनभ्युपगमश्चेति वर्तते विशेषः। अत्रेयमाशङ्का जागर्ति यत् अभिधानामकस्य व्यापारस्याभ्युपगमः किमिति क्रियते ? व्यापारभिन्नस्य इतरनिष्ठव्यापारजनकत्वं स्वनिष्ठव्यापारद्वारा भवति। यथा दण्डः चक्रनिष्ठस्पन्दनाख्यव्यापारजनकः, दण्डश्च स्वनिष्ठस्पन्दनाख्यव्यापारार्जनं विना न भवति चक्रनिष्ठस्पन्दजनकोऽपि तु दण्डस्य स्वनिष्ठस्पन्दार्जनद्वारा चक्रनिष्ठस्पन्दजनकत्वम्। व्यापारो हि परनिष्ठव्यापारजनको भवतीति तत्रापि स्वनिष्ठः कश्चिद्व्यापारोऽवश्यमेवाभ्युपगन्तव्य इति व्यापारभिन्नस्येत्युक्तम्। व्यापारिणः स्वनिष्ठव्यापारजनने व्यापारापेक्षायान्तु तस्यापि स्वनिष्ठव्यापारजनने व्यापारापेक्षेति तस्य तस्येति क्रमेण अनवस्थापत्तेर्दुर्वारत्वादिति परनिष्ठेत्युक्तम्। तावतापि ज्ञानद्वारैव लिङादीनां प्रवृत्तिजनकत्वमिति शब्दाश्रिता सा अभिधा न सेत्स्यति इत्यत उक्तं० स्वनिष्ठव्यापारद्वारेति। सा च अभिधाख्या भावना यदा शब्दाश्रिता तदा शब्दाश्रितत्वादियं भावना शाब्दी भावनेत्युच्यते। अयमाशयः—भाट्टमते लिङ्लोट्तव्यदादियुक्तवाक्ये द्विविधभावना प्रतीयते—एका शाब्दभावना अपरा च आर्थभावना। आख्यातमात्रमार्थभावनामवगमयति लिङ्लोडादयश्च शाब्दभावनां प्रत्याययति। इदमेव "अभिधाभावनामाहुः" इत्यादिवार्त्तिकानुसारिसुचरितमिश्रमतम्।

मण्डनमिश्रादीनां मते तु "श्रेयःसाधनता ह्येषां नित्यं वेदात्प्रतीयते" इति वार्त्तिकानुरोधेन इष्टसाधनत्वमेव विध्यर्थः।

लोके लिङादीनामाप्तेच्छायां शक्तिग्रहो वर्तत इति वेदेऽपि नियोगः प्रवर्त्तनीयत्वेन इच्छा, तादृशार्थवाचकोऽत्र लिङादिर्भवति। नियोगः[1]—प्रवर्त्तनम्—प्रयोजनं वा, अत्रैव लिङादीनां शक्तिग्रहः। वेदे चास्मदादीनामिच्छा न सम्भवतीति इच्छाश्रयत्वेनात्र ईश्वरस्य सिद्धिर्जायते। इच्छा हि आत्मविशेषगुणः स च समवायसम्बन्धेनात्मनि वर्तते। यदाश्रिता च वेदार्थे इच्छा स एव ईश्वरः। नियोगो हि आचार्यमते आप्ताभिप्राय एव।

विधिवादे इच्छा यदि प्रवृत्तिशब्दस्यार्थः स्यात्तदा "स्वर्गकामोऽश्वमेधेन यजेत" इत्यादिविधिवाक्यश्रवणानन्तरमश्वमेधयज्ञादौ इच्छा स्यात्, इच्छामात्रेणैव पुरुषः चरितार्थो भवेत् यतः इच्छैव विध्यर्थः स्वीक्रियते।

---

१. नियोगः प्रवर्तनम् प्रयोजनमर्थो येषां ते—आमोद० पृ० ३१०

अयमभिप्रायः—कस्यापि शब्दस्य शक्तिग्रहे प्रदर्शितेषु बहुविधेषु कारणेषु व्यवहारस्यैव प्राधान्यं वरीवर्ति। व्यवहारो हि शब्दप्रयोगात्मकस्तेनापि घटादिपदानामर्थमजानानस्य जिज्ञासोर्बालस्य शक्तिग्रहो भवति। यथा ज्येष्ठवृद्धेन गुर्वादिना घटमानय इति शिष्याय उक्तम्, ज्येष्ठप्रयोजकवृद्धवाक्यं श्रुत्वा प्रयोज्यशिष्यादिना घट आनीतः। तत्र समीपस्थः व्युत्पित्सुर्बालः घटाद्यर्थेऽगृहीतशक्तिकोऽपि प्रयोजकवृद्धोच्चारितवाक्यं श्रुत्वा प्रयोज्यवृद्धस्य गमनं दृष्ट्वा घटानयनं च दृष्ट्वा प्रयोज्यवृद्धसमवेतप्रयत्नसाध्यघटानयनक्रिया प्रयोजकवृद्धोच्चरित-"घटमानये" ति पदज्ञानजन्यशाब्दबोधजन्येति अनुमिनोति। घटानयनक्रियया प्रवृत्त्यनुमानञ्चेत्थम्भवति—घटानयनक्रिया प्रयत्नपूर्विका, विलक्षणक्रियात्वात्, स्वीयक्रियावत्। प्रवृत्त्या च शाब्दबोधानुमानं जायते—घटानयनविषयकप्रवृत्तिः घटानयनविषयकज्ञानजन्या, तद्गोचरप्रवृत्तित्वात्; या यद्गोचरा प्रवृत्तिः सा तद्गोचरज्ञानजन्या, स्वीयस्तन्यपानप्रवृत्तिवदित्यनुमानेन घटानयनविषयकशाब्दबोधमनुमायानन्तरं घटानयनगोचरज्ञानम् घटमानयेतिवाक्यजन्यम्, तदन्वयव्यतिरेकानुविधायित्वात्; यद् यदन्वयव्यतिरेकानुविधायि तत् तज्जन्यं यथा तन्त्वन्वयव्यतिरेकानुविधायि पटः इत्येवमानयनक्रियान्विते घटपदार्थे शक्तिं विनिश्चिनोति। इत्येवं क्रियान्वितघटादौ शक्तिग्रहानन्तरं घटं नय, गां बधान, गां विसृजेत्यादिप्रयोजकवृद्धवाक्यात् कस्यचित्पदस्य संग्रहेण, कस्यचित्पदस्य त्यागेन क्रियान्वितगवाद्यर्थे शक्तिमनुमिनोति—घटानयनकार्यम् घटमानयेति शब्दप्रयोज्यम्, तादृशशब्दश्रवणशून्यकालीनप्रवृत्त्यविषयत्वे सति प्रवृत्तिविषयत्वात्; एवं क्रमेण क्रियान्वितघटादौ शक्त्यवधारणानन्तरं क्रियान्वितघटत्वाद्यपेक्षया घटत्वादेरेव शक्यतावच्छेदकत्वे लाघवेन अनन्यलभ्यस्यैव शब्दार्थतया अन्वयस्य संसर्गमर्यादया भानेन च क्रियान्वितघटत्वे घटादिपदशक्यतावच्छेदकत्वस्य परित्यागौचित्यात् लाघवज्ञानादिसहकृतमनसा घटादिपदं क्रियान्वितघटादिशक्तमिति न कार्यान्वितघटत्वं शक्यतावच्छेदकम् किन्तु घटत्वमेव।

लिङः शक्तिविचारेऽपि व्युत्पित्सुर्बालः यद्धि स्वप्रवृत्तिजनकत्वेनावधारयति तत्रैव तस्य शक्तिरिति निश्चिनोति। विना इच्छां न कस्मिन्नपि कर्मणि कोऽपि प्रयतत इति इच्छामेव लिङर्थमवधारयति; तथा च इच्छैव लिङर्थ इति केषाञ्चिन्मतम्[१]।

१. "अन्ये तु व्यवहारेण व्युत्पित्सुर्बालः स्वप्रवृत्तिजनकत्वेनावधारिते शक्तिं कल्पयति, तादृशीच्छैवेति सैव लिङर्थ इत्याहुः।" तत्वचिन्तामणि टीका पृ० ७

आद्या प्रवृत्तिरिच्छैव इति प्रयोगात् यद्यपीच्छा अन्यत्र प्रवृत्तिशब्दार्थः कुसुमा० विवृति पृ० १२०

पूर्वोक्तेन प्रसङ्गेन एतत्प्रतिपादितं यत् प्रवृत्तिशब्दस्यार्थः प्राथमिकेच्छा प्रयत्नो वेति। किन्तु इच्छा यदि प्रवृत्तिशब्दस्यार्थो भवेत्तदा "स्वर्गकामोऽश्वमेधेन यजेत" इति वैदिकविधिवाक्यश्रवणानन्तरमश्वमेधयज्ञादौ इच्छामात्रेणैव पुरुषः चरितार्थः स्यात् इच्छामात्रेणैव विध्यर्थस्य निर्वाहेण इच्छामात्रादेव फलस्य स्वर्गादेरुत्पत्तौ कर्मणो यगादेरननुष्ठानप्रसङ्ग एव भवेत्। बहुवित्तव्ययायाससाध्ये यागादिकर्मणि न कोऽपि कृतिं कुर्यात् यागादीनामकरणेऽपि विध्यर्थस्य निर्वाहेण पुरुषस्य कृतकृत्यताप्रसङ्गात्; तथा च यागाद्यकरणप्रसङ्गः समापतति[1]। क्रियमाणयागस्य न कोऽप्युपयोगः स्यात्केवलं जलताडनादिवद्वृथायासः एतस्मिन् संभवति। दृश्यते च लोके "स्वर्गकामोऽश्वमेधेन यजेत" एतद्वाक्यश्रवणानन्तरं पुरुषः यज्ञादौ प्रवृत्तः सन् यत्नवान् भवति। तस्मात् कृतिर्यत्नो वा विध्यर्थः न तु इच्छामात्रम्। कृतिर्हि फलपर्यवसाना भवति; तथा च फलपर्यवसानायाः कृतेर्विधिकार्यतया क्रियमाणस्य यागस्य उपयोगः सम्भवत्येव। विधिवादे हि न कायपरिस्पन्दनमात्रं कृतिर्यथाऽन्यत्र चेतनपुरुषस्पन्दस्य (व्यापारस्य) कृतिशब्दवाच्यत्वेन व्यवहारो भवति। प्रवृत्तिर्हि विधिज्ञानकार्या। तथा च कृतेः विध्यर्थत्वे मोक्षकामस्य पुरुषस्य कृतेः ज्ञानविधौ[2] भूतेषु दयाविधाने च चेष्टारूपायाः कृतेः शरीरपरिस्पन्दस्याभावेऽपि विधेः दर्शनान्न कृतिः विध्यर्थः। आत्मज्ञानं हि न स्पन्दाद्यधीनं यतः ज्ञानस्य आत्ममनःसंयोगजन्यत्वात् न स्पन्दाद्यपेक्षा तत्र वर्तते। कर्तृधर्मस्य स्पन्दस्य ज्ञानमेतादृशविधिस्थले न भवति। तथा च स्पन्दनं चेष्टा वा न विध्यर्थः।

भवतु नाम स्पन्दाख्यायाः कृतेरात्मज्ञानादौ अभावात् विधित्वासम्भवेऽपि प्रयत्नः विध्यर्थः कस्मान्न भवति। श्रवणमनननिदिध्यासनादिकं हि प्रयत्नसाध्यमेव भवति भूतदयादीनामपि प्रयत्नविषयत्वमस्त्येव। एतावता प्रयत्नो नैव विध्यर्थः; यत्नो यदि विध्यर्थः स्यात्तदा वैधकर्मणि अप्रवृत्तिप्रसङ्ग एव स्यादिति संक्षेपः।

विधिविवेकग्रन्थे विधेः आलोचना वर्तते। प्रकरणस्यारम्भे एव विषयप्रयोजनादेः निर्णयो विद्यते—

---

१. इच्छामात्रेण विध्यर्थनिर्वाहे वहुवित्तव्ययायाससाध्ये यागाद्यकरणप्रसङ्गात्। न्या० कु० प्रका० ५२५।

२. आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्चेत्यत्र आत्मानं विजानीयात्।

साधने पुरुषार्थस्य सङ्गिरन्ते त्रयीविदः।
बोधं विधौ समायत्तमतः स प्रविविच्यते ॥

विधेर्बोध एव पुरुषार्थस्य साधनम्। वेदवाक्यस्य तात्पर्यबलेनैव पुरुषार्थस्य सिद्धिर्जायते। ग्रन्थकारः कथयति विधिः शब्दः शब्दव्यापारो वा नास्ति। "तस्मान्न विधिः शब्दस्तद्व्यापारो वा।" अभिधेयभावनापि विधिर्नास्ति "अभिधेयोऽपि विधिर्नास्ति।" टीकाकारमते प्रमाणान्तरागोचरः शब्दः आलम्बननियोग एव विधिः, इत्येव प्रभाकरमतम्। एतस्य मतस्य विशेषरूपेण खण्डनं वर्तते। नियोगः केनापि रूपेण युक्तियुक्तो नास्ति। वाक्यार्थः शब्दप्रमाणको न भवितुमर्हति, यतः अपदार्थोऽपि तत्र वर्तते, अपदार्थः कदापि वाक्यार्थो न भवितुमर्हति, शब्दप्रमाणकः पदार्थोऽपि न भवितुमर्हति। यतः, कस्यापि प्रमाणान्तरस्यापि अभावे पदार्थत्वस्य अनुपपत्तिः भवति। शब्द एव नियोगे प्रमाणमित्यपि न समीचीनम्, तथा सति इतरेतराश्रयदोषो भवति "प्रमितिर्हि शब्देन नियोगे सम्बन्धग्रहात्सति च तस्मिन् शब्देन तस्य प्रमा"। प्रमाणान्तरेण नियोगस्य सिद्धिरित्यपि न भवितुमर्हति, यतः मानान्तरस्वीकारे सिद्धेरनपेक्षत्वमेव। नियोक्तृव्यापारेऽपि निगोस्य कर्त्ताऽपेक्षितो भवतीति, किन्तु एतदपि न सम्भवति, यतः शब्दस्य अपौरुषेयत्वाङ्गीकारात्। अतः केनापि प्रकारेण नियोगस्य सिद्धिर्न भवितुमर्हति। केषाञ्चिन्मते प्रतिभैव शब्दज्ञानम्।

अत एव प्रतिभामात्रं विकल्पमात्रं वा शब्दज्ञानमिति विपश्चितः। प्रतिभानिबन्धनश्च व्यवहारः। प्रतिभानुगृहीतानि च प्रमाणानि व्यवहाराङ्गमिति। एतन्मतमपि खण्डितम्। प्रतिभावादस्वीकारे सकलायाः प्रवृत्तेरभावः। अतदात्मनि तादात्म्यप्रतीतिः भ्रान्तिः। ज्ञानस्य स्वप्रकाशत्वमखण्डत्वञ्च। ज्ञानसम्बन्धे आचार्यः कथयति—

सर्वादृशामन्यवित्तमिन्द्रियाणां न गोचरः।
अत एव न सर्वज्ञज्ञानकार्य्यं प्रसिध्यति ॥ पृ० १४५

ज्ञानमतीन्द्रियम्, ज्ञानं सर्वप्रकाशकम्, ज्ञानं न कस्यापि कार्यं न च प्रकाश्यम्। नियोगस्य सार्थकता केनापि प्रकारेण न सम्भवति। आचार्यस्य एष एव सिद्धान्तः, यत्—अतो न नियोगोऽनुप्रवेशेन वस्तुतत्त्वं प्रकाशयति। श्रुतिः कार्य्यार्थतां प्रकाशयति, सिद्धवस्तुनोऽपि प्रकाशं करोति। शब्दः द्विविधः, कार्याभिधायी लिङादिः, भूतवस्तुनोऽभिधायी लङादिः। उपनिषद्वाक्यं भूतवस्तुविषयकम्। उपनिषद्वाक्ये विधेरवसरो नास्ति "उपनिषदात्मतत्त्वं त्वनपेक्षविध्यन्तराद्वाक्यात्प्रतीयते शब्दभावना—शाब्दीभावनैव विधिः इत्येव भट्टकुमारिलसम्मतम्, शब्दभावनापक्षोऽपि न युक्तियुक्तः, इष्टबोधाभावे शब्दभावनाबलेन लोकः प्रवर्तितो न भवितुमर्हति।

काम्यकर्मणि नैमित्तिककर्मणि अधिकारभेदः—कार्यनिष्ठबलेन प्रयोगनिष्ठत्वबलेन च काम्यकर्मणि नैमित्तिककर्मणि च अधिकारभेदो न भवितुमर्हति।

इष्टसाधनता—इष्टसाधनतैव न विधिः। कर्तुः इष्टसाधनतापि कर्तव्या, अकरणे तत्त्वानवबोधः विधेरन्तर्भुक्तः, सर्वविषयकज्ञानमेव विधिः। अतएव गीतायामुक्तम्—"ज्ञानं ज्ञेयं परिज्ञाता त्रिविधं कर्म चोदना।" वास्तविककर्मकरणे इष्टलाभः भवेत्? तेन इष्टलाभेन मम कः सम्बन्धः? अकरणे कस्तावद् दोषः? कथं कर्तव्यम् करणे कस्य फलस्य प्राप्तिः स्यात्? एतादृशपर्यालोचनायामेव विधेस्तात्पर्यम्।

अज्ञानी एव कर्मणि अधिकारी, न तु ज्ञानी। "एव खलु पुरुषः स्वभावतो रागाद्याविष्टो दृढफलैरुपायैः विषयोपार्जने प्रवर्तमानस्तदाक्षिप्तमनाः तत्पक्षपाती। न विगलितविषण्णप्रपञ्चमात्मतत्त्वमुपदिष्टं प्रत्येतुं परिभाषयितुं वा अलम्।" स्वर्गादिफलं क्षणिकम्। तत्र दुःखसम्मिश्रणमप्यस्ति। यज्ञस्य स्वर्गाख्यं फलम्। अतः यज्ञे न ज्ञानी अधिकृतः, यतः ज्ञानिनः सन्यासमेव कर्तव्यम्। आत्मज्ञानाधिकारे कर्मविधेरवसरो नास्ति—तस्मान्नाऽसाधने धात्वर्थेऽधिकारसिद्धिः। साधनत्वं चास्य विधिरित्युक्तम्।

ब्रह्मसूत्रस्य तत्तु समन्वयात् (१।१।४) इति सूत्रे "प्रतिपत्तिविधिवादिनः" मतस्य खण्डनं वर्तते। विधिविवेकग्रन्थेऽपि आचार्यमण्डनः प्रतिपत्तिविधिवादिनः मतस्य विस्तृतरूपेण आलोचनां कृत्वा खण्डनमकरोत्। प्रतिपत्तिविधिवादी गुरुरेव इत्यपि एतस्मिन्नेव ग्रन्थे निर्दिष्टवान्। ब्रह्मप्रतिपत्तौ विधिरस्तीति समर्थनार्थमाचार्यः प्रभाकरस्य गुरोः वाक्यमप्युद्धृतवान्। परिशेषे आचार्यः मण्डनः कथयति—"अलं वा गुरुभिर्विवादेन"। ब्रह्मप्रतिपत्तिविधायकवाक्येन यदि ब्रह्मसिद्धिर्भवति, तदा गुरुणा सह विवादस्य प्रयोजनं नास्ति[1]।

आचार्यप्रभाकरः मीमांसादर्शनस्य (१।१।२) सूत्रस्य शावरभाष्यस्य बृहतीटीकायां सकलस्यापि वेदार्थस्य कार्यरूपत्वमर्थात् साध्यरूपत्वमेव न तु सिद्धरूपत्वं कार्येऽर्थे एव वेदस्य प्रामाण्यात् इत्याह। एतस्य बृहतीवाक्यस्य पञ्जिकाख्यटीकायां शालिकनाथमिश्रः आचार्यमण्डनस्य ब्रह्मसिद्धिग्रन्थात् कियदंसमुद्धृत्य, वेदस्य सिद्धरूपोऽप्यर्थो भवितुमर्हतीति मण्डनमिश्रमतमुद्धृत्य तस्य विस्तृतरूपेणालोचनां कृत्वा तन्मतमखण्डयत्[2]।

---

१. उपनिषदात्मतत्त्वन्त्वनपेक्षविध्यन्तराद् वाक्यात् प्रतीयते। अलं वा गुरुभिर्विवादेन। वि० वि० पृ० २८१

२. अत्रापरोऽपरिपक्वविद्यावलेपोद्रेकतिरष्कृतविवेकः परिचोदयति। तदेतत् बालभाषितं बालादेवादरणीयतां लभते। पञ्जिका पृ० २०

मण्डनाचार्यस्य एतन्मतखण्डनार्थं शालिकनाथोऽत्र यदवोचत् तस्य समाधानार्थमेव वाचस्पतिमिश्रः विधिविवेकस्य टीकायां न्यायकणिकायां शालिकनाथस्य वाक्यमादाय खण्डनमकरोत्।

आचार्यः मण्डनः विधिविवेके शाबरभाष्यनिबन्धकारस्य प्रभाकरस्य वाक्यमुद्धृतवान्, किन्तु, तद्वाक्यं शाबरभाष्यस्य यस्यांशविशेषस्य व्याख्यामादाय निबद्धवान्, तदंशविशेषस्य बृहतीटीकायां तस्य वाक्यस्योपलब्धिर्नास्ति[१]।

अद्वैतवेदान्तिनां मते उपनिषद्वाक्यानां साक्षादद्वितीयब्रह्मप्रतिपादकत्वेऽपि प्रतिपत्तिविधिवादिनां मीमांसकानां मते साक्षाद्रूपेण उपनिषद्वाक्यानामद्वितीयब्रह्मप्रतिपादकत्वं न भवितुमर्हति। ब्रह्मप्रतिपत्तिविधायकवाक्यात् साक्षाद्रूपेण ब्रह्मप्रतिपत्ते कर्त्तव्यतया प्रतिपन्नत्वे विधेयभूतब्रह्मप्रतिपत्तेः विषयभूतं ब्रह्मापि प्रतिपन्नं भवतीति। अतः, मीमांसकाः नाद्वैतसिद्धान्तविरोधिनः किन्तु अद्वैतवेदान्तिनः येन रूपेण उपनिषद्वाक्यानामद्वैतब्रह्मणि प्रामाण्यं प्रतिपादयन्ति, मीमांसकाः तेन रूपेण न कथयन्ति, अपि तु विधायकवाक्यस्यैव प्रामाण्यं स्वीकुर्वन्ति।

नात्र सन्देहो यत् मण्डनमिश्रः पूर्वमीमांसायाः श्रेष्ठः आचार्यः। वाचस्पतिमिश्रः यस्य ग्रन्थस्य टीकाकारः तस्य ग्रन्थस्य विषये किमु वक्तव्यम्। अस्मिन् विधिविवेके मण्डनमिश्रः आत्मज्ञाने विधिरस्ति न वेत्यस्मिन् विषये पूर्ववर्तिनां बहूनामाचार्याणां मतं प्रतिपादितवान्। उपसंहारे च आत्मज्ञाने विधिर्न भवितुमर्हतीति प्रतिपादितवान्[२]। 'विधिनिरपेक्षवेदान्तवाक्यादेव आत्मतत्त्वस्य प्रतीतिर्भवतीति' मण्डनमिश्रवाक्यस्य टीकायां वाचस्पतिमिश्रः कथयति "तिस्रः खल्विमाः प्रतिपत्तयः सम्भवन्ति। श्रुतमयी, चिन्तामयी साक्षात्कारवती च।" इमास्तिस्रोऽपि प्रतिपत्तयो विधानायोग्याः, अतः, वेदान्तवाक्यैः विधिनिरपेक्षात्मतत्त्वस्य प्रतिपादनं जायते। एतदेव प्रतिपादितम्। "तत्तिसॄणामपि प्रतिपत्तीनां विधानानर्हत्वात् आत्मतत्त्वप्रतिपादनपरत्वं हि वेदान्तानामुपपादितम्। सर्वञ्चैतद् ब्रह्मसिद्धौ कृतश्रमाणामनायासमधिगमनीयमिति नेहास्माभिरुपपादितम्"[३]।

---

१. यदि कार्यरूप एव वेदार्थः कथं तर्हि मन्त्रार्थवादाः सोपनिषत्काः? यस्माद् भूतादिकमर्थं चोदनैव गमयति। कथम्? कार्यमर्थमेवमवगमयन्ती गमयति। वि० वि० पृ० २७९

यदि कार्य एवार्थे वेदस्य प्रामाण्यं कथं तर्हि भूतावद्यवगतिर्मन्त्रार्थवादेषु। बृ० पृ० २६

२. 'उपनिषदात्मतत्त्वं तु अनपेक्षविध्यन्तराद्वाक्यात्प्रतीयते'। वि० वि० पृ० २८१

३. वि० वि० न्या० क० पृ० २८१

आचार्यमण्डनस्य विधिविवेकग्रन्थेन चैतत्सुस्पष्टं जायते यत् प्राचीनकर्ममीमांसकानां मध्येऽपि एवम्भूताः सम्प्रदायाः आसन्, ये जीवब्रह्मणोरैक्यं स्वीकुर्वन्ति स्म । "तत्तु समन्वयात्" ( ब्र० सू० १।१।४ ) इति सूत्रभाष्ये आचार्यः शङ्करः पूर्वमीमांसकानां मतद्वयस्य पूर्वपक्षरूपेण निर्देशं कृतवान्[1] । तस्य भामतीटीकायां वाचस्पतिमिश्रेणोक्तम्—भाष्यकारः आचार्यदेशीयानां मतमुत्थापयति—"अत्रापरे प्रत्यवतिष्ठन्ते इति" । एतन्मीमांसकानां मते यद्यपि जीवेन सह ब्रह्मणः ऐक्यं वेदान्तवाक्येन सिद्धं भवति तथापि स्वरूपतः ब्रह्माभिन्नः जीवः इत्यत्र वेदान्तवाक्यानां तात्पर्यं न भवितुमर्हति, कस्यापि वस्तुनः स्वरूपमात्रस्य प्रतिपादकं वाक्यं निरर्थकमेव स्यात् । अतः, वेदान्तवाक्यानां तादृशब्रह्मस्वरूपे तात्पर्यं नास्ति अपि तु स्वरूपस्य ज्ञानविधावेव तात्पर्यम् । अर्थात् वेदान्तवाक्येन तादृशब्रह्मणः ज्ञानमेव विहितम् । वेदान्तवाक्यानां विधावेव तात्पर्यं न तु वस्तुस्वरूपे, यतः वेदानां विधावेव तात्पर्यम् ।

अस्मिन् विषये पूर्वपक्षिणः मीमांसकाः वेदान्तवाक्यानां वस्तुस्वरूपे तात्पर्यं न भवितुमर्हति अपितु कार्ये विधौ वा वेदान्तवाक्यस्य तात्पर्यमित्येतत्साधनार्थं, शबरस्वामिनः भाष्यस्य महर्षेः जैमिनेः मीमांसासूत्रस्यापि प्रमाणतया निर्देशं कृतवन्तः । आचार्यवाचस्पतिमिश्रोऽपि एतस्य पूर्वपक्षभाष्यस्य व्याख्यायां प्रभाकरमतरहस्यं प्रदर्शितवान् । बृहदारण्यकोपनिषदि "आत्मेत्येवोपासीत" ( १।४।७ ) इत्यत्र शाङ्करभाष्ये प्रभाकरसम्प्रदायस्य मतं प्रदर्श्य आचार्यशङ्करः खण्डितवान् । प्रभाकरः ( गुरुः ) चोदनालक्षणोऽर्थो धर्मः ( जै० सू० १।१।२ ) इत्यस्य सूत्रस्य भाष्यसम्मतार्थं प्रकाशितवान् । तेनैतदेवावगम्यते यत् वेदस्य अर्थः साध्यरूपः, न तु सिद्धरूपः । वेदस्य सिद्धवस्तुरूपः अर्थो न भवितुमर्हति । प्रभाकरः एतादृशसिद्धान्तस्य समर्थनं करोति, तेनावगम्यते यत् अयं सिद्धान्तः सुदूरपूर्वकालादेव प्रचलति । तथाहि—"चोदनालक्षणः कार्यरूप एव वेदार्थः, न सिद्धरूप इति प्रतिज्ञातम्" ( पञ्जिका पृ० २० ) चोदनेति क्रियायाः प्रवर्तकं वचनमाहुः, इति कार्यरूप एवेति दर्शयति । यदि कार्ये एव अर्थे वेदस्य प्रामाण्यं कथं तर्हि भूताद्यर्थावगतिर्मन्त्रार्थवादेषु ? तेषामपि हि कार्यार्थता द्वितीये पादे वक्ष्यति । तदुक्तं शक्नोत्यवगमयितुम् । ( बृहती पृ० २०–२३ )

विधिविवेके आचार्यः मण्डनः गुरुप्रभाकरस्य एतन्मतखण्डनपूर्वकं स्वीयमतस्थापनार्थं प्रथमतः पूर्वपक्षरूपे प्रभाकरमतप्रदर्शनप्रसङ्गे उक्त-

---

१. अत्रापरे प्रत्यवतिष्ठन्ते यद्यपि शब्दप्रमाणकं ब्रह्म तथापि प्रतिपत्तिविषयतयैव शास्त्रेण ब्रह्म समर्प्यते । ब्र० सू० १।१।४

वान्—यद्धि वाक्यं न प्रवर्त्तकं न च निवर्तकं तादृशवाक्यस्य व्यर्थत्वात् न तादृशं वाक्यं भवितुमर्हति। श्रोतुरवगत्यर्थमेव वक्ता वाक्यं प्रयुनक्ति। सप्रयोजनमेव वाक्यं श्रोतुं श्रोता इच्छति। अतः सप्रयोजनमेव वाक्यं वक्ता प्रयुङ्क्ते। सिद्धवस्तुनः प्रतिपादकं वाक्यं सप्रयोजनं न भवितुमर्हति, यतः सिद्धवस्तुप्रतिपादकेन वाक्येन प्रवृत्तिर्निवृत्तिर्वा किमपि न जायते। वाक्यमात्रं प्रवर्त्तकं निवर्त्तकं वा भवति, यद्धि न प्रवर्त्तकं न निवर्त्तकं तत् निष्प्रयोजनम् अर्थात् व्यर्थमेव[1]।

एतस्या आशङ्कायाः उत्तरप्रसङ्गे आचार्यः मण्डनः कथयति—"कथं तर्हि भूताऽन्वाख्यायिनो वेदान्ता लौकिकवचांसि च" (पृ० १९२) अर्थात् अप्रवर्त्तकस्य अनिवर्त्तकस्य वा वाक्यस्य व्यर्थत्वे सिद्धवस्तुनः प्रतिपादकस्य वेदान्तवाक्यस्य एवं सिद्धवस्तुनः प्रतिपादकस्य लौकिकवाक्यस्य वा वैयर्थ्यं स्यात्। अत्र प्रभाकरः कथयति—"वेदान्तेषु तावदात्मतत्त्वप्रतिपत्तिः कर्त्तव्या" (पृ० २९२) अर्थात् वेदान्तवाक्यस्य वैयर्थ्यं नापतति, यतः आत्मा ज्ञातव्यः इत्यादिवेदान्तवाक्येनात्मविषयकप्रतिपत्तिः उक्तेति। विहितात्मप्रतिपत्तिविषयः आत्मा कीदृशः ? एतादृशाकाङ्क्षायाः निवृत्त्यर्थमात्मस्वरूपप्रतिपादकं सर्वमपि उपनिषद्वाक्यमात्मस्वरूपं प्रतिपादयति। प्रमाणवाक्यस्य नैष स्वभावो यत् विधिनिरपेक्षं सत् वस्तुनः स्वरूपं प्रतिपादयेत्, एवमेव 'अयं देशः धनसमृद्धः' इत्यादिसिद्धवस्तुनः प्रतिपादकं लौकिकं वाक्यमपि विधिपर्यवसायि। "लोके चेदमिह निध्यादि प्रपित्तव्यमिति वाक्यपर्यवसानम्" (वि० वि पृ० १९२) अर्थात् "त्वम् जानीहि" एतादृशविधिवाक्ये एव पूर्वोक्तवाक्यस्य पर्यवसानं भवति। अत्रैव मण्डनाशयाभिव्यक्तिप्रसङ्गे वाचस्पतिमिश्रः कथयति—गुरुप्रभाकरः यद् ब्रह्मप्रतिपत्तौ विधिं स्वीकरोति, सा प्रतिपत्तिः किमुपनिषद्वाक्यजन्यब्रह्मविषयकशाब्दबोधभूता ? अथवा शाब्दबोधानन्तरं ब्रह्मविषयकध्यानभूता चिन्तभूता वा ? अथवा ब्रह्मसाक्षात्कारात्मिका ? परन्तु प्रदर्शितासु तिसृषु प्रतिपत्तिषु कस्यामपि प्रतिपत्तौ विधिर्न भवितुमर्हति। एतासु प्रथमा श्रुतमयी, द्वितीया चिन्तामयी तृतीया च साक्षात्कारवती। श्रुतमय्यां प्रतिपत्तौ विधिर्न भवितुमर्हति, यतः ब्रह्मप्रतिपादकवाक्याद्वाक्यार्थबोधे विधेरपेक्षा नास्ति। यदि वाक्यार्थबोधेऽपि विधेरपेक्षा स्यात्तदा कर्मविधिरेव स्वार्थबोधार्थमन्यविधेरपेक्षां कुर्यात्। एवमेव सोऽप्यपेक्षितविधिः स्वार्थबोधेऽन्यं विधिमपेक्षेत सोऽपि चान्यमित्यनवस्था स्यात्। विधिवाक्येन विधेयवस्तुनोऽवगत्यनन्तरं प्रवृत्तिर्भवति, एतदेव

१. ननु नाप्रवर्त्तकम् निवर्त्तकं वा वचः समस्ति, वैयर्थ्यात् कर्त्तव्यतापर्यवसायिनी हि वाक्यप्रवृत्तिः। वि० वि० पृ० १९२

विधेः प्रयोजनम् । ब्रह्मविषयकशाब्दबोधानन्तरं कुत्र प्रवृत्तिर्भवेत् ? अतः शाब्द-बोधे विधिस्वीकारे विधे प्रयोजनं नास्तीति श्रुतमय्यां प्रतिपत्तौ विधिर्न भवितुमर्हति । न्यायकणिकायामग्रेऽप्युक्तम्—वेदान्तवाक्यस्य ब्रह्मप्रतिपत्तिविधिः प्रतिपत्तिविषयस्य ब्रह्मस्वरूपस्य अपेक्षां करोतीति ब्रह्मस्वरूपे वेदान्तः प्रमाणं स्यादित्यपि न समीचीनम्, यतः प्रतिपत्तिः समारोपिते विषयेऽपि स्यात्, अतः वेदान्तवाक्यस्य ब्रह्मपरत्वं न सिद्धयतीति वेदान्तस्य ब्रह्मविद्यात्वमेव न सम्भवेत् । "तिस्रः खल्विमाः प्रतिपत्तयः सम्भवन्ति—श्रुतमयी, चिन्तामयी, साक्षात्कारवती च । तत्र श्रुतमयीमधिकृत्याह—शब्दात्प्रतिपत्तेरुत्पत्तेः पुनस्तत्रा-व्यापारात्, न श्रुतमयी विधेया । शब्दाद्विधेयमवगम्यते उत्तरकाला प्रवृत्तिर्विधि-प्रयोजनं न पुनः शब्दाववोध एव आत्माश्रयदोषप्रसङ्गादिति भावः ।.......अपि च प्रतिपत्तिविधिपरत्वे वेदान्तानां ब्रह्मस्वरूपसत्तायामप्रामाण्यप्रसङ्गः ।....... प्रतिपत्तिविषयो हि विधिः प्रतिपत्तिविषयमात्मतत्त्वमपेक्षते । तथा च तथा-त्मशब्दः प्रमाणमिति चेत् । न । आत्मतत्त्वमन्तरेण समारोपेणापि प्रतिपत्तेरुपपत्तेः । एवञ्च तत्परत्वाभावात् वेदान्तानां ब्रह्मविद्यात्वं बाध्येत ।" (न्या०क०पृ०१९३-५)

आचार्यमण्डनेनाप्युक्तं यत् वेदान्तवाक्यं यदि ब्रह्मप्रतिपत्तौ विधिप्रतिपादकं स्यात्, तदा तादृशवाक्यात् ब्रह्मप्रतिपत्त्यर्थमनुष्ठानस्यैव अवगतिः स्यात्, तथा च तादृशवाक्यात् आत्मतत्त्वस्य सिद्धिर्न स्यात् । एतदर्थम् आत्मतत्त्वस्य ब्रह्मतत्त्वस्य वा प्रतिपादके वेदान्तवाक्ये विधिसत्त्वेऽपि अविवक्षित एव विधिः ।

"क्रियापरत्वश्च विधेर्वस्तुरूपसत्ताया अविवक्षितत्वात् तत्प्रतिपत्त्यर्थम् अनु-ष्ठानं गम्यते नात्मतत्त्वावबोधः स्यात् ।..........अतः श्रूयमाणो विधिरेवं-जातीयकेषु विधानानर्हेष्वविवक्षितः । ( न्या० क० पृ० १९४ ) यद्युच्येत—ब्रह्म-प्रतिपादकवाक्यश्रवणे ब्रह्मविषयकं शाब्दज्ञानमुत्पद्यते । शाब्दज्ञाने विधेरावश्य-कताया अभावेऽपि ब्रह्मविषयकशाब्दज्ञानाद्भिन्नं ब्रह्मविषयकं साक्षात्कारात्मकं ज्ञानं ब्रह्मगोचरं प्रत्यक्षज्ञानं वा विहितं स्यात्, ब्रह्म शाब्दज्ञानविषयं न भवितु-मर्हति, यतः वाक्यार्थज्ञानमेव शाब्दज्ञानं पदार्थसंसर्गश्च वाक्यार्थः । उक्तसंसर्ग-ज्ञानं संसृष्टानेकपदार्थविषयकं भवति । अतः निरस्तसमस्त-भेदप्रपञ्चं ब्रह्मतत्व-मेतद्वाक्यार्थज्ञानस्य विषयः कथमिव स्यात् । अतएव एतावदद्वैततत्त्वावभासज्ञानं वाक्यजन्यज्ञानाद्भिन्नं तस्मिन्नेव च विधिः । "नन्वन्यदेवेदं शब्दप्रभवादात्म-तत्त्वगोचरं ज्ञानं विधीयते । नहि शाब्दज्ञानपरिवेद्यं ब्रह्मस्वरूपम् । वाक्यलक्षणो हि शब्दः प्रमाणम्, पदार्थसंसर्गात्मा च तदर्थः, प्रत्यस्तमिताऽखिलभेदप्रपञ्चं चात्मतत्त्वम्, तत्कथमस्य गोचरः । तस्मात् प्रलीनसकलावच्छेदोल्लेखमद्वैत-तत्त्वावभासात्मकं ज्ञानमन्यदेव शब्दाद्विधीयते ।" (वि० वि० पृ० १९७)

प्रभाकरामिमतस्यैतस्य सिद्धान्तस्य खण्डनार्थं मण्डनाचार्य्यः कंथयति— प्रभाकरस्य एतत्कथनमसङ्गतम्, अद्वैततत्त्वावभासात्मकः साक्षात्कारः विधेयो न भवितुमर्हति। यतः एतस्य अद्वैततत्त्वस्य साक्षात्कार एव फलम्, फलञ्च कदापि विधेयं न भवितुमर्हति। यद्धि अभिलषितं भवति, तत् फलातिरिक्तं किमपि नास्ति। अतः, अभिलषितस्य अन्यस्य वस्तुनोऽभावे फले विधिः कथमिव स्यात्। विधेयार्थस्यानुष्ठानेन अभिलषितफललाभो भवतीति विधेर्विधायकत्वम्, अद्वैततत्त्वलाभश्च स्वयमेव फलस्वरूपः, ततोऽन्यत्किमपि अभिलषितं फलं नास्ति। यदि प्रभाकरः कथयति–मोक्षस्य फलत्वमेवञ्च तत्प्राप्त्यर्थमेव विधिर्भविष्यति। तत्र मण्डनः प्रतिपादयति—तदपि न समीचीनम्, यतः मोक्षो हि निष्प्रपञ्चात्मतत्त्वावभासनात् नैव भिन्नः, सप्रपञ्चात्मतत्त्वावभास एव संसारः, निष्प्रपञ्चात्मतत्त्वावभास एव मोक्षः, अर्थात् आत्मस्वरूपविश्रान्तिरेव च मोक्षः। मोक्षस्य चान्यस्वरूपत्वे तादृशमोक्षस्य कार्यत्वमापतति। अविद्यात्मककर्मादिप्रपञ्च एव बन्धहेतुः अविद्योच्छेदश्च मोक्षः विद्या वा। "वार्त्तमेतत्, न खलु फलांशो विधिगोचरः। निष्प्रपञ्चात्मतत्त्वावभासश्च फलमेव, न ततोऽन्यदीप्सते। मोक्ष इति चेत्? ततोऽव्यतिरेकात्। सप्रपञ्चात्मतत्त्वावभासो हि संसारः। निष्प्रपञ्चात्मतत्त्वावभासो हि मोक्षः स्वात्मनि स्थितिः। अन्यथा कार्तत्वादमोक्षात्। बन्धहेतुश्च कर्म्मादिप्रपञ्चोऽविद्या, तदुच्छेदश्च विद्यैव। (वि० वि० पृ० १९७-९८) निष्प्रपञ्चात्मतत्त्वावभास एव मोक्षः न एतस्माद्व्यतिरिक्तः कश्चिदन्यः मोक्षः। एतस्य टीकायां वाचस्पतिमिश्रः—मोक्षः संसारविरुद्धस्वभावः। मोक्षस्य विरुद्धस्वभावताप्रदर्शनार्थमेव संसारप्रदर्शनम्। तस्मात् मोक्षः प्रवृत्तिविषयो न भवितुमर्हति, साध्यमेव प्रवृत्तिविषयभूतम् मोक्षो हि सिद्धस्वरूपः। मोक्षस्य सिद्धस्वरूपतायाः प्रदर्शनार्थमेव मोक्षः स्वात्मनि स्थितिरित्युक्तम्। मोक्षस्य सिद्धस्वरूपत्वप्रतिपादनेन मोक्षस्य साध्यत्वं खण्डितम्। अस्माभिः पूर्वमेव विवेचितं यत् प्रभाकरमते निष्प्रपञ्चं ब्रह्म शब्दज्ञानस्य विषयो न भवितुमर्हति। अत्र मण्डनाचार्यः कथयति—समस्तभेदप्रपञ्चरहितं ब्रह्म यदि शाब्दज्ञानस्य विषयो न भवति, तदा तादृशब्रह्मविषयकज्ञाने एव कथं विधिः स्यात्। यतः, विषयेणैव ज्ञानं निरूपितं भवति। निर्विषयकस्य ज्ञानस्य निरूपणं न भवितुमर्हति, अपितु सिद्धविषय एव ज्ञानस्य निरूपको भवति असिद्धविषयः ज्ञानस्य निरूपको न भवति। अत्र च ज्ञानस्य निरूपकं प्रपञ्चरहितं ब्रह्म, एतस्य च ब्रह्मणः सिद्धिः शब्दप्रमाणभिन्नेनान्येन प्रमाणेन न भवितुमर्हति। अतः, एतादृशस्य ब्रह्मणः शाब्दज्ञानाविषयत्वे एतस्य ब्रह्मणः सिद्धिरेव न स्यात्, ब्रह्मणोऽसिद्धौ च ब्रह्मविषयकज्ञानस्यापि सिद्धिः न स्यात्। अतः, ब्रह्मज्ञाने विधिर्न सम्भवति, तादृशब्रह्मणः शाब्दज्ञानाविषयत्वे ब्रप्रह्मतिपत्तिविषयकविधिर्न

सम्भवेत् । "यदि न कथञ्चिदपि शाब्दज्ञानविषयो ब्रह्म कथं तज्ज्ञानविधिः शक्य-प्रतिपत्तिः । विषयतश्च ज्ञाननिरूपणम् सिद्धश्च तन्निरूपयति, तत्सिद्धिश्च प्रमाणान्तराऽभावात् स्यात् । तस्यापि चेदविषयः, तदसिद्धेर्ज्ञानविशेषाऽप्रति-पत्तेर्विध्यप्रतिपत्तिः ।" ( वि० वि० पृ० १९८ )

यद्यत्र प्रभाकरः कथयति—ब्रह्मस्वरूपस्य शाब्दज्ञानाविषयत्वेऽपि भेदप्रपञ्च-प्रविलयेन तत् शाब्दज्ञानविषयो भविष्यति । अत्र मण्डनः समाधत्ते—तथासति ब्रह्म शाब्दज्ञानस्य अविषयभूतं न स्यात् । आत्मा ज्ञातव्यः, आत्मानमुपासीत इत्याद्युपनिषद्वाक्यं यदि ब्रह्मप्रतिपत्तिकर्तव्यतातात्पर्यकं स्यात्तदा ईदृशं ब्रह्म प्रतिपत्तव्यम् ब्रह्मणः ईदृशत्वम् इति उपनिषद्वाक्यस्यार्थ एव न स्यात् । यतः, यत्र वाक्यस्य तात्पर्यं तदेव तस्यार्थः । वचनस्य प्रतिपत्तिकर्तव्यतायां वाक्यस्य तात्पर्यमस्तीति ब्रह्मणः ईदृशत्वे वाक्यस्य तात्पर्यं नास्ति । अतः, वाक्यतात्पर्याविषयस्य ब्रह्मस्वरूपस्य वाक्येन सिद्धिर्नैव स्यात् । प्रतिपत्तिविधेः कर्तव्यतापरत्वेऽपि प्रत्येतव्यविषयपरत्वं नास्ति । अत्र प्रभाकरो वक्तुं शक्नोति-ब्रह्मणः ईदृशत्वस्य माभूत् वाक्येन सिद्धिस्तथापि अर्थादेव तस्य सिद्धिः स्यात् । यतः, प्रतिपत्तौ विधिसत्त्वेऽपि प्रतिपत्तिः प्रत्येतव्यविषयिणी स्यात्, तथा च प्रतिपत्तिकर्तव्यतैव प्रतिपत्तिः एवञ्च तद्विषयस्य ब्रह्मणः आक्षेपः स्यादिति प्रत्येतव्यब्रह्मतत्त्वस्य सिद्धिः स्यात् । अत्र मण्डनः समाधत्ते—एतन्न भवितुमर्हति, यतः आरोपेणापि प्रतिपत्तेः सम्भावना अस्ति, प्रतिपत्तेः कर्तव्यता प्रत्येतव्यस्य आक्षेपं कुर्यादिति तु सत्यम्, किन्तु प्रत्येतव्यस्य तथात्वस्य आक्षेपो नैव भवेत् समारोपेणापि प्रत्येतव्यस्योपपत्तिर्भवेदिति, अतः विधिवाक्येन वस्तुस्वरूपस्य सिद्धिर्नैव भवेत् किमन्यत्, प्रतिपत्तिविधिः प्रत्येतव्यविषये प्रमाण-मपि नास्ति, तथा च समस्तभेदप्रपञ्चरहितस्य ब्रह्मणः सिद्धवस्तुस्वरूपत्वेऽपि शब्दव्यतिरिक्तान्यप्रमाणवेद्यत्वाभावात् ब्रह्मणः तादृशब्रह्मप्रतिपादकोपनिषद्वा-क्यस्य विधिशून्यत्वेऽपि सिद्धब्रह्मस्वरूपप्रतिपादकत्वे न कश्चिद्दोषः । तस्मात् विधि-शून्योपनिषद्वाक्यं तादृशब्रह्मस्वरूपे प्रमाणं स्यादिति । अत एव "चोदना हि भूतं भवन्तम्" एतस्य शावरभाष्यस्य प्रभाकरकृता व्याख्या नैव समीचीना । "नाप्य-र्थोऽर्थः, अध्यारोपेणापि प्रतिपत्तेः सम्भवात् । अतो न नियोगाऽनुप्रवेशेन वस्तु-तत्त्वं प्रकाश्यते । न हि तत्र शब्दस्य प्रामाण्यम् । एवमनपेक्षतया प्रामाण्यसिद्धेः कार्याऽन्वयरहितभूतादिमप्यवगमयितुमलमाम्नाय इत्यसमञ्जसमेतत् । यदि कार्य-रूप एव वेदार्थः कथं तर्हि मन्त्रार्थवादाः सोपनिषत्काः ? यस्माद्भूतादिकमर्थं चोदनैव गमयति । कथम् ? कार्यमर्थमेवमवगमयन्ती भूतादिकमपि गमयति" । ( वि० वि० १९८-९९ ) यदि कार्यरूप एव वेदार्थः तदा मन्त्रार्थवादोपनिषदादेः

भूतार्थप्रतिपादकवेदभागस्य प्रामाण्यं कथमिव स्यात् ? एतस्या आशङ्कायाः समाधानार्थं "चोदना हि भूतं भवन्तम्" इत्यादिशावरभाष्यस्य अवतारणां कृत्वा व्याख्याने कथयति—भूतादिरूपमप्यर्थं चोदनैव प्रतिपादयति। यदि भूताद्यर्थमपि चोदना प्रतिपादयेत्तदा वेदार्थमात्रस्य कार्यरूपता न सिध्यति। किञ्च भूतवस्तुनः प्रतिपादने भूतवस्तु प्रमाणान्तरविषयमिति अनपेक्षत्वलक्षणं प्रामाण्यमपि वेदस्य न स्यात्। अत्र समाधत्ते निबन्धकारः—"चोदना कार्यरूपस्य अर्थस्य अवगतिं कारयित्वा भूतादेरर्थस्याप्यवगतिं कारयति। शब्दो द्विविधः कार्याभिधायी लिङादिः, भूताद्यभिधायी च लङादिः। लिङादिप्रत्ययः कार्याभिधायी इति कार्यपरः लङादिश्च प्रत्ययः यद्यपि भूतादेरभिधायी तथापि कार्यान्वितभूतादेः प्रतिपादनं करोतीति परम्परारूपेण कार्यपर एव। तथा च भूतादेरभिधायिनः लङादेरपि कार्ये अर्थे तात्पर्यात् कार्यार्थत्वं सिध्यति। अत एव भूतादेरभिधायिनः लङादेरपि अनपेक्षत्वमस्ति। यदि कार्यासम्बद्धस्य शुद्धभूतवस्तुमात्रस्य प्रतिपादनं लङादिः कुर्यात्तदा प्रमाणान्तरसिद्धभूतवस्तुनः प्रतिपादकत्वात्सापेक्षः स्यात्। तथा सति तस्मिन् निरपेक्षत्वरूपं **प्रामाण्यं न स्यादिति।**

कार्यान्तरशून्योऽपि वेदः भूतादिवस्तुनः प्रतिपादको भवितुमर्हतीति। न्यायकणिकायां वाचस्पतिमिश्रः कथयति—"चोदना हि भूतं भवन्तम्" इत्यादिशाबरभाष्यस्य निबन्धनकारप्रदर्शितव्याख्या नैव समीचीना, अत एव आचार्यः मण्डनः "असमञ्जसमेतदि" त्युक्तवान्। एतदिति सर्वनाम्ना निबन्धनकारव्याख्या निर्दिष्टा। निबन्धनकारेण शाबरभाष्यटीकायामेवमुक्तम्। यदि कार्यरूप एव वेदार्थस्तदा भूतार्थप्रतिपादकमन्त्रार्थवादोपनिषद्वाक्यस्य कस्तावदर्थो भवेत्। निबन्धनकारो ह्येतदाशङ्कया भाष्यवाक्यस्यावतारणां कृतवान्, व्याख्यायाञ्च कथयति—चोदनैव भूताद्यर्थस्य प्रतिपादिका। यदि चोदनैव भूताद्यर्थस्य प्रतिपादिका स्यात्तदा कार्यरूप एव वेदार्थो न भवति तथैव भूतार्थप्रतिपादकस्य वाक्यस्य अनपेक्षत्वमपि न स्यादित्येतदभिप्रायेण जिज्ञासां करोति कथम् ? अर्थात् अर्थवादादिवाक्यं भूतार्थप्रतिपादकं कथं भवति ? निवन्धनकारः समाधत्ते—चोदना हि कार्यार्थावगमिका सती भूतादिसिद्धवस्तुनोऽपि अवगतिं कारयति केवलं सिद्धवस्तुनः अवगमिका न भवितुमर्हति-एतत्पर्यन्तमेव निबन्धनकारस्य व्याख्या। आचार्यवाचस्पतिमिश्रः निबन्धनकारदृष्ट्या निबन्धनकारस्य व्याख्यां कृतवान्। "चोदना हीति भाष्यग्रन्थस्य.....................तदिदमसमञ्जसम्। भूतार्थपरत्वेऽप्यनपेक्षत्वेन प्रामाण्योपपत्तेः"। ( न्या० क० पृ० १९९ )

आचार्यमण्डनः विधिविवेकग्रन्थे ब्रह्मसिद्धौ च निबन्धनकारस्य यद्धि वचनं उद्धृतवान् तद्वचनं प्रभाकरविरचिवृहतीटीकायां नोपलभ्यते, अतः प्रभाकर-

विरचितनिबन्धनग्रन्थः कश्चिदन्य एव किन्तु बृहतीग्रन्थे विवेचनसाम्यमस्ति। अत्र विधिविवेकग्रन्थस्य, ब्रह्मसिद्धिकारस्य मीमांसाबृहतीग्रन्थस्य च वाक्यमुद्ध्रियते— "यदि कार्यरूप एव वेदार्थः कथं तर्हि मन्त्रार्थवादाः सोपनिषत्काः यस्माद् भूतादिकमर्थं चोदनैव गमयति। कथं ? कार्यमर्थमवगमयन्ती भूतादिकमपि गमयति।" ( वि० वि० पृ० १९९ )

'कथं तर्हि मन्त्रार्थवादाः सोपनिषत्का इत्याशङ्क्य "चोदना हि भूतं भवन्तमि" त्याद्युक्तम्। एतदुक्तं भवति—कार्यमर्थमवगमयन्ती चोदनैव भूतादिकमप्यर्थमवगमयतीति ये मन्यन्ते तत्प्रतिबोधनाय प्रयत्यते।" ( ब्र० सि० पृ० ७४ )

"चोदनेति क्रियायाः प्रवर्तकं वचनमाहुः' इति कार्येऽर्थे वेदस्य प्रामाण्यं दर्शयति—'चोदना हि भूतमिति। यदि कार्य एवार्थे वेदस्य प्रामाण्यं कथं तर्हि भूताद्यर्थावगतिर्मन्त्रार्थवादेषु ? तेषामपि हि कार्यार्थतां द्वितीये पादे वक्ष्यति। तदुक्तं शक्नोत्यवगमयितुमिति।" ( बृहती १।१।२ )

केचन प्राभाकराः कथयन्ति—निष्प्रपञ्चात्मतत्त्वसाक्षात्कारस्य फलत्वात् तत्र विधिर्न भवितुमर्हति इति सत्यम्, किन्तु निष्प्रपञ्चात्मतत्त्वविषयिका या चिन्तामयी प्रतिपत्तिः तत्र विधिस्वीकारे कापि बाधा नास्ति। निष्प्रपञ्चात्मतत्त्वविषयकशाब्दज्ञानधारैव चिन्ता। इयं शाब्दज्ञानधारैव ध्याननाम्ना उच्यते। ध्यानमेवात्र चिन्ता। ध्यानं चिन्तापरपर्यायः स्मृत्यनुकूलो व्यापारः। ध्यानं वा नैव फलम् अपि तु आत्मतत्त्वसाक्षात्काररूपफलस्य साधनम्, फलसाधनत्वाच्च तत्र विधिस्वीकारे न काप्यापत्तिः। "अन्ये तु शाब्दज्ञानसन्तानविधानमिच्छन्ति। तस्य संहृतनिखिलभेदोल्लेखविशुद्धविशदज्ञानफलत्वात्। अत्रापि नात्मरूपावगतिः। ज्ञानप्रकर्षश्चाभ्यासनिबन्धनः प्रथित इति न चोदनार्थता। ( वि० वि० पृ० २०० )

प्रभारकसम्प्रदायस्य समाधानप्रसङ्गे आचार्यः मण्डनः कथयति—ज्ञानविधितात्पर्यकवाक्यात् ज्ञेयस्वरूपस्य सिद्धिर्न भवतीति पूर्वमेवोक्तम्। चिन्तारूपप्रतिपत्तौ विधिस्वीकारे चिन्तनीयवस्तुनः प्रकृतस्वरूपस्य एतद्विधिप्रमाणेन सिद्धिर्न स्यात्, यतः, चिन्तनीयवस्तुनः आरोपेणापि चिन्ता सिद्ध्यतीति चिन्तनीयविषयः प्रमाणसिद्धो न भविष्यति। प्रभाकरस्य एतन्मते अयं तावत् विशिष्टदोषः—चिन्ता चिन्तनीयवस्तुनः, ध्यानं ध्येयवस्तुनः प्रत्यक्षजनकं भवतीति अन्वयव्यतिरेकसिद्धत्वात् प्राप्तविषयेऽप्राप्तस्य प्रापको विधिर्न भवितुमर्हति। निरस्तभेदप्रपञ्चात्मतत्त्वस्य विधिनिरपेक्षोपनिषद्वाक्येनापि प्रतीतिर्जायते। अनेन प्रकारेण प्रतिपत्तिविधिप्रयुक्तप्रत्येतव्यवस्तुनः सिद्धिर्न भवितुमर्हति, तथा च प्रतिपत्तिविधिप्रयुक्तोपनिषद्वाक्यं प्रत्येतव्यब्रह्मणः प्रतिपादनं न करोति, अपि तु विधिनिरपेक्षोपनिषद्वाक्यमेव निष्प्रपञ्चब्रह्मणः आत्मनो वा प्रतिपादनं

करोति। प्रभाकरमतं स्वीकृत्यैवाचार्यमण्डनः कथयति—"अलं वा गुरुभिर्विवादेन" (वि० वि० पृ० २००) प्रतिपत्तिविधिप्रयुक्तप्रत्येतव्यवस्तु विधिनैव सिध्यति चेत्सिध्यतु मम का आपत्तिः।

ब्रह्मप्रतिपत्तिः यदि विधायकवेदान्तवाक्येन विहिता तदा विधायकवेदान्तवाक्यं प्रतिपत्तव्यनिष्प्रपञ्चे ब्रह्मणि प्रमाणं भवितुं नार्हति। निष्प्रपञ्चं ब्रह्म वेदान्तवाक्यरूपप्रमाणभिन्नान्यप्रमाणेन सिद्धं न भवितुमर्हति इति सर्वसम्मतम्, यदि वेदान्तवाक्येनापि निष्प्रपञ्चस्य ब्रह्मणः सिद्धिर्न भवेत्तदा ब्रह्मणः सिद्धिर्न जातेत्येव वक्तव्यम्। अतः निष्प्रपञ्चे ब्रह्मणि वेदान्तवाक्यानि न प्रमाणानि। केचन ब्रह्मप्रतिपत्तिकर्तव्यताप्रतिपादनव्याजेन ब्रह्मणि वेदान्तवाक्यस्य प्रामाण्यमेव नास्तीति प्रतिपादयन्ति।

"एवम्भूत आत्मा प्रतिपत्तव्यः" एतादृशप्रतिपत्तिविधिना आत्मा अपि एवम्भूत इत्यस्य सिद्धिर्न भवति, यतः यद्वस्तु यादृशं नास्ति तस्य वस्तुनः तेन रूपेण ज्ञानं भवितुमर्हति। "आत्मा विजरो विमृत्युः" अनेन विधिवाक्येन आत्मनः जराराहित्येन रूपेणापि ज्ञानं भवितुमर्हति एवमेव मृत्युयुक्तस्यापि वस्तुनः जरामृत्युरहितरूपत्वेनापि ज्ञाने का आपत्तिः। अतद्रूपवस्तुनि तद्रूपाध्यारोपेणापि ज्ञानस्य चर्चा श्रुतावपि बहुषु स्थानेषु उक्ता। यथा "मनो ब्रह्मेत्युपासीत" "योषा वाव गौतमाग्निः" इत्याद्यनेकश्रुतिवाक्येन यद्धि वस्तु यद्रूपं नास्ति तस्य वस्तुनः तेन रूपेण अवगतेश्चर्चा कृता। अतः, जरामृत्युरहितत्वेन रूपेण ब्रह्मणः ज्ञानं कर्तव्यमिति श्रुतौ कथनेऽपि आत्मा विजरो विमृत्युरिति सिद्धः स्यादिति वक्तुं नैव शक्यते अन्यवस्तुनि अन्यधर्मारोपेणापि ज्ञानं भवितुमर्हति। जैमिनिसिद्धान्तमवलम्ब्यैव प्रतिपत्तिविधिवादिनः आसीत् कदाचित्प्राबल्यम्, ते ब्रह्माद्वैतवादस्य समर्थनं प्रबलयुक्त्या कृतवन्तः।

अद्वैतवेदान्तिनः प्रदर्शितायाः आपत्तेः समाधाने प्रतिपत्तिविधिवादिनः कथयन्ति—ब्रह्मप्रतिपत्तौ विधिस्वीकारे ब्रह्मणः सिद्धिर्नैव स्यात् इति तु महदाश्चर्यम्। अन्यवस्तुनोऽन्यरूपेण ज्ञानमिति तु कस्मिन्नपि मते न सम्भवति, अन्यधर्मसमारोपेणान्यवस्तुनः ज्ञानं भवितुमेव नार्हति। अन्यवस्तुनः अन्यरूपेण ग्रहणे सति तज्ज्ञानमेव न भविष्यति। ज्ञानं कदापि विपरीतार्थकं न भवति—सर्वमपि ज्ञानं यथार्थमेव। अत एव प्रतिपत्तिविधिवादिनः अख्यातिवादिनाम्ना प्रसिद्धाः। अख्यातिवादस्य विस्तृतं विश्लेषणं बृहतीग्रन्थस्य १।१।५ अधिकरणे कृतम्। तथा च "आत्मा एवंरूपो ज्ञातव्यः" इति कथने सति आत्मनः एवंरूपता अवश्यमेव सिध्येत् अत्र नास्ति सन्देहः। ये अतथावस्तुनि तथाभावसमारोपं स्वीकुर्वन्ति तेषां मते ज्ञानविधिना ज्ञेयवस्तुनः सिद्धिः नापि भवितुमर्हति, किन्तु

ज्ञानं कदापि विषयव्यभिचारि न भवति। तथा च ज्ञानविधिवाक्यस्य ज्ञेयस्वरूपे तात्पर्याभावेऽपि ज्ञानमहिम्नैव ज्ञेयवस्तुनः स्वरूपस्य सिद्धिः स्यात्। यद्वस्तु यद्रूपं नास्ति तत् तद्रूपेण कदापि विषयः न भवति, विषयं विनापि यदि ज्ञानं स्यात्तदा लोकव्यवहार एव उच्छिद्येत। ज्ञाने वस्तुनः भासमानत्वेऽपि ज्ञानस्य अन्यदेवालम्बनम्, यथा ज्ञाने रजतं भासते ज्ञानस्य आलम्बनञ्च शुक्तिका—एतच्च प्रतीतिविरुद्धम्। यद् वस्तु ज्ञाने भासते तदेव तस्य ज्ञानस्य विषयः आलम्बनम्, ज्ञाने यत् न भासते तत्तस्य ज्ञानस्य आलम्बनं विषयो वा इति स्वीकारे स्वानुभवविरोध एव भवति।

किञ्च विषयस्य व्यवहारार्थमेव विषयज्ञानस्यावश्यकता वर्तते। विषयाभावेऽपि यदि ज्ञानं स्यात्तदा ज्ञानं प्रति विश्वासः एव न स्यात्। आचार्यमण्डनः अख्यातिवादं खण्डयित्वा अन्यथाख्यातिं स्वीकृतवान् अनिर्वचनीयख्यातिमसौ नैव स्वीकृतवान्, अतः किम् उभयोर्विरोधो नास्ति। यद्यपि मीमांसकाचार्यैः ब्रह्मात्मैक्यं स्वीकृतम् तथापि अद्वैतवेदान्तिभिः सह ऐकमत्यं नास्ति। आचार्यदेशीयमतेन प्रभाकरमतस्यैव निर्देशं कृतवान् भामतीकारः। अमलानन्दः कल्पतरौ प्रतिपत्तिविधिवादिमते आपातदृष्ट्या ब्रह्मात्मैक्यस्य सिद्धिर्भवतीति "अत्रापरे प्रत्यवतिष्ठन्ते" एतस्य पूर्वपक्षस्य सारसङ्कलनप्रसङ्गे उक्तवान्—

अथन्तु—सन्तु वेदान्ता मानं ब्रह्मात्मवस्तुनि।
किन्तु ज्ञानविधिद्वारेत्येष भेदः प्रतीयताम् (क० १।०।४) पृ० १०८

पूर्वपक्षो भवतु सिद्धान्तपक्षो वा प्रभाकरदृष्ट्या ब्रह्मात्मैक्यवादोऽद्वैतवाद एव वर्तते इत्यत्र नास्ति सन्देहः। मण्डनमिश्रः उत्तरमीमांसादृष्टया अद्वैतवादस्य मण्डनं कृतवान् किन्तु प्रभाकरः पूर्वमीमांसादृष्ट्यैवाद्वैतवादमुक्तवान्। पूर्वमीमांसादृष्ट्या ब्रह्मात्मैक्यप्रतिपादनं न सम्भवतीत्येव प्रदर्शनार्थमद्वैतवेदान्ती प्रभाकरमतस्य खण्डनं कृतवान्।

श्लोकवार्तिकस्य टीकाकारः सुचरितमिश्रः स्वप्रणीतकाशिकाटीकायां प्रभाकरमतं निर्दिष्टवान्—चोदनासूत्रस्य भाष्ये आचार्यः शबरस्वामी–"चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवञ्जातीयकमर्थं शक्नोत्यवगमयितुम्" ( जै० सू० १।१।२ भा० )। भट्टपादः प्रभाकरश्च एतस्य भाष्यस्य व्याख्यानं कृतवान्। भट्टपादसम्मतं व्याख्यानमेव समीचीनमिति प्रतिपादनार्थं सुचरितमिश्रः प्रभाकरसम्मतं व्याख्यानं प्रदर्श्य खण्डितवान्। तथाहि—चोदना हि भूतमित्येतस्य ये हि एवं कथयन्ति यत् वेदवाक्येन कार्यरूपार्थप्रतिपादनेऽपि भूतादेरर्थस्यापि अवगतिर्जायते वेदवाक्यं भूताद्यर्थस्य प्रतिपादकं नास्ति अपितु भूताद्यर्थस्यावगमकम्' कार्यरूपेऽर्थे एव वेदस्य तात्पर्यम्, भूतादिवस्तुनि वेदस्य

तात्पर्यं नास्ति। यस्य वाक्यस्य यस्मिन् अर्थे तात्पर्यं नास्ति तद्वाक्यं तस्य अर्थस्य प्रतिपादकं न भवति, वाक्यं तात्पर्यविषयीभूतस्यैवार्थस्य प्रतिपादकं भवति, वेदस्य कार्यरूपे एवार्थे तात्पर्यम्, तथा च वेदावाक्यं कार्यरूपस्यैवार्थस्य प्रतिपादकम्, भूतादिवस्तुनि वेदस्य तात्पर्यं नास्ति अतः वेदो भूताद्यर्थस्य प्रतिपादको नास्ति। वेदस्य भूतादिवस्तुनः प्रतिपादकत्वाभावेऽपि भूतादिवस्तुनः अवगमकत्वं भवितुमर्हति, तात्पर्याभावेऽपि अवगमकत्वे बाधा नास्ति। वाक्यस्य यत्र तात्पर्यन्तत्रैव तत्प्रमाणम्, तात्पर्यविषयीभूते एवार्थे वाक्यं प्रमाणम्, तात्पर्याविषये वाक्यं प्रमाणं न भवति। वेदस्य भूतादिवस्तुनोऽवगमकत्वेपि वेदवाक्यं भूतादिवस्तुनि प्रमाणं नास्ति[1] वेदवाक्यं यदि भूतादिवस्तुनः प्रतिपादकं न भवेत् तदा उपनिषद्वाक्यैः अनाद्यनन्तविज्ञानानन्दस्वरूपब्रह्मणः सिद्धिः कथमिव स्यात्। कस्मिन् च कार्यरूपेर्थे उपनिषद्वाक्यानां प्रामाण्यं स्यात्?

अत्र कार्यार्थतावादी प्रभाकरः कथयति—उपनिषद्वाक्यानां तादृशब्रह्मप्रतिपत्तिकर्तव्यतायामेव तात्पर्यमवगन्तव्यम्। उपनिषदि तादृशब्रह्मज्ञानविषयकं "आत्मा ज्ञातव्यः" इत्यादिविधिवाक्यं वर्तते। एतज्ज्ञानविषयकविधिवाक्यस्यायमर्थः—विज्ञानानन्दस्वरूपं ब्रह्म अवगन्तव्यम्। उपनिषद्वाक्यानां तादृशात्मस्वरूपे तात्पर्याभावे तादृशात्मस्वरूपस्य सिद्धिरुपनिषद्वाक्येन कथमिव स्यात्। अतात्पर्यविषये शब्दः प्रमाणं न भवति, भिन्नतात्पर्यविषयकं वाक्यं भिन्नेऽर्थे प्रमाणं न भवितुमर्हति, अपितु वैपरीत्यस्यैव सम्भावना वर्तते। लोकव्यवहारेऽपि यद्धि वस्तु यद्रूपं नास्ति तस्य तद्रूपेणावगत्यर्थमुपदेशो भवति। यथा यः पिता नास्ति तस्य पितृरूपेण ज्ञानस्योपदेशो लोके भवति। सुमित्रा लक्ष्मणं कथयति—"रामं दशरथं विद्धि" इति। केवलं लोकव्यवहारे एव न अपितु वेदेऽपि एतादृशः उपदेशः वर्तते—"ओमित्येतदक्षरमुद्गथमुपासीत" ओङ्कारः उद्गीथः नास्ति तथापि अनुद्गीथस्योद्गीथरूपेण उपासना उक्ता। अत्र प्राभाकराः वदन्ति यत् उपनिषद्वाक्यानां विधावेव तात्पर्यमिति तादृशात्मस्वरूपस्य उपनिषद्वाक्येन सिद्धिर्माभूत् तथापि प्रमाणान्तरेण तादृशात्मतत्त्वस्य सिद्धिर्भविष्यति। अत्र एषः सन्देहः—प्रमाणान्तरेण कस्य प्रमातुः तादृशात्मस्वरूपसिद्धिः स्यात्। प्रमाता बद्धपुरुषः मुक्तपुरुषो वा। बद्धपुरुषस्य कृते प्रमाणान्तरेण तादृशात्मनः सिद्धिर्न भवितुमर्हति। यतः, संसारबद्धजीवः शरीरेन्द्रियादिसंघातव्यतिरिक्तस्य सच्चिदानन्दब्रह्मस्वरूपस्य साक्षात्कारं कर्तुं न शक्नोति बद्धजीवः शरीरमेव आत्मा इति जानाति, अतः तस्य कृते आत्मा दुःखी, अनित्यः, जडः इत्यादि-

---

१. काशिका पृ० ७०।

२. काशिका पृ० ७०-७१।

रूपेणैवावगतो भवति[1]। एवमेव यः किल मुक्तः पुरुषः सोऽपि प्रमाणान्तरेण तादृशात्मानं ज्ञातुं न शक्नोति। यतः मुक्तः पुरुषः स्वरूपप्रतिष्ठो भवति। तेषामनाद्यविद्याप्रयुक्तं शरीरेन्द्रियादिनिखिलप्रपञ्चजातं चिरनिवृत्तं जायते। अतः मुक्तः पुरुषः प्रमितिप्रमातृप्रमेयप्रमाणादिविभागरहितः सुनिश्चलः आनन्दरूपफलीभूतब्रह्मभावे स्थितो जायते। अस्यामवस्थायां द्वितीयस्य वस्तुनोऽभावात् मुक्तः पुरुषः प्रमाणान्तरेण तादृशं ब्रह्म ज्ञातुं न शक्नोति। अतः ज्ञाने विधिस्वीकारे तादृशज्ञानेन ज्ञेयस्य तादृशात्मतत्त्वस्य सिद्धिर्न भवितुमर्हति। अत एव युक्त्या शास्त्रस्वरूपालोचनया वेदस्य कार्यार्थत्वं न भवितुमर्हति। तस्मात् भट्टपादसम्मत एवार्थः स्वीकरणीयः। उपनिषदा ब्रह्मात्मैक्यस्य सिद्धिर्न भवतीति प्रभाकरस्य व्याख्या नोपादेया। शाबरभाष्यस्य भट्टपासम्मतव्याख्यया उपनिषदा ब्रह्मात्मैक्यस्य सिद्धिर्भवतीति सुरचरितमिश्रः एतस्याः एव व्याख्यायाः समर्थनं करोति।

मण्डनमिश्रः विधिविवेकेऽधिकारविधिनिरूपणप्रसङ्गे भर्तृमित्रस्य मतं प्रदर्श्य खण्डयति—भर्तृमित्रः मीमांसकः सन्नपि आसीदद्वैताचार्यः। प्रभाकरापेक्षया भर्तृमित्रसिद्धान्तः आसीदनुकूलतरः अद्वैतस्य। सम्पूर्णस्य कर्मकाण्डस्य अधिकारसिद्धावेव पर्यवसानम्। शङ्करः मण्डनः अन्ये चाद्वैतवेदान्तिनः चित्तशुद्धिसम्पादकतया विहितकर्म एव आत्मज्ञानेऽधिकारं सम्पादयन्ति। विहितकर्मणा स्वर्गादेः फलस्य लाभो न भवति—इति ते न स्वीकुर्वन्ति अपि तु सर्वस्यापि विहितकर्मणः स्वर्गादिविशेषफलसत्त्वेऽपि विहितकर्मणा शुद्धचित्तः सन् पुरुषः आत्मज्ञाने अधिकारी भवति। आचार्यः शङ्करः नित्यस्य नैमित्तिकस्य वा कर्मणोऽनुष्ठानेन चित्तशुद्धिर्भवतीति कथयति, काम्यं कर्म स्वर्गादिफलस्यैव जनकं भवति, काम्यं च कर्म चित्तशोधकं न भवति। एतादृशमतभेदसत्त्वेऽपि विहितकर्मणः फलं चित्तशुद्धिरेवेति स्वीकरोति। सिद्धित्रयप्रणेता सुप्रसिद्धः यामुनाचार्य्यः स्वग्रन्थे अद्वैतवेदान्तिनामाचार्याणां नामोल्लेखप्रसङ्गे भर्तृमित्रस्यापि नामोल्लेखं कृतवान्। आचार्यः भर्तृमित्रः स्वीकरोति कस्यापि विहितकर्मणः किमपि फलं नास्ति। सर्वमपि विहितं कर्म केवलं रागादिदोषस्यैव निवर्तकं भवति. कर्मानुष्ठानेऽनुष्ठाता शान्तः दान्तश्च भवति, शान्तदान्तपुरुषस्यैव आनन्दस्वरूपनिष्प्रपञ्चात्मनः साक्षात्कारो भवति, अयं साक्षात्कार एव वेदप्रतिपाद्यः पुरुषार्थः। दुःखलेशरहितानन्दात्मकात्मसाक्षात्कार एव पुरुषार्थः। आत्मा निष्प्रपञ्च इति दुःखलेशरहितः एवम् आत्मा आनन्दस्वरूपः। बाह्यविषयैः सह रागद्वेषावेव आत्मसाक्षात्कारविरोधिनौ, विहितकर्मानुष्ठाने निरत-

---

१. काशिका पृ० ७१

पुरुषस्य बाह्यविषयैः सह रागद्वेषौ क्षीणौ भवतः, तथा च पुरुषः शान्तः दान्तश्च भवति। शान्तः दान्त एव पुरुषः आत्मज्ञाने अधिकारी। अशान्तः अदान्तः पुरुषः आत्मज्ञाने नैवाधिकारी जायते। विहितकर्मणा स्वर्गादिफस्य प्राप्तिर्भवति इति तु असङ्गतम्। धनपुत्रस्वर्गादिबाह्यविषयेषु जीवस्य रागः स्वभावतः प्रबलः, रागिपुरुषस्य धनादिषु प्रबलरागस्य सद्भावेऽपि कदाचित् काम्यधनादिलाभोपायाज्ञानात् प्रवलरागादि सोढुं बाध्यो भवति। शास्त्रं यदि काम्यवस्तुनः लाभोपायं निर्दिशति तदा शास्त्रं पुरुषस्य कृतेऽनर्थलाभसाधकं भवति। यथा कश्चित्पुरुषः रागवशात् दुष्टं वस्तु भक्षयितुमिच्छति, किन्तु तस्य वस्तुनः कुत्र उपलब्धिर्भवतीति न जानाति इति इच्छन्नपि असावनिष्टद्रव्यं न भुङ्क्ते, किन्तु कश्चित्पुरुषः तद्वस्तुनः प्राप्त्युपायं प्राप्तिस्थानं च निर्दिशति तदासौ रागी पुरुषः तदनिष्टं वस्तु अनायासेनैव प्राप्नोति भुक्त्वा च तत् अनिष्टफलमपि प्राप्नोति। शास्त्रमपि यद्येवमेतादृशकामिपुरुषस्य काम्यस्य वस्तुनः लाभोपायं वर्णयति तदा कथन्तच्छास्त्रं स्यात्। हितशासकमेव शास्त्रम् यद्यहितशासकमपि शास्त्रं स्यात्तदा अशास्त्रं किं स्यात्। कामिपुरुषस्य कृते कामोपहारप्रदानं रागिपुरुषस्य कृते रोगेन्धनसम्पादनम् शास्त्रस्य कार्यं न भवितुमर्हति। येन पुरुषः अरागः अद्वेषः किष्कामो भवेत्तदेव शास्त्रम्। एवमेव समस्तोऽपि कर्मकाण्डभागः आत्मज्ञानाधिकारसम्पादनार्थं पर्यवसानं लभते—अयं भर्तृमित्रस्याभिप्रायः। विहितकर्मणः पृथक् फलस्यास्वीकारे जीवस्य सुखं विहितकर्मफलमेवमेव निषिद्धकर्मणः फलं दुःखमित्यस्यापि सिद्धिर्न भवति। अतः भर्तृमित्रमा जीवस्य सुखं दुःखं च स्वाभाविकमेव इति स्वीकर्तव्म्। एतस्य स्वभाववादस्य समर्थनं करोतीति लोकायतमतमेव भर्तृमित्रमतम्। एतदर्थमेव भट्टपादः मण्डनमिश्रः अन्ये च आचार्याः एतन्मतं लोकायतमिति खण्डयन्ति। अवसाने मण्डनः कथयति—लोकायतमते यत् स्वीक्रियते वेदेऽपि स एवार्थः इत्येव स्वीकर्तव्यम्। "स्वाभाविकत्वाच्च फलोपभोगस्य स्वभाववाद एवाम्नायार्थश्छद्मना आश्रितः स्यात्"। (वि० वि० पृ० ३३५) "यागादीनामफलसाधनत्वे सेवादेश्च व्यभिचारादहेतुः (व्यभिचारादहेतुत्वे) सुखदुःखादिरेव स्वाभाविकलोकायतिकाभ्युपगताम्नायार्थः इति वचनव्यक्त्यन्तरेणाभ्युपगतं भवतीत्याह स्वभाविकत्वाच्च फलभोगस्य।" (न्या० क० पृ० ३१५)

भर्तृमित्रस्यापव्याख्यानफलेनैव वेदस्य कर्मकाण्डभागो लोकायतीकृतः। जैमिनिसूत्रस्य षष्ठाध्याये अधिकारविधेः निरूपणं वर्तते। मण्डनमिश्रः षष्ठाध्यायप्रतिपाद्यस्याधिकारविधेः आलोचनाप्रसङ्गे भर्तृमित्रमतं प्रदर्शितवान्। भाट्टाः हि भर्तृमित्रमतमेव पूर्वपक्षरूपेण स्वीकुर्वन्ति। विहितकर्मणः फलाभावे

कर्मणि अधिकार एव न सिध्येत् तथा च कर्मणां दृष्टरूपेणैव आत्मज्ञानाधिकारात्मकं प्रयोजनं स्यात्। बाह्यविषये रागद्वेषादेः निवृत्त्या आत्मज्ञाने अधिकारसिद्धिरेव कर्मविधिसमूहस्य प्रयोजनम्। "तथा च फलाभावादधिकाराभावः। न ह्यफलेषु कर्मसु कश्चिन्नियोज्यः स्वामी वा।" (वि० वि० पृ० ३०९) दृष्टेनैव कर्मविधय आत्मज्ञानाधिकारप्रयोजनाः। ( वि० वि० पृ० ३१५ )

निष्प्रपञ्चानन्दस्वरूपात्मनः ज्ञानेऽधिकारसम्पादनमेव कर्मविधीनां फलम्, स्वर्गपुत्रादिलाभार्थं कर्मविधिर्नास्ति, अपि तु तादृशात्मज्ञानेऽधिकारसम्पादनार्थमेव कर्मविधीनां कथनं वेदे वर्तते। अनेनैव तात्पर्येण पूर्वपक्षिणा कर्मणोऽधिकारखण्डनार्थं बह्व्यः युक्तयः प्रदर्शिताः। भर्तृमित्रप्रभृतयः युक्त्या कर्मणि अधिकारखण्डनार्थमेव प्रवृत्ताः आसन्। किन्तु एतत्खण्डनं नैव तदुद्भावितमपि तु जैमिनेः षष्ठाध्यायप्रारम्भे "द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसम्बन्धः" ६।१।१ एतत्सूत्रं पूर्वपक्षिणामेव प्राचीनतमाचार्यसम्मतमासीत्। एतस्य सम्प्रदायस्यैव भर्तृमित्रप्रभृतयः आचार्याः तत्त्वशुद्ध्यादिग्रन्थं लिखित्वा प्राचीनतमाचार्याणामाशयं प्रदर्शितवन्तः। संभाव्यते एतेन पूर्वपक्षिणामेव कदाचित्प्राबल्यमासीत्। ते हि बहूनां ग्रन्थानां निर्माणं कृत्वा प्रचलितसिद्धान्तमेव पूर्वपक्षरूपेण गृहीतवन्तः। यद्यपि भर्तृमित्रविरचिततत्त्वशुद्धिव्यतिरिक्तानां ग्रन्थानामुपलब्धिरिदानीं नास्ति तथापि आसन् केचन ग्रन्थाः प्राचीनाचार्यरचिताः इत्यनुमीयते।

मण्डनमिश्रस्य भावनाविवेकग्रन्थादपि एतादृशपूर्वपक्षस्य रहस्यं मिलति। चलति, पचति इत्यादिक्रियाप्रतिपादकशब्दाः संयोगविभागाख्यगुणस्यैव प्रतिपादकाः, संयोगविभागरूपगुणव्यतिरिक्ता काचन क्रिया नास्ति। प्रत्यक्षेणापि संयोगविभागयोरेव प्रतीतिः जायते, संयोगविभागभिन्ना क्रिया न प्रतीयते। धातोरर्थः संयोगविभागाख्यः गुणः धात्वर्थातिरिक्ता अन्या क्रिया अपि नास्ति। अतः, प्रत्ययार्थः भावना प्रत्ययार्थभावनैव च क्रिया इति न सुसङ्गता।" तस्मात् गुणविशेष एव धातूपादानः क्रिया, न तु तदतिरिच्यमानात्मा क्रियापदार्थः यः प्रत्ययस्य धातोर्वाऽभिधेयः स्यात्। ( भा० वि० पृ० ३५ ) अत एव प्राचीनतमः मीमांसकः वादरिः द्रव्यगुणसंस्काराणामेवाङ्गत्वं प्रतिपादितवान्। तन्मते यागादिक्रिया नैवाङ्गभूता यतः यागादिक्रिया संयोगविभागव्यतिरिक्ता नास्ति। अत एव गुणतः पृथग्रूपेण क्रियायाः अङ्गत्वेन निर्देशो नास्ति, किन्तु जैमिनिः गुणव्यतिरिक्तां क्रियां स्वीकरोति। अत एव "द्रव्यगुणसंस्कारेषु वादरिः" एतस्य सूत्रस्य अनन्तरमेव "कर्मण्यपि जैमिनिः फलार्थत्वात्" ( जै० सू० ३।१।४ ) इत्युक्तवान्। तेन च गुणव्यतिरिक्तस्य कर्मणोऽपि फलाङ्गत्वकथनं सुसंगतं भवति। मीमांसादर्शनस्य षष्ठाध्यायस्य प्रारम्भे "स्वर्गकामो यजेत" इत्याधिकारविधि-

वाक्यस्य कीदृशोऽर्थो भवेदिति निरूपणार्थं भाष्यकारेणोक्तम्—उक्तविधिवाक्यात् स्वर्गादिकर्मण: प्राधान्येन एवं यागादिकर्मणश्च प्राधान्येन प्रतीतिरस्ति ? अथ वा यागादिकर्मणोऽप्राधान्येन स्वर्गस्य च प्राधान्येन प्रतीति: ? पूर्ववाक्ये स्वर्गकाम: एवं यजेत इयि पदद्वयं वर्तते। पदयोश्च सम्बन्ध: वर्तते इत्यवश्यमेव स्वीकरणीयम्। वाक्यान्तर्गतपदयो: परस्परं संसृष्टत्वाभावे एकवाक्यत्वमेव न स्यात्, यथा गौ: अश्व: पुरुष: हस्ती—एतेषां चतुर्णां पदानां परस्परं सम्बन्धो नास्तीति एकवाक्यत्वमपि एतेषां नास्ति। "स्वर्गकामो यजेत" इति एकं वाक्यं पदार्थद्वयं च परस्परं सम्बद्धं सदेकस्य विशिष्टस्य अर्थस्य बोधकम्। सम्बद्धयोरुभयो: पदयो: कस्तावत्सम्बन्ध: ? 'यजेत' पदान्तर्गतयज्धातोरर्थ: याग: साध्यं साधनम्वा ? साध्यरूपेण प्रतीत: अर्थ: प्रधानं साधनरूपेण प्रतीत: अर्थ: अप्रधानम्। द्वयो: पदार्थयो: सम्बन्धे सति प्रधानभावेन अप्रधानभावेन च सम्बन्ध: स्यात्। द्वयोरपि पदार्थयो: प्रधानभावेन अथवा उभयोरपि अप्रधानभावेन च सम्बन्धो न भवितुमर्हति। विशिष्टार्थे एकोऽर्थ: प्रधानं विशेष्यम्वा स्यात् अन्योऽर्थोप्रधानं तस्य विशेषणम्वा स्यात्। वाक्यं क्रियाप्रधानमेकप्रयोजनकञ्च भवतीति वाक्यस्य स्वभाव:। अर्थस्य चैष: स्वभावो यत् क्रिया स्वभावत: एव साध्यरूपा एवं द्रव्यञ्च स्वभावत: एव सिद्धरूपम्। साध्यस्वरूपा क्रिया स्वसिद्धयर्थं साधनरूपसिद्धस्वभावं द्रव्यमपेक्षते। सिद्धस्वभावं द्रव्यमेव साधनं भवितुमर्हति। असिद्धं साधनं भवितुं नार्हति। अत्र सिद्धस्वभावं स्वर्गद्रव्यं साध्यस्वभावाया: यागक्रियाया: साधनं स्यात्, किन्तु साध्ययाग: सिद्धस्वर्गस्य साधनं न भवितुमर्हति, अत: स्वर्गेण याग: सिद्धयति किन्तु यागेन स्वर्गस्य सिद्धिर्न स्यात्, स्वर्गो यदि यागस्य साधनं स्यात्तदा स्वर्गस्य फलत्वमेव न स्यात्, साध्यमेव वस्तु फलं भवति। यागस्य साध्यत्वे याग एव फलं स्यात् फलस्यैव वाक्यार्थे प्रधानरूपेण प्रतीति: भवति। स्वर्ग: यदि यागसाधनं तदा स्वर्ग: अप्रधानं स्यात् अप्रधानमेव च गुणशब्देनोच्यते। अत: प्रदर्शितवाक्यस्य यो हि अर्थ: तत्र स्वर्गस्य फलत्वेन प्रधानत्वं न स्यात्, यागस्यैव फलत्वात् अर्थात् साध्यत्वात् प्रधानत्वेन प्रतीति: स्यात्। तथा च स्वर्गफलस्य साधनं याग: इति एतस्य वाक्यस्य अर्थ एव नास्ति। स्वर्ग: यागश्च उभयमपि फलमेवेति एकेन वाक्येन प्रत्येतुं न शक्यते। द्वयमपि साध्यं फलमेवेति स्वीकारे प्रदर्शितवाक्यस्य एकत्वं न स्यादपि तु द्वित्वं स्यादर्थाद्वाक्यद्वयत्वापत्तिस्तथा च वाक्यभेददोष: आपतति। स्वर्गं कुर्यात् यागं कुर्यात् एतादृशकथने 'स्वर्गकामो यजेत' एतद्वाक्यस्य अनुभवसिद्धमेकत्वं न स्यात्। साध्यस्य फलस्य वा भेदप्रयुक्तं वाक्यमपि भिन्नं स्यात्। "इह केचित् क्रियाप्रधानमेकार्थं वाक्यमिति। क्रियैव हि भाव्यते, स्वभावसिद्धं द्रव्यं गुणमिति वदन्त: फलस्यासमन्वयं वाक्ये मन्यन्ते। ( वि० वि० पृ० ३०८–३०९ )

"सर्वमेव हि क्रियाप्रधानमेकार्थमेकप्रयोजनं वाक्यं शब्दप्रवृत्त्यनुसारात्। वस्तुतोऽपि क्रियैव हि स्वभावतः साध्यरूपा भाव्यते, स्वभावसिद्धं तु द्रव्यं "भूतं भव्यायेति" न्यायात् तां प्रति गुणभूतं स्वर्गादीति वदन्तः फलस्यासमन्वयं मन्यन्ते। फलत्वेन तु सम्बन्धे स्वर्गादेस्तत्प्राधान्यात् क्रियाया न प्राधान्यम्। उभयप्राधान्ये च एकार्थत्वं लोकावगतमपहीयेतेति भावः।" ( न्या० क० पृ० ३०९ ) अनेन रूपेण स्वर्गः फलं न भविष्यतीति स्वर्गफलकामिनः यागे अधिकारोऽपि न सिध्येत्। निष्फले कर्मणि कोऽपि अधिकारी स्वामी वा न भवितुमर्हति। "तथा च फलाभावादधिकाराभावः। न ह्यफलेषु कर्मसु कश्चिन्नियोज्यः स्वामी वा।" (वि० वि० पृ० ३०९) मीमांसासूत्रेऽपि एतादृशी चर्चा वर्तते–"द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसम्बन्धः" ( मी० सू० ६।१।१ ) स्वर्गादिद्रव्यं यागादिकर्मणा सह गुणभावेन अर्थात् अप्रधानभावेन सम्बद्धं स्यात्, किन्तु रूपेण अर्थात् प्रधानरूपेण सम्बद्धं भवितुं नार्हति। भर्तृमित्रप्रभृतयः मीमांसायाः यस्य सूत्रस्योल्लेखं कृतवन्तः तत्सूत्रं यागादिकर्मणः स्वर्गादिफलसाधनता इति अधिकरणस्य पूर्वपक्षसूत्रम्। जैमिनेः पूर्वपक्षः एव भर्तृमित्रादीनां सिद्धान्तपक्षः। "स्वर्गकामो यजेत" एतद्वाक्यस्वभावस्य एतद्वाक्यसाथ्र्यस्य वा आलोचनायां प्रदर्शित एवार्थोऽवगतो भवति। वस्तुनः सामर्थ्यस्य आलोचनायाः स्वर्गादिद्रव्यं यागादिकर्मणः फलं भवितुं नार्हति। 'यजेत' इति पदं यज्धातोः 'इत' एतद्विभक्तियोगेन निष्पन्नं भवति। विभक्तेः अर्थः भावना पुरुषस्य प्रयत्नो वा। यज्धातोरर्थः यागः। पुरुषस्य प्रयत्नः यागविषयकः एव स्यात् स्वर्गविषयको न भवितुमर्हति। पुरुषप्रयत्ननिष्पाद्यं यागाख्यमेव कर्म, स्वर्गः पुरुषप्रयत्ननिष्पाद्यो नास्ति। पुरुषः स्वप्रयत्नेन यागादिक्रियामेव सम्पादयति न तु स्वर्गं निष्पादयति। यतः स्वर्गविषयकः पुरुषप्रयत्नोऽसम्भवः एव, अतः पुरुषप्रत्नेन सह स्वर्गादिफलस्य सम्बन्धः असम्भव एव। पुरुषप्रयत्नस्य निष्पाद्यत्वेऽपि पुरुषप्रयत्ननिष्पन्नयागेन स्वर्गादेः सिद्धिः स्यात्, प्रयत्नसिद्धः यागः स्वर्गादिफलस्य साधनं करणं वा स्यादेव, तथा च स्वर्गादिफलेन सह यागादिकरणस्य सम्बन्धोऽपि भवितुमर्हतीति कथनमपि असङ्गतम्। यतः, व्यापारवत्कारणमेव करणं भवति। यागः यदि स्वर्गफलस्य करणं स्यात्तदा यागेऽपि स्वर्गफलजनकव्यापारः स्वीकरणीयः, व्यापारशून्यं वस्तु करणं भवितुं नार्हति, स्वर्गफलजनकव्यापारश्च यागादिक्रियायां न दृश्यते, अतः, व्यापारशून्यो यागः स्वर्गफलस्य करणं न भवितुमर्हति। "एवं तावद् द्रव्याणां कर्मसम्बन्धे गुणत्वेनाभिसम्बन्धो न फलत्वेन इति युक्तम्। वस्तुतश्च न सम्बन्धः फलत्वेन, पुरुषप्रयत्नस्य यागादिविषयत्वात् स्वर्गाद्यसम्बन्धाद्यागादेश्च व्यापारान्तरादर्शनात् करणत्वानुपपत्तेः।" ( वि० वि० पृ० ३१० )

"पुरुषप्रयत्नस्य भावनाया यागादिविषयत्वाद्धेतोः स्वर्गाद्यसम्बन्धात्। न जातु पुरुषः स्वर्गे व्याप्रियमाण उपलभ्यते अपि तु यागे। ततश्च याग एवतस्य साध्यो न स्वर्गः। अथ पुरुषप्रयत्नसाध्योऽपि यागः फलं प्रति करणं भविष्यति ततः सम्बन्धः उपपत्स्यते इत्यत आह–यागादेश्च व्यापारान्तरादर्शनात् करणत्वानुपपत्तेः। करणत्वं हि क्रियायोगेन व्याप्तं स चादर्शनात् यागादेर्निवृत्तः करणत्वमपि निवर्तयतीत्यर्थः।" ( न्या० क० पृ० ३११ ) यद्युच्येत 'यजेत स्वर्गकामः" अनेन वाक्येन यागो विहितः, अनेन विहितेन यागेन यदि एतद्वाक्यनिर्दिष्टं फलं न स्यात्तदा यागे विधिरस्तीति विश्वजिन्यायेन जन्यफलस्य कल्पना स्यात्। "विश्वजिता यजेत" अस्मिन् वाक्ये कस्यापि फलस्य निर्देशाभावेऽपि यागे विधिरस्तीति विधिसामर्थ्यवशादेव स्वर्गफलकल्पना जायते, तथैव "स्वर्गकामो यजेत" अस्मिन् वाक्ये नापि यागे विधिरस्तीति अन्यफलकल्पना स्यात्, किन्तु एतदपि नैव सङ्गतम्, यतः "यजेत स्वर्गकामः" अस्मिन् वाक्ये यथा श्रुतस्वर्गोपि विहितयागसाध्यत्वेन वा अन्वितो न भवति तथैव विश्वजिन्यायानुसारं कल्पितस्वर्गोऽपि फलत्वेन साध्यरूपत्वेन वा विहितयागेन सह अन्वितो न भवितुमर्हति। फलेन सह विहितयागस्य साध्यसाधनभाव एव सम्बन्धो भवितुमर्हति अर्थात् स्वर्गादिफलं साध्यं विहितयागश्च साधनम् किन्तु, एतन्न भवितुमर्हति। यतः "यजेत" इत्यनेन यागः साध्यरूपेण प्रतीयते, साध्ययागस्य फलसाधनत्वं कथमिव स्यात्? साध्यत्वं साधनत्वञ्च विरुद्धधर्मः। असिद्धमेव साध्यमेवं सिद्धवस्तु एव साधनं भवति, यागादिक्रिया साध्यस्वभावा, तस्मिन् साधनत्वं कथं स्यात्। अतः यागादिक्रियायाः साधनत्वमेव दुर्बोधम्, अर्थात् साधनत्वमेव सिद्धं न स्यात्। "यजेत" इति यज् धातुः एकदैवोच्चारितः। एकदैवोच्चारितः एकदैव श्रुतः यज् धातुः परस्परविरुद्धेन साध्यत्वेन साधनत्वेन च रूपेण यागस्य अवगतिं नैव कारयितुं शक्नोति। "यजेत" इति कथनेन यागस्य साध्यत्वमेव प्रतीयते। साध्यरूपेण प्रतीतस्य यागस्य साधनत्वेन रूपेण प्रतीतिः कथमिव स्यात्? "न विधिसामर्थ्यादन्यदपि फलं तस्याप्येवमसमवायात् वैरूप्यात् साधनभावस्य दुरवबोधत्वात्।" ( वि० वि० पृ० ३१२ )

"यागश्च विधिसाथ्यत्तु विश्वजिदादिवत् कल्पितेन फलान्तरेण संभन्त्स्यते इत्यत आह—न विधिसामर्थ्यादन्यदपि फलम्। कुतः? तस्याप्येवं श्रुतफलपदासमवायात्। कुतः? वैरूप्याद्धेतोः साधनभावस्य दुरवबोधत्वात्। न जातु सकृदेव श्रुतो यागः साध्यं साधनञ्चेत्युपपद्यते विरोधात्। तस्मात् साधनभावो दुरवबोधः साध्यत्वेन श्रुतस्य यागस्येति।" ( न्या० क० पृ० ३१२ )

यद्युच्येत "यजेत" इति शब्देन यागस्य साध्यरूपेण प्रतीतावपि अर्थापत्त्या फलं प्रति यागः साधनं भवितुमर्हति। शब्दप्रमाणेन यागः साध्यरूपेण अर्थापत्त्या

च यागः साधनरूपेण प्रतीयेत । एकेन प्रमाणेन साध्यत्वस्य साधनत्वस्य च यागे प्रतीतिर्न भवितुमर्हति, वैरूप्यापत्तेः किन्तु भिन्नेन प्रमाणेन यागे फलसाधनत्वप्रतीतौ पूर्वोक्तदोषो न संघटते । पूर्वोक्तविश्लेषणेन यागे फलसाधनतायामर्थापत्तिरेव प्रमाणम् किन्तु चोदना अर्थात् विधिः प्रमाणं नास्ति इत्येव मन्तव्यम्, तथा च धर्मे विधिवाक्यमेव प्रमाणमिति तव प्रतिज्ञायाः विरोधः स्यात् । यागादिकर्मणः फलसाधनत्वाभावेऽपि विधिवाक्येन यागादेः साध्यत्वप्रतीतौ न कोऽपि दोषः । तथा च अर्थापत्त्या यागादेः फलसाधनतायाः सिद्धिः न स्यात्, अफलं च कर्म प्रवृत्तेः कारणं न भवतीत्यपि न सुसङ्गतम्, यतः, निष्फलेऽपि कर्मणि लोकानां प्रवृत्तिर्न भवतीति स्वीक्रियते तदा "न कुर्वीत वृथा चेष्टाम्" इति धर्मशास्त्रिणा कथं निषिद्धम् ? निष्फले कर्मणि यदि केषामपि प्रवृत्तिर्न स्यात्तदा पूर्वोक्तः निषेधः व्यर्थं एव स्यात् । विहितनिष्फलकर्मातिरिक्तं रागप्रयुक्तं निष्फलं कर्म न कुर्यात्—इत्येवोक्तनिषेधवाक्यस्याभिप्रायः । "नार्थापत्तितः । चोदनालक्षणत्वहानेः तस्याः साध्यपर्यवसानात् । अफलस्य कर्मणो लोके साध्यत्वादृष्टेः । साधनत्वस्य च साध्यपुरःसरत्वादर्थात्तदाक्षेपायोगात् । साध्यत्वस्य पुरोभाविनः साधनत्वाक्षेपासामर्थ्यात् ।" (वि० वि० पृ० ३१२) चोदनातः साध्यत्वेन प्रतीतस्य यागादेरर्थापत्तितः फलं प्रति साधनत्वं गम्यते माभूद्वैरूप्यम्, इत्यत आह—नार्थापत्तितः । कुतः ? चोदनालक्षणत्वहानेः । फलसाधनता चेदर्थापत्तिगम्या चोदनालक्षणत्वं न स्यात् । ततश्च चोदनैवेति प्रतिज्ञाव्याघातः ! न चार्थापत्तेश्चोदनामूलतया तद्विषयश्चोदनालक्षण इति साम्प्रतम् । चोदनाया यागादिसाध्यमात्रपर्यवसितायाः फलसाधनतामन्तरेणोपपत्तेरर्थापत्तिमूलत्वाऽभावादित्याह—साध्यत्वपर्यवसानात् । अथाफलस्य साध्यत्वं चोदनाप्रतीतमनुपपन्नमिति चोदनैव साध्यत्वप्रतिपादिकाऽपर्यवस्यन्ती फलकल्पनाबीजमिति तत्राह—अफलस्य कर्मणो लोकसाध्यत्वेनादृष्टेः । यत्किल धर्मशास्त्रकारो निषेधति 'न कुर्वीत वृथा चेष्टामिति' । ( न्या० क० पृ० ३१२ )

यदि "यजेत स्वर्गकामः" इति विधिवाक्येन यागादिधात्वर्थस्य साध्यतामात्रेणैव प्रतीतिर्जायते न तु यागादिधात्वर्थे स्वर्गादिफलस्य साधनता प्रतीयते तदा विधिः कथमिव स्यात् ? अभिमतसाधनत्वमेव लिङादिविधिप्रत्ययस्य अर्थः इति यदुच्यते मीमांसकैः तन्न समीचीनम् । यतः प्रवर्तनैव विधिप्रत्ययस्यार्थः । विधिशब्दः पुरुषस्य अर्थमनर्थं वा न स्पृशति । यद्यपि प्रवृत्तिहेतुरेव प्रवर्तना, इष्टसाधनत्वमपि प्रवृत्तिसाधनमेव, तथापि लिङादिविधिप्रत्ययः साधारणरूपेण प्रवृत्तिहेतुत्वरूपेणैव प्रवर्तनायाः बोधकः भवति, प्रार्थना, अनुज्ञा एवम् उपदेशः इत्येतेषु चतुर्षु अर्थेषु एव विधिशब्दः प्रयुक्तः भवति, आज्ञादिचतुर्षु अर्थेषु एव प्रवृत्तेर्हेतुता वर्तते । आज्ञया प्रवृत्तिर्भवति सा सकलानुभवसिद्धा ।

आज्ञापयिता प्रार्थयिता च स्वेष्टसाधनत्वस्य प्रतिसन्धानं कृत्वा आज्ञां प्रार्थनां वा करोति। यं प्रति आज्ञां प्रार्थनां वा करोति तस्य आज्ञाप्यस्य प्रार्थनीयस्य वा पुरुषस्य इष्टसाधनत्वस्य प्रतिसन्धानं कृत्वा आज्ञां प्रार्थनां वा न करोति। स्वामी भृत्यमाज्ञापयति—"गामानय"। अत्र स्वामी स्वकल्याणमनुसन्धायैव भृत्यमाज्ञापयति। सम्भवति आज्ञापालनेन भृत्यस्यापि इष्टसाधनत्वम् तथापि आज्ञा भृत्यस्य इष्टसाधनतां नैव प्रतिपादयति। प्रमाणान्तरेणैव आज्ञापालकस्य भृत्यस्य इष्टस्य ज्ञानं जायते। एतादृशप्रार्थनायामपि प्रार्थयितुः इष्टसाधनत्वमेव प्रतीयते। प्रार्थनीयपुरुषस्य कल्याणं प्रति लक्ष्यं कृत्वा प्रार्थना नैव प्रयुज्यते। यथा—"माणवकमध्यापय" इत्यस्यां प्रार्थनायां प्रार्थनीयस्य गुरोः इष्टस्य प्रतिसन्धानं नास्ति। प्रार्थयिता स्वेष्टस्य सिद्ध्यर्थमेव प्रार्थनां करोति। आज्ञया प्रार्थनया च उपदेशः भिन्नः। उपदेष्टा स्वेष्टमभिसन्धाय नैवोपदिशति। अपि तु उपदेश्यपुरुषस्य इष्टसाधनतायाः एव प्रतिसन्धानं कृत्वा उपदेशं करोति, यथा—"ज्वरितः पथ्यमश्नीयात्" ज्वररोगयुक्तस्य पुरुषस्यैव इष्टसाधनतायाः प्रतिपादनं करोति न तु उपदेष्टा आत्मनः इष्टमभिसन्धाय उपदेशं करोति। अनुज्ञायामनुज्ञाता आत्मनः इष्टसाधनतामनुसन्धाय अनुज्ञां नैव करोति अपितु अनुज्ञेयपुरुषस्यैव इष्टसाधनत्वमवगत्य अनुज्ञां करोति। उपदेशे अनुज्ञायाश्चैष एव भेदो वर्तते यत् अप्रवृत्तं पुरुषं प्रवर्तयति उपदेशेन उपदेष्टा, स्वेच्छया प्रवृत्तः पुरुषः अनुज्ञया प्रवर्तितो भवति। स्थलविशेषे च अनुज्ञायामपि अनुज्ञातुः पुरुषस्य इष्टसाधनत्वस्य प्रतिसन्धानं वर्तत एव। विधिविभक्तेः पूर्वोक्तविश्लेषेण सन्ति चत्वारोऽर्थास्तथा प्रवर्तनारूपं चतुर्ष्वपि अनुस्यूतं वर्तते। आज्ञा प्रार्थना नास्ति तथापि प्रवर्तना अस्त्येव। आज्ञा, प्रार्थना उपदेशश्च अप्रवृत्तप्रवर्तना किन्तु अनुज्ञा प्रवृत्तप्रवर्तना इयान् एव भेदः, प्रवर्तना तु चतुर्ष्वपि वर्तते। आज्ञादिकं प्रवर्तनाया एव विशेषरूपम्। सामान्यरूपेण प्रवर्तना सर्वत्रैव विद्यतेऽतः प्रवर्तनैव विधिशब्दार्थस्तथा चानेकार्थत्वरूपः दोषः शब्दे स्यात् एकार्थत्वे सम्भवति शब्दस्य अनेकार्थत्वं नैव स्वीकर्तव्यम्[1]। एकस्य शब्दस्य अनेकार्थेषु शक्तिस्वीकारे शक्तिकल्पनायां गौरवं स्यात्। "यजेत स्वर्गकामः" अनेन वाक्येन यागः स्वर्गसाधनमेषोऽर्थः कथमपि भवितुं नार्हति। तथा च यागादिकर्म निष्फलमेव स्यात्। अनेन प्रकारेण कर्मविधायकं किमपि वाक्यं फलसाधनकर्मणः प्रतिपादनं कर्तुं

---

१. "कथं तर्हीदानीं विधिः? किमत्र कथम्? प्रवर्तनामात्रं विधिर्न्न पुरुषार्थानर्थौ स्पृशति। कुतः? प्रतीतेरव्यभिचाराच्च। तथा च लिङ्गादिभ्यः प्रेरणावगमः। यद्यपि चेष्टसाधनता प्रवृत्तिहेतुः। शब्दस्त्वनामृष्टतद्रूपः प्रवर्तनामात्रस्य चाऽव्यभिचारात्। अनेकार्थत्वदोषात्। वि० वि० पृ. ३१३

न शक्नोति। किमपि विहितं कर्म फलस्य जनकं भवितुं नार्हति। तथा च निष्प्रयोजनस्य कर्मण उपदेश एवनस्यात् यतः निष्फलकर्मणः उपदेशे उपदेश एव अनर्थकः भवेत्। अत्रेदं वक्तव्यं यत् निष्फलर्मणः उपदेशस्य यदि किमपि प्रयोजनं स्यात्तदा उपदेशः निरर्थकः कथं स्यात्? यदि प्रयोजनं न स्यात् तदा निरर्थक एव स्यादत्र किमु वक्तव्यम्? कर्मोपदेशस्य प्रयोजनं हि आत्मज्ञाने अधिकारसिद्धिरेव। कथं सर्वस्यापि कर्मविधेः एकमात्रं प्रयोजनम् आत्मज्ञाने पुरुषस्य अधिकारसिद्धिः? एतस्य समाधानप्रसङ्गे विधिविवेके उक्तं मनुष्यः विविधविषयरागसम्पन्नः सन् एव जन्मग्रहणं करोति। जीवस्य विषयरागः स्वाभाविकः, वीतरागपुरुषस्य जन्म न भवति। स्वभावसिद्धविषयरागप्रयुक्तः पुरुषः स्वीयरागस्य धनपुत्रकलत्रादेः लाभार्थं कृषिवाणिज्यादौ एवमेव स्तेयद्यूतमृगयादौ दृष्टसाधने अनुरक्तः स्यात्। दृष्टे विषयेऽतिशयानुरागप्रयुक्त एव विषयप्राप्तिसाधनेषु नितान्तमनुरक्तः जायते। अतः शास्त्रे निष्प्रपञ्चानन्दस्वरूपात्मतत्त्वस्य उपदेशेऽपि तादृशात्मतत्त्वस्य ज्ञानार्थं तत्प्रणिधानार्थं वा प्रवृत्तिर्नैव स्यात्। विषयरागयुक्तस्य पुरुषस्य तादृशात्मतत्त्वस्य साक्षात्कारस्तु सुदूरपराहत एव। कर्मणामुपदेशेन शास्त्रं मनुष्यस्य स्वाभाविकप्रवृत्तेः निवृत्तिं सम्पादयति। शास्त्रोपदिष्टे कर्मणि सततं निरतः सन् पुरुषः अनुशिष्टो भवति विषयरागश्च क्रमशः शान्तो भवति। स्वभावतः मनुष्यः पुत्रकलत्रपरिजनादिचिन्तायां नियुक्तः सन् अपि शास्त्रोपदिष्टे कर्मणि सततं निरतः परिजनचिन्तायां पूर्ववदभिनिविष्टः न भवति। शास्त्रीयकर्मपद्धतौ व्यवस्थितः सन् दान्तो जायते। काम्यचिन्तया चित्तं व्याकुलं न भवति। एतस्यामेवावस्थायां शास्त्रोपदिष्टनिष्प्रपञ्चात्मतत्त्वज्ञानार्थं प्रणिधाने समर्थो भवति। अनेन रूपेण कर्मविधिः फलसाधनकर्मणि पुरुषस्य कृतेऽधिकारसिद्धिमकृत्वा एव रागनिवृत्तिपूर्वकं निष्प्रपञ्चात्मनः ज्ञाने पुरुषस्य अधिकारं साधयति[1]। एतादृशार्थस्वीकारे एव शास्त्रस्य शास्त्रत्वं सिद्ध्यति। येन नियोज्यस्य पुरुषस्य अनुशासनमथवा येन पुरुषस्य हितानुशासनं जायते तदेव शास्त्रम् शास्त्रीयप्रवृत्तेरुपदेशेन पुरुषस्य स्वाभाविकीं प्रवृत्तिं निर्वर्तयति। स्वाभाविकप्रवृत्तिः परिणामदुःखेन, तापदुःखेन च विमिश्रिता वर्तते। एतत्त्रिविधदुःखात्मिकया प्रवृत्त्या निवृत्तं कृत्वा शास्त्रं नियोज्यपुरुषस्य अनुशासनमेव करोति, तेनैव च शास्त्रस्य शास्त्रत्वं रक्षितं भवत्ति। निष्प्रपञ्चनित्यानन्दस्वरूपात्मनः ज्ञानेऽधिकारसिद्धौ सत्यां कर्मविधिः हितस्यापि उपदेशको भवति। हितानुशासकमेव शास्त्रम्, आत्मनः ज्ञानापेक्षया किमन्यद्धितं स्यात्[2]। यन्मते विहितं कर्म

१. वि० वि० पृ० ३१३—१४।
२. वि० वि० पृ० ३१४, न्या० क० पृ० ३१४।

पुत्रधनस्वर्गादिः साधनम्, स्वर्गादिफलसाधनतैव कर्मणो वर्तते इत्येव सिद्धान्तः तन्मते कर्मप्रतिपादकस्य वेदस्य शास्त्रत्वमेव नास्ति। प्रकारान्तरेण कर्मशास्त्रस्य अशास्त्रत्वमेव ते स्वीकुर्वन्ति। पुत्रधनस्वर्गादिः विहितकर्मणः फलत्वे एतदवश्यमेव स्वीकर्तव्यम् यत् मनुष्याणामेतेषु सर्वेष्वपि फलेषु स्वाभाविकः राग: कामना वा वर्तते। तथा च स्वभावसिद्धरागविषये प्रवृत्तिरपि स्वाभाविकी। काम्यफलस्य साधनापरिज्ञाने साक्षात्फले प्रवृत्तिर्न भवितुमर्हति। शास्त्रमेतेषां काम्यफलानां साधनं प्रतिपाद्य पुरुषस्य स्वाभाविकप्रवृत्तौ साहाय्यं कुर्यात्। तदा शास्त्रस्य शास्त्रत्वमेव निवर्तेत। स्वेच्छावशात् प्रवृत्तौ साहाय्यस्य सम्पादकं शास्त्रं न भवति। न तदनुशासकं जायते। एतादृशेन च शास्त्रेण नैव पुरुषः अनुशिष्टो भवति। कर्मविधिसमूहस्य आत्मज्ञानेऽधिकारसिद्धिः एव प्रयोजनम्, किन्तु एतत्कथनमसङ्गतमेव। यतः कर्मविधिना यदि विहितं कर्म एव साध्यम्, स्वर्गादिफलं न साध्यं तदा ज्ञानविधिना मोक्षफलस्य सिद्धिः कथं भवेत्? यथा कर्मविधिना कर्मण एव साध्यत्वं प्रयीयते। तेन च मोक्षफलं न सिद्ध्यति, कर्मविधिः यथा कर्मणि प्रवर्तनामवगमयति तथैव ज्ञानविधिरपि ज्ञाने प्रवर्तनामवगमयेत्। कर्मविधेः ज्ञानविधेश्च एकैवावस्था स्यात्। एतदपि कथनं न सुसङ्गतम्। यतः ज्ञानं दृष्टार्थम् अर्थात् यद्यपि विधिशब्देन ज्ञानस्य सम्बन्धो नास्ति, ज्ञानविधिः ज्ञानस्यैव साध्यत्वं प्रतिपादयति तथापि ज्ञानं ज्ञेयतन्त्रम्। ज्ञेयवस्तु यादृशं स्यात् तज्ज्ञानमपि तथैव भवेत्। ज्ञेयनिरपेक्षः ज्ञानाकारो नैव भवितुमर्हति। "नन्वेवं ज्ञानविधिरप्यनुशासनमात्रमेव स्यात्? न। ज्ञानस्य दृष्टार्थत्वात् स्वभावतश्च गुणभूतत्वात्।" ( वि० वि० पृ० ३१५ ) भ्रमज्ञानमस्माभिः न स्वीक्रियते, तथा च विषयस्य अन्यरूपत्वेऽपि तस्य ज्ञानमन्याकारकं स्यादिति तु प्रतीतिविरुद्धम्। तस्मात्, आत्मज्ञाने विधेः सत्त्वेऽपि एतज्ज्ञानं ज्ञेयतन्त्रमिति आत्मनः निष्प्रपञ्चरूपतायाः आनन्दरूपतायाश्च सिद्धिः स्यात्। आत्मस्वरूपः एव मोक्षः। अतः ज्ञाने विधिसत्त्वेऽपि फलस्य असिद्धिर्न स्यात्। ज्ञातं तादृशमात्मस्वरूपमेव फलम्। ज्ञानं स्वभावत एव ज्ञेयतन्त्रम् सर्वत्रैव ज्ञेयं प्रधानम् ज्ञानञ्चाप्रधानम्। आत्मज्ञानस्य विधिसाध्यत्वेऽपि ज्ञानापेक्षया ज्ञेयस्य प्रधानत्वेन तादृशात्मनः सिद्धौ कापि बाधा नास्ति। भ्रमज्ञानं ज्ञेयनिरपेक्षमिति भ्रमज्ञानेन ज्ञेयवस्तुनः सिद्धिर्न स्यात्। अस्माभिस्तु भ्रमज्ञानं न स्वीक्रियते, अख्यातिवादसमर्थकाः वयम्। भर्तृमित्रस्यैतन्मतं प्रभाकरानुरूपतां भजेत। आत्मज्ञाने विधिस्वीकारे वेदस्य कार्यार्थतैव स्यात् तथा च भ्रमज्ञानास्वीकारे च अख्यातिवादस्य समर्थनं भवेत्। शबरप्रदर्शिताभिप्रायेणैव उक्तवान् "कर्त्तव्यश्च सुखवान् अकर्तव्यो दुःखवान्"। ( जै० सू० ६।१।१ )

अत्रस्थभाष्यस्यायमेवाभिप्रायो यत् स्वर्गादिफलस्य साधनं यदि विहितं

यागादिकर्म स्यात् तदा यागादिकर्म कर्तव्यमेव न स्यात्, यतः स्वर्गादिफलस्य क्षणिकत्वान्नानादुःखमिश्रितत्वाच्च दुःखरूपत्वमेव। एतस्य दुःखस्य साधनभूतयागादिरपि दुःखरूप एवेत्यस्य कर्तव्यत्वं न स्यात्। 'कर्तव्यः सुखवान्' इति भाष्यवचनेन आत्मज्ञानस्यैव कर्तव्यता सिद्ध्यति। प्रपञ्चस्य दुःखरूपत्वम् आत्मा च सुखस्वरूप इति एतादृशात्मज्ञानस्य सुखफलकत्वात् तस्यैव च कर्तव्यत्वम्[1]। "यजेत स्वर्गकामः" अनेन वाक्येन येषां मते स्वर्गकामिनः स्वर्गसाधनयागेऽधिकारः न सिद्धयति, अधिकार एव असिद्धः अर्थात् कस्मिन्नपि स्थले विधिवाक्येन अधिकारसिद्धिः न स्यात् इत्येव वदेत् किन्तु इदानीमवलोक्यते तेषामपि मते विधिना अधिकारः सिद्ध्यतीति। अत्रेदं समाधानम्; शाब्दन्यायेनोच्यते विधिवाक्येनाधिकारो न सिद्ध्यति न्यायानुसारेण च सिद्धः सर्वैरेव स्वीकार्यः अभ्युपगमसिद्धान्तेन नैतदुच्यते[2]। न्यायानुसारेण यदि ज्ञानविधिना अधिकारः सिद्धयति तदा किमु वक्तव्यम्? वस्तुतः ज्ञानंविधिना अधिकारः न सिद्धयति, ज्ञानस्य दृष्टार्थताप्रयुक्त एवासौ सिद्ध्यति। लोकायतमतानुसारिणां मीमांसकानामेतन्मतं विधिविवेके मण्डनेनोक्तम्।

एतस्य मतस्य खण्डनावसरे श्रीमता मण्डनेनोक्तम्—ये हि विहितस्य निषिद्धस्य वा कर्मणः फलं न स्वीकुर्वन्ति, ते जीवस्य सुखभोगः दुःखभोगो वा स्वभावत एव भवतीति स्वीकुर्वन्ति, तथा च स्वभाववाद एव वेदस्य अर्थः इत्येव वदन्ति। आत्मज्ञानस्याधिकारसिद्धिच्छलेन वेदस्य लोकायतशास्त्रत्वमेव साधयन्ति। तथा च ये दृष्टद्वारेणैव आत्मज्ञानविध्यधिकारी एव कर्मविध्यधिकरीति स्वीकुर्वन्ति, कर्मविधेरन्यः कश्चिदधिकारीति न स्वीकुर्वन्ति। एतेन कर्मविधेरिव ज्ञानविधेरपि अनुशासने एव पर्यवसानं भवति। विधिना तादृशस्यात्मनः प्रतिपत्तिः सिद्धिर्न स्यात्। यद्युच्येत—ज्ञानस्वभावप्रयुक्त एव तादृशात्मनः प्रतिपत्तिः सिद्धयति। अतादृशः आत्मा तादृशप्रतिपत्तेर्विषयो न भवितुमर्हति तथा च ज्ञाने विधेर्वैयर्थ्यं स्यात्। अतादृशात्मनि तादृशरूपसमारोपेणापि आत्मनः ज्ञानं भवितुमर्हतीति आत्मनः निष्प्रपञ्चरूपता न सिद्धयति। "स्वाभाविकत्वाच्च फलोपभोगस्य स्वभाववाद एवाम्नायार्थश्छद्मना आश्रितः स्यात्।.........सम्भवान्न तत्त्वपरिच्छेदः।" (वि० वि० पृ० ३३५–३६) अयमाशयः, विहितस्य निषिद्धस्य च कर्मणः फलमिमे न स्वीकुर्वन्ति, स्वर्गादि-

---

१. इममेवार्थमभिप्रेत्य कर्तव्यश्च सुखवान् अकर्तव्यश्च दुःखवान् इत्याद्युक्तमत्र भवता (न्या० क० पृ० ३१६) वि० वि० पृ० ३१६

२. वि० वि ३१५

३. वि० वि० पृ० ३१६

फलास्वीकारेऽपि चित्तशुद्धिः विहितकर्मणः फलमिति स्वीकुर्वन्ति, किन्तु, विधिवशात् नैव स्वीकुर्वन्ति, स्वाभाविकप्रवृत्तेः निरोधरूपदृष्टेनैव चित्तशुद्धिर्जायते, कर्मी कर्मानुष्ठाने दान्तो भवति। वेदान्तिनः कर्मफलं नैव स्वीकुर्वन्ति यत्, अनात्मवस्तु परमार्थरूपतां न प्राप्नोति, अनात्मवस्तुनि तेषां नास्ति आश्वासः। अत एव एकजीववादः दृष्टिसृष्टिवादश्चोत्तमाधिकारिणां कृते इति ते निरूपयन्ति। अपारमार्थिकं कदापि पारमार्थिकं न भवितुमर्हसि। कर्म तत्फलं कर्मणि अधिकारः अनात्मपदार्थः निष्प्रपञ्चे आत्मनि आश्वासः अनात्मनि चानाश्वासः। अतएव भर्तृमित्रेण एतादृशी प्रक्रिया प्रदर्शिता।

न्यायकणिकासहितस्य विधिविवेकस्य सम्पादने श्रीमतां कृष्णाचार्यमिश्राणां वचसानाख्येयं साहाय्यमुपलब्धं तत्कृपयैव एतत्प्रकाशनसामर्थ्यमासादितम्। पूज्यचरणविद्यावाचस्पतिश्रीब्रह्मदत्तद्विवेदिमहोदयानां गुरुवर्याणां विषये तु किमपि वक्तव्यमेव नास्ति। तज्ज्ञानं तेभ्य एवेदं सततमुपहरामि अतः नास्ति सङ्कोचावसरः। पण्डितप्रवराः झोपाख्यश्री आनन्दशर्ममहोदयाः अहैतुक्या कृपया भूमिकायाः श्रवणेन समुचितपरामर्शप्रदानेन महदुपकारं कृतवन्तः इति तदीयमुपकारजातं बिभर्मि। ताराप्रिंटिंगप्रेसाध्यक्षः श्रीरमाशङ्करपाण्ड्यामहोदयः श्रीविनयशङ्करपाण्ड्यामहोदयश्च सततं प्राचीनतमसंस्कृतग्रन्थोद्धारे कृतसंकल्पः सर्वथा प्रशंसार्ह इति।

विदुषामाश्रवः
महाप्रभुलाल गोस्वामी

# विषयसूची


| विषयः | पृष्ठम् | पंक्तिः |
|---|---|---|
| विधिविषयविवेचनम् | १ | १ |
| न्यायकणिकामङ्गलश्लोकः | १ | ५ |
| विधिविषयस्यासन्दिग्धत्वादिना विचारत्वाक्षेपः | १ | १७ |
| विधिमीमांसायां पूर्वपक्षः | २ | ४ |
| भूतार्थविगाहित्वेनाप्रामाण्याशङ्का | २ | ५ |
| पदार्थसंसर्गप्रतीत्यर्थं विधित्वम् | २ | १५ |
| हिताहितसाधनतावगत्यर्थं विधित्वम् | २ | २८ |
| पुरुषार्थसाधनत्वेन विधित्वोपपादनम् | ३ | २ |
| विधौ प्रसिद्धत्वशङ्कोद्भावनम् | ३ | १७ |
| शब्दस्वरूपस्य विधित्वनिषेधः | ४ | ३ |
| द्वितीयकारिकाव्याख्यानम् | ४ | १६ |
| शब्दस्वरूपविधिवादिमतविश्लेषणम् | ४ | २० |
| लिङादेः कारकत्वं ज्ञापकत्वम्वा | ५ | २० |
| अर्थप्रतिपादने प्रतिभायाः हेतुत्वोपपादनम् | ८ | १ |
| लिङादिशब्दानां प्रवर्तनायाः अभिधेयत्वम् | १२ | ६ |
| प्रेषणादीनां पुरुषधर्मत्वेन पूर्वमतखण्डनम् | १२ | ६ |
| व्यापारस्याभिधेयत्वे दोषोद्भावनम् | १४ | १४ |
| अभिधेयभावनायाः विधिरूपत्वखण्डनोपसंहारः | १५ | २२ |
| अभिधायाः लिङाद्यर्थत्वखण्डनम् | १६ | १ |
| अर्थभेदस्य विधित्वखण्डनम् | १७ | ६ |
| प्रवर्तनायाः विधित्वखण्डनम् | १९ | १ |
| सत्कार्यवादोपपादनम् | २२ | ६ |
| कर्मणः प्रवर्तकत्वखण्डनम् | २६ | ६ |
| भावनायाः विधित्वप्रतिपादनम् | २७ | ३ |
| अप्राप्तक्रियाकर्तृसम्बन्धविधेः खण्डनम् | ३० | ८ |
| फलकल्पनया प्रवृत्तिखण्डनम् | ३३ | ३ |
| नियोगस्य वाक्यार्थत्वपदार्थत्वाभावप्रदर्शनम् | ३६ | १ |
| सत्त्वलक्षणविश्लेषणम् | ४५ | २ |
| नियोगस्यात्यन्तासत्त्वदूषणम् | ४५ | २२ |
| अभावव्यवहारोपपादनम् | ४६ | १ |
| अप्रमितेः प्रमाणत्वे दूषणोद्भावनम् | ४७ | २ |
| प्रमाणविषयापरिच्छेदस्य व्यवहारत्वे दूषणदानम् | ४७ | ७ |
| अप्रत्ययपूर्विके प्रवृत्तिनिवृत्ती इत्यस्य खण्डनम् | ४८ | १ |

ऽनुष्ठानप्रतीतेः, अव्यभिचाराच्च। नैमित्तिकनिषेधाऽधिकारयोरुपकाराऽनाश्रयणात्। न च नियोज्यार्थ एव कर्मणि नियोगः। अत एव लौकिके चाऽध्येषणादावभावात्। ननु विशेषणं स्वर्गो नोपलक्षणम्। भवतु नियोगेऽस्याऽन्वयः। न तु नियोग एव यागसम्बन्धं विदधाति। तथा नाम ईदृशः पुरुषो नियुज्यत इति। 'यस्याऽग्निर्गृहान्दहेदि'ति यथा। नन्विष्टसिद्ध्युपाधौ

दमु[1]कारकमिति। कुतः ? अनुष्ठानप्रतीतेः, प्रसिद्धोपदेशभावाऽविरोधात् अव्यभिचाराच्च। उपकार्योपकारकयोस्तु नियोगार्थत्वे व्यभिचारः स्यात्। कुतः ? नैमित्तिकानिषेधाऽधिकारयोरुपकाराऽनाश्रयणात्। न चाऽपूर्वोत्पत्तिरूपकारः। तस्याऽसुखस्य हिताऽहितप्राप्तिपरिहाराऽसाधनस्याऽनुकूलवेदनीयताऽभावेनोपकारभावाऽभावादिति भावः।

ननु 'ज्वरितः पथ्यमश्नीया'दित्यादौ नियोज्यार्थे कर्मणि नियोगो लोके दृश्यते, तदुपायत्वाच्च वेदेऽपि नियोगविषयस्य कर्मणो नियोज्यार्थकर्मतोचितेत्यत आह—न च नियोज्यार्थ एव कर्म्मणि नियोगः। कस्मात् ? अत एव नैमित्तिकनिषेधाऽधिकारयोर्व्यभिचारत एव। ननु लोके प्रतीतिसामर्थ्यान्नैमित्तिकनिषेधाधिकारयोरुपकारं कल्पयिष्याम इत्यत आह—लोके चाऽध्येषणादावभावान्नियोज्यार्थताया: कर्म्मणः। पुनरपि स्वर्गे साध्यतायामुपलक्षणवैलक्षण्येन नियोज्यविशेषणतां प्रमाणयति—ननु विशेषणं स्वर्गो नोपलक्षणम्, येनात्मानं न कार्ये निवेशयेदिति चेत्। कथं[2] न साध्यतयाऽन्वियात् ? अथ नेति चेत् ? कथमस्य न यागः साधन ? मित्यतः परस्परसङ्गतिः स्वर्गयागयोरित्यर्थः। परिहरति भवतु नियोगे स्वर्गाऽन्वयो, यथाऽऽरुण्यस्य, यागस्य तु कथं ? ननु नियोग एव स्वर्गसम्वन्धः स्वर्गस्य स्वविषयेण योगेन सम्वन्धं विदधाति। तथा च स्वर्गयागयोः सम्वन्धः[3] साध्यसाधनभाव इति। परिहरति—तथा च स्वर्गकामयागयोः सम्वन्धो नाम नियोगात् न तु स्वर्गयागयोः। न ह्येतावता नियोगसङ्गतिस्तयोर्न कल्प्यत इति तत्स्वरूपं दर्शयति—ईदृशः स्वर्गकामः पुरुषोऽस्मिन्यागे नियुज्यत इति। ईदृशत्वे दृष्टान्तमाह—यस्याऽग्निर्गृहान् दहेत् स यजेतेति। यथा आहिताग्नेर्गृहदाहवत इष्टौ नियोगो नेष्टेर्गृहदाहं प्रति साधनतामवगमयति, तथा स्वर्गकामस्याऽपि यागनियोगो न यागस्य तद्विशेषणं प्रति साधनभावमवगमयितुमर्हतीत्यर्थः।

---

१. कश्चाऽस्योपकारः २ पु० पा०। २. निवेशयतीति चेत् कथं २ पु० पा०।
३. सिद्धः २ पु० पा०।

**भावार्थे नियोगात्फलसिद्धिः स्यात्? स्याद्यदीदृशो भावार्थः। न त्वयमेवेत्युक्तं भावनाविवेके।**

**नैमित्तिके च फलप्रसङ्गः। यथा चाऽस्मिन्दर्शने न कर्मफलसंबन्धस्तथोक्तं भावनाविवेके। 'अतः स्वर्गयागयोरसम्बन्धान्न पुरुषार्थसाधनज्ञानम्। पुरुषार्थसाधनं च जिज्ञासन्ते प्रेक्षावन्तः। लोकाच्च शब्दार्थाऽवगमान्न**

चोदयति—नन्विष्टसिद्ध्युपाधौ भावार्थे नियोगात्फलसिद्धिः स्यात्। इदमभिसंहितम्। यद्यपि धातुः कर्म्मरूपमात्रं गोचरयति, पाकच्छेदादिपदेभ्यस्तन्मात्राऽवगमात्। आख्यातोपसंधानात्तु तदर्थः पूर्वाऽपरीभूतप्रचयरूपः प्रतीयते। न चैकमुपसङ्ग्राहकमन्तरेण तद्भाव इति फलमस्योपसंग्राहकम्। तदिदमाख्यातमाप्रारम्भादाफलोत्पत्तेः पूर्वाऽपरीभूतं समानजातीयक्रियासन्तानं वा समानजातीयक्रियासमुदायं वाऽन्योत्पादाऽनुकूलतया भावात्मानमवच्छिनत्ति, पचतीत्यभिदधाति। तथा च यजेतेत्यभिमतफलावर्धिनि देवदत्तस्मरणद्रव्याऽवमर्शनतद्विषयस्वत्वत्यागात्मनि यागकर्मणि नियोगात्फलभेदाऽपेक्षायामधिकृतविशेषणस्याऽपि स्वर्गस्य यागसाध्यतया समन्वय इति।

परिहरति—स्याद्यदीदृशो भावार्थः। न त्वयमेवमित्युक्तं भावनाविवेके। तादृशं चेत् कर्म्म नियोगविषयस्तर्हि तन्नियोगात्प्रागवगन्तव्यम्। न खल्वनवगतगोचरो नियोज्यस्तद्गोचरं नियोगमवगन्तुमुत्सहते। न च स्वर्गाऽवधिको यागः प्राङ्नियोगाऽवगमान्मानान्तरेण पाक इवौदनाऽवधिः शक्याऽवगमः। न च नियोगात्तदवगमः। परस्पराश्रयदोषप्रसक्तेः। सति नियोगाऽवगमे तन्निरूपणम्, तस्मिंस्तु सति तदवगम इति। यद्यपि यागरूपं प्रमाणान्तरसिद्धम्, तथाऽपि भावात्मना न तत्सिद्धम्। तेन च तद्विषयो, न पुना रूपमात्रेण। तन्मात्रेण वा विषयत्वसमर्थने नास्य स्वर्गसम्बन्धः स्यादिति भावः। नैमित्तिके च फलकल्पनाप्रसङ्गः। इष्टोपाधेर्भावार्थस्य काम्यवत्तत्राऽप्यविशेषात्। न चाऽपूर्वमिच्छागोचर इत्यसकृदावेदितम्। यथा चाऽस्मिन् दर्शने प्रकारान्तरेणापि न कर्म्मफलसम्बन्धस्तथोक्तं भावनाविवेके।

ननु भवत्वसम्बन्धः, का नः पीडेत्यत आह—तेन स्वर्गयागयोरसम्बन्धाद् न पुरुषार्थसाधनं ज्ञानम्। ततः किमित्याह—पुरुषार्थसाधनं च जिज्ञासन्ते प्रेक्षावन्तः।

तदनेन प्रबन्धेन स्वर्गयागयोः परस्पराऽसङ्गतिप्रसङ्गाद् नियोगस्य कार्यता प्रतिषिद्धा। पुनस्तामेव प्रकारान्तरेण निषेधति—लोकाच्च शब्दार्था-

नियोगप्रधानता । तत्सिद्धावनियोगात् । नापि प्रतिपत्ता प्रत्येति ताम् । विषयसिद्धावप्यननुष्ठानात् । न हि गामानयेति नियोगसिद्धिर्विवक्षिता वक्तुरपि तु विषयसिद्धिः ।

अन्यल्लोके शब्दवृत्तमन्यद्वेदे । विवक्षापरो हि समन्वयो लोके शब्दानाम्, नियोगपरो वेदे । अयमपरो गण्डस्योपरि स्फोटः । यदि खलु विवक्षापरेऽन्वये शब्दसामर्थ्यं लोकतोऽवगम्यते नाऽन्यपरत्वम् । अनन्यप्रमाणकत्वाच्छब्दसामर्थ्यस्य । वक्तुरभावादिति चेत् । अयमेव विवक्षापरोऽन्वयस्तमनुमापयेदिति प्राप्तं पौरुषेयत्वम् । प्रतिपत्त्यभावो वा भवन्ती वा प्रतिपत्तिर्न्न शब्दनिमित्ता सामयिकी स्यात्, सामान्यतोदृष्टजा वा । तस्माल्लाक्षणिकप्रयोगज एव तत्रभवतो विभ्रमो नियोगः कार्य्यं इति । अपि

ऽधिगमान्न नियोगप्रधानता नियोज्यकृतिं प्रति । कुतः ? तन्नियोगसिद्धावनियोगान्नियोक्तुरेव तत्सिद्धेः । नाऽपि प्रतिपत्ता प्रत्येति तां नियोक्तुर्वाक्यियोगसिद्धिं स्वकृतेर्व्याप्यतया । कस्मात् ? विषयसिद्धौ सत्यामननुष्ठानान्नियोज्यस्य प्रतिपत्तुः । न ह्यन्येनाऽऽनीतायां गवीतरस्तदानयनमारभते । तस्माद्विषयसिद्धौ नियोक्तृनियोज्ययोः सम्प्रतिपत्तेः संवद्धविषयपरामेव साधनतामध्यवस्यति, न तु नियोगपरामित्यर्थः ।

चोदयति—अन्यल्लोके शब्दवृत्तमन्यद्वेदे । तदेव स्फोटयति—विवक्षापरो हि समन्वयो लोके शब्दानां पदार्थानाम्, नियोगपरो वेदे । तेन तत्र नियोगस्यैव कार्यतेत्यर्थः । दूषयति—अयमपरो गण्डस्योपरि स्फोटः । तमाह—यदि खलु विवपक्षापरेऽन्वये शब्दसामर्थ्यं लोकतोऽवगम्यते ततो न विवक्षितादन्यपरत्वं वेदस्य । कस्मात् ? अनन्यप्रमाणकत्वाल्लोकप्रमाणकत्वाच्छब्दसामर्थ्यस्य नोपायान्तरं तदवगमाय वेदे सम्भवतीति । शङ्कते—वक्तुरभावान्न विवक्षासम्भवो वेद इति चेत् ? निराकरोति—अयमेव विवक्षापरोऽन्वयस्तमनुमापयेदिति प्राप्तं पौरुषेयत्वम् । सोऽयमस्मिन् पक्षे लोकविरोधलक्षणस्य गण्डस्योपरि पौरुषेयत्वप्रसङ्गलक्षणः स्फोटः । अथ दृढतरमपौरुषेयत्वं ततः प्रतिपत्त्यभावो वा स्फोटः । तदुपायाऽभावात् । अथ स्वाऽनुभवसिद्धा वेदवाक्यश्रवणसमनन्तरा प्रतीतिर्नाऽपह्नवमर्हति, तत्राह—भवन्ती वा प्रतिपत्तिर्न शब्दनिमित्ता सामयिको । स्वतः सिद्धेष्वेव वेदवाक्येषु पुरुषकृतसङ्केतनिवन्धना तदुच्चारणादर्थप्रतीतिरित्यर्थः । यदि तु सम्वन्धुरस्मरणान्न सङ्केतक्रियासम्भवः, ततः सामन्यतोदृष्टरूपजा वा । गवादिपदयुक्तं हि वाक्यमर्थविशेषप्रत्ययनिमित्तमुपलब्धम्, वैदिकं च तथेति तदपि प्रत्यायकमिति सामन्यतोदृष्टादर्थप्रत्ययो वैदिकादपि वाक्यादित्यर्थः ।

च न लोके नियोगमात्रं प्रवृत्तिहेतुः, सर्वस्य नियोगादप्रवृत्तेः। अनुविधेय-नियोगाच्च तद्भावात्। अनुविधेयत्वं नियोक्तुरन्यनियोगात् प्रवृत्तिहेतुः। अनुविधानकारणं चाऽर्थाऽनर्थप्राप्तिरिहारादि प्रमाणान्तरसिद्धम्। न च वेदे नियोक्ताऽपि। कुतः पुनरनुविधेयः? ननु शब्दः। भवतु नाम नियोक्ता, न त्वनुविधेयः। हेत्वभावात्। न ह्यर्थाऽनर्थप्राप्तिपरिहारयोः शब्दाऽनुविधाने प्रमाणमस्ति। नियोग इति चेत्। न। तस्य प्रमेयत्वात्। नियोगज्ञानं तर्हि। न। तस्य नियोगविषयत्वात्। तस्य च ताभ्यामन्यत्वात्। न चाऽर्थादाक्षेपः।

यत्त नियोगकर्त्तव्यतायामाचार्यनियोगः कर्तव्यः, राजशासनमनुष्ठेय-मिति लौकिको व्यपदेशः प्रमाणमुपन्यस्तम्, तदपहसन्नन्यथासिद्धयति—तस्माल्लाक्षणिकप्रयोगप्रभव एष तत्रभवतो विभ्रमो नियोगः कार्य इति। नियोगशब्देन स्वाभिधेयविषयभावार्थलक्षणादिति पूर्वार्द्धं व्याख्याय कारिकायाः पश्चार्द्धं व्याचष्टे। अपि च न लोके नियोगमात्रं प्रवृत्तिहेतुः। कुतः? सर्वस्य नियोगादप्रवृत्तेः। अनुविधेयनियोगाच्च तत्प्रवृत्तिभावात्। तस्मादनुविधेयत्वं नियोक्तुरन्यनियोगात्प्रवृत्तिहेतुः। अनुविधानकारणं चार्थाऽनर्थप्राप्तिपरिहारादि प्रमाणान्तरसिद्धम्। वेदेऽप्यनुविधेयोऽस्तु लोकवदिति चेत्। अतः आह—न च वेदेऽपौरुषेयेऽपि नियोक्ताऽपि दृश्यते। कुतः पुनरयमनुविधेयः? धर्मस्याऽत्यन्ताऽसिद्धेरित्यर्थः।

चोदयति—ननु शब्दो नियोक्ताऽनुविधेयः। शब्दनियोक्तृत्वं न्यरासि प्रथममेव प्रमाणत्वादित्यादिना। अभ्युपगम्याप्याह—भवतु नाम नियोक्ता, न त्वनुविधेयः। अनुविधानहेत्वभावात्। नन्वर्थाऽनर्थप्राप्तिपरिहारावनु-विधानकारणं भविष्यतीत्यत आह—न ह्यर्थानर्थप्राप्तिपरिहारयोः शब्दाऽनुविधाने प्रमाणमस्ति। शङ्कते—शब्दाऽनुविधाने सत्यनुविधातुः पुरुषस्य हितप्राप्तिरहितनिवृत्तिर्वा भवतीत्यत्र नियोगः प्रमाणमिति चेत्। निराकरोति—न। तस्य नियोगस्य प्रमेयत्वात्। न खलु प्रमेयं तत्त्वेन प्रमाणं भवतीति। पुनः शङ्कते—यदि प्रमेयतया नियोगो न प्रमाणम्, नियोगज्ञानं तर्हि प्रमाणमस्तु। निराकरोति—न। तस्य नियोगविषयत्वात्। तस्य च नियोगस्य ताभ्यामर्थाऽनर्थप्राप्तिपरिहाराभ्यामन्यत्वात्।

यदि मन्येत, मा नाम भून्नियोगः। प्रमेयतयाऽर्थानर्थप्राप्तिपरिहारयोः प्रमाणं शब्दावगतेस्त्वयं चेतनप्रवृत्तिं विनाऽनुपपद्यमानस्तस्याश्चार्था-ऽनर्थप्राप्तिपरिहारमन्तरेणाऽसम्भवात् प्रवृत्तिमर्थानर्थप्राप्तिपरिहारप्रयोजन-माक्षेप्स्यते च तदपेक्षया प्रमेयमपि प्रमाणताम्, कारकशब्दानामापेक्षिकप्रवृत्ति-त्वादित्यत आह—न चाऽर्थादाक्षेपः। कुतः? हिताऽहितप्राप्तिपरिहाररहित-

अनाप्तनियोगदर्शनात् । क्षेम्योऽयं पन्थाः, गच्छतु भवानन्नेनैवेति यथा । पदार्थाऽन्वयनिष्ठो नियोगो लोके तस्य च प्रमाणान्तरविषयत्वात्तदपेक्षत्वात्तन्निबन्धना प्रवृत्तिर्लोके, नियोगनिष्ठस्तु वेदे, अतो नाऽन्याऽपेक्षा । उक्तोत्तरमेतत् । अपि च न नियोगमात्रं प्रवृत्तिहेतुः । मिथ्या तर्हि नियोगज्ञानम् । न च तद्युक्तम् । कारणद्वयाऽभावात् । न वयं नियोगमवजानीमहे येन मिथ्यात्वं स्यात् । सत्यपि तस्मिन्पुरुषः प्रवर्तते लोक इव यस्य कस्य चिन्नियोगात् । न हि तत्र नियोगो नास्ति । अतत्परत्वे तात्पर्यमप्रमाणकमित्युक्तम् । ननु कर्तव्यताऽवगमात् प्रवृत्तिः । अवगच्छति च नियुक्त इदं मम कर्तव्यस्याऽनाप्तनियोगस्य दर्शनात् । अपथमेव सुपन्थानमाख्याय तत्र प्रवर्त्तयत्यनाप्तः क्षेम्योऽयं पन्थाः, गच्छतु भवानन्नेनेति यथा । चोदयति— पदार्थाऽन्वयनिष्ठोऽर्थाऽनर्थप्राप्तिपरिहारोपायतालक्षणसमन्वयनिष्ठो नियोगो लिङादिर्नियुज्यतेऽनेनेति व्युत्पत्त्या लोके तस्य साध्यसाधनभावस्य प्रमाणान्तरविषयत्वात् । प्रमाणान्तराऽपेक्षत्वात्तन्निबन्धना साध्यसाधनभावाऽवगमनिबन्धना प्रवृत्तिर्लोके । अनाप्तवाक्ये च नियोगस्य मानान्तरेण बाधितत्वादप्रवृत्तिः । मानान्तराऽगोचरनियोगनिष्ठस्तु पदार्थान्वयो वेदे । स च प्रतीतः प्रवृत्तौ हिताऽहितप्राप्तिपरिहारसाधनतामनुविधानकारणं नाऽपेक्षते । प्रवर्त्तनकरसत्वात् । अतो नाऽन्याऽपेक्षा । न हि प्रमाणं शब्दस्तदवबोधने मानान्तरमपेक्षते । नाऽपि नियोगः पुरुषप्रवृत्तौ हिताऽहितप्राप्तिपरिहारसाधनतामित्यर्थः । तदेतद् दूषयति—उक्तोत्तरमेतत् । विवक्षापरत्वनिराकरणप्रस्तावे ।

यत्तु प्रवर्त्तनैकरसत्वमभिमतं नियोगस्य, तदपि न मृष्यामह इत्याह— अपि च लौकिको भवतु, अलौकिको वा, सर्वथा नियोग इत्येव न नियोगमात्रं प्रवृत्तिहेतुः । चोदयति—न चेत्प्रवर्त्तयति, मिथ्या तर्हि नियोगज्ञानम् । न चैतदुचितम्, कारणद्वयाऽभावात् । परिहरति—न वयं नियोगमवजानीमहे, येन मिथ्यात्वं वेदस्य स्यात् । सत्यपि तस्मिन्पुरुषप्रवृत्तिर्लोक इव यस्य कस्यचिन्नियोगात् । न हि तत्र नियोगो नास्ति । अथ न तन्नियोगपरं लौकिकमपि तु विनियोगपरमित्यत आह—अतत्परत्वे नियोगपरत्वे लौकिकस्य लोकाऽधीनाऽवधारणार्थस्य[1] वैदिकस्य तात्पर्यं नियोगपरत्वमप्रामाणिकमित्युक्तम् ।

ननु न वयं नियुक्तिमात्रं नियोगं ब्रूमहे, अपि तु कर्त्तव्यताम् । सा च निरपेक्षा प्रवृत्तहेतुर्वेदादवगम्यत इत्याह—ननु कर्त्तव्यताऽवगमात्प्रवृत्तिः ।

१. अर्थाऽवधारणस्य २ पु० पा० ।

मिति। यस्त्ववगच्छन्नपि अनुष्ठेयं नाऽनुतिष्ठति स सत्त्वेऽप्यर्थाऽनर्थप्राप्ति-परिहारयोरननुतिष्ठन्निव न दण्डैर्वार्यते। तदेतदविमृष्टनियोगरूपम्। तथा हि। प्रवर्तनामात्रं नियोगः। स च लिङाद्यर्थ इति प्रवर्त्तितोऽहमत्रेति प्रतिपत्तिः शब्दात्। कर्तव्यताऽवगमस्तु नियोक्तुरनुविधेयत्वात्। अनुविधेयनियोगे ममेदं कर्तव्यमित्यध्यवसायात्। इतरत्र तु प्रवर्त-नामात्रप्रतीतेः। उक्तं च कर्तव्यताविषयो नियोगो न नियोगः कर्तव्यतामाह।

अवगच्छनि च नियुक्त इदं मम कर्त्तव्यमिति। यस्त्ववगच्छन्नप्यनुष्ठेयं नाऽनुतिष्ठति स सत्त्वेऽप्यर्थाऽनर्थप्राप्तिपरिहारयोरननुतिष्ठन्निव न दण्डै-र्वार्यते। इदमभिसंहितम्, चेतनाप्रवृत्तिलक्षणकार्योन्नेयशक्तयो लिङादयः प्रवृत्तिहेत्वाभिधायिनः। तद्धेतुश्च स्वात्मनि कर्त्तव्यताऽवगमो विदित इति कर्त्तव्यतामभिदधाति। तथा च ततः कर्त्तव्यतामवगम्याऽप्यप्रवर्त्तमाना हिताऽहितप्राप्तिपरिहारोपायतामिव न दण्डैः पराणुद्यन्त इति। दूषयति—तदिदमविमृष्टनियोगरूपं वचः। तथा हि। लोकाऽनुसारादाज्ञादिरूपितं प्रवर्त्तनामात्रं नियोगः। स च लिङाद्यर्थो, न पुनः प्रवृत्तिहेतुः कर्त्तव्यता। तदवबोधे ऽपि कर्त्तव्यताऽनवबोधात्। अननुविधेयनियोगेन हि तत्र नियोग-प्रत्ययो नास्ति, अपि तु कर्त्तव्यताऽवबोधः। तदवबोधे सत्यसति विधुर-प्रत्ययो[1]पनिपाते प्रवृत्तेरवश्यम्भावनियमादिति। तस्मात्प्रवर्तितोऽहमिति प्रतिपत्तिः शब्दात्प्रवृत्तिहेतुः। कर्त्तव्यताप्रतिपत्तिस्तु प्रेक्षापूर्वतो नियोज्यस्य नियोक्तुरनुविधेयत्वात्। कस्मात्? अनुविधेयनियोगे ममेदं कर्त्तव्यमित्यध्य-वसायात्। इतरत्र तु कर्त्तव्यताऽध्यवसायरहितप्रवर्त्तनामात्रप्रतीतेः।

अत्रैव जरत्प्राभाकरोन्नीतार्थं गुरोर्वचः सङ्गच्छत इत्याह—उक्तं च, कर्त्तव्यताविषयो नियोगः प्रवर्त्तना नियोक्तुर्धर्म्मः, तमभिदधाति लिङ्, न नियोज्यस्य धर्मं कर्त्तव्यत्वं प्रवर्त्तनाया विषयमाह, विषयस्य विषयिणो-ऽन्यत्वात्।

नवीनास्तून्नयन्ति, अनिरूपितनियोगव्यापारस्येदं चोद्यमित्युपक्रम्येद-मुक्तम्। कर्त्तव्यताविषयो हि नियोगो न कर्त्तव्यतामाहेति। यागकर्त्तव्यता-ऽनुष्ठानं विषयो यस्य नियोगस्य स तथा। तेन हि नियोगः साध्यते, न पुनर्नियोगो यागस्याऽनुष्ठानं ज्ञापयति।

एतदुक्तं भवति साक्षान्नियोग एव कर्त्तव्यतयाऽवगम्यते लिङादिभ्यः। स तु यागविषयस्तदनुष्ठानमन्तरेण कर्त्तव्यताया अपर्यवसानात् तदनुष्ठान-

---

१. विरोधिप्रत्यय २ पु० पा०

तद्विषयत्वादेव हि तर्हि कर्तव्यताऽवगमः। न तावदयं शाब्दः। शब्देन नियोगमात्रस्याऽभिधानात्। नाप्यार्थः। सर्वनियोगेष्वभावात्। तस्मादिदमपि दर्शनमविमृश्यमानसुन्दरमिति नाद्रियन्ते वृद्धाः। अस्तु तर्ह्यनुविधेयो नियोक्ता भूतानाम्। साक्षात्कृताऽऽनुश्र[1]विकश्रेयःसाधनो हितकामः सर्वज्ञः।

माक्षिपति। सोऽयमाक्षेपाऽपरनामोपादानव्यापारो नियोगस्याऽऽस्थीयत इति। तदेतदपूर्वात्मनि कार्यरूपे नियोगे सत्युपपद्यते। तदभावश्च निपुणतरमुपपादितः। तदास्तां तावत्।

चोदयति—नियोगस्य तद्विषयत्वादेव तर्हि कर्त्तव्यताऽवगमः। विषयिणो विषयनान्तरीयकत्वादिति भावः। निराकरोति—न तावदयं शब्दः। कस्मात्? शब्देन नियोगमात्रस्याऽभिधानात्। ननूक्तं नान्तरीयकत्वादिति, तत्राह—नाप्यार्थः। कुतः? सार्वनियोगेष्वभावात्। कर्त्तव्यताऽवगमस्य। न खल्वयमननुविधेयेन शतशोऽपि नियुज्यमानोऽवबुध्यमानोऽपि नियोगं कर्त्तव्यतामवगंस्यत इत्युक्तम्। उपसंहरति·तस्मादिदमपि दर्शनमपि दृश्यमानसुन्दरमिति नाद्रियन्ते वृद्धाः। तत्सिद्धमेतत्। विवादाध्यासिता लिङादयो न मानान्तराऽपूर्वकार्याऽभिधायिनः, तेनाऽगृहीतसङ्गतित्वात्, यद्येनाऽगृहीतसङ्गति न तत्तदभिधायि, यथा वाजिपदं क्रमेलकस्येति। अगृहीतसङ्गतेरभिधायकत्वे व्यवस्थाहेत्वभावात्। सर्वस्य सर्वमभिधायकं सम्भवेदित्यव्यवस्था। तदिदमगृहीतसङ्गतित्वं व्यवस्थाहेत्वभावेन व्याप्तं स्वव्यापकविरुद्धव्यवस्थोपलब्धेरभिधायकत्वान्निवर्त्तमानमनभिधायकत्व एवावतिष्ठत इति प्रतिबन्धसिद्धिः।

सम्प्रत्यन्यथा प्रत्यवतिष्ठते परः। अस्तु तर्ह्यनुविधेयो नियोक्ता भूतानाम्, भिषज इव तस्य भगवतो नियोगादर्थाऽनर्थप्राप्तिपरिहारार्थेन प्रवर्त्स्यन्ति निवर्त्स्यन्ति चेति। कस्मादित्याह—यतः साक्षात्कृताऽऽनुश्रविकश्रेयः साधनः। ननु साक्षात्कृताऽऽगमगम्यश्रेयःसाधनोऽपि कदाचिदन्यथा ब्रूयात्, न वा ब्रूयात्। तत्कथमस्याऽनुविधेयता? इत्यत आह—हितकामः परेषां स्वार्थीभूत[2]विश्वव्यापिकारुण्यो हि भगवान् वैराग्याऽतिशयसंपन्नो मात्रयाऽपि रागादिभिः क्लेशैरुपक्लेशैश्च मदमानादिभिरपरामृष्टः। तदयमतिमहति संसारदुःखपङ्के निमज्जतः प्राणिनः पश्यन् कथं नामैतानुद्धरेयमिति तद्दुःखेन कथं न दूयमानो वा हिताऽहितप्राप्तिपरिहारोपायतत्त्वे विद्वान् करणापाटवे सति कथमन्यथोपदिशेत्, नोपदिशेद्

---

१. भवि० पु० पा०। २. स्वामीभूत २.पु० पा०।

वा। अथैवम्भाव एवास्य कुतः ? इत्यत आह—सर्वज्ञः प्रहीणरागाद्यावरण-तत्त्वज्ञानः खल्वयमनवयवेन विश्वं करतलाऽऽमलकमिव साक्षादीक्षमाणः सर्वज्ञः साक्षात्कृताऽऽनुश्रविकश्रेयः साधनो भवति, भवति च हितकामः। दुःखतो जगदुद्धर्त्तुकामस्यास्य सर्वज्ञतामन्तरेण तदनुपपत्तेस्तत्र प्रवृत्तेः।

न च सर्वज्ञो नास्ति। तथा हि। तदभावव्यवहारो वाधकप्रमाण-सद्भावाद्वा साधकप्रमाणाऽभावाद्वा भवेत्। न तावद्वाधकप्रमाणसद्भावः। न खलु प्रत्यक्षमस्य वाधकं रजतस्येव समारोपितस्य शुक्तितत्त्वं विषयः सम्भवति। तद्विरुद्धोपस्थानाऽसम्भवात्। सर्वज्ञताया अत्यन्तपरोक्षायाः केनचिदपि सह प्रत्यक्षप्रतीतेन विरोधाऽनवगतेः। नाप्यनुमानमस्य वाधकम्। तद्धि विधिनिषेधसाधनतया द्विविधम्। तत्र विधिसाधनं स्वभावहेतुकं कार्यहेतुकं वा न निषेधे साध्ये प्रभवति। अन्यसाधनत्वेऽन्य-साधनस्याऽप्रसङ्गात्। अनुपलब्धिलिङ्गकं तु प्रतिषेधसाधनं भवेत्। तच्च स्वभावाऽनुपलम्भसाधनादन्यदिह सर्वज्ञविरुद्धार्थान्तरविधानेन वा तत्कारण-व्यापकनिषेधेन वा सर्वविदभावं साधयेत्। न तावत्स्वभावविप्रकर्षिणा[1] सर्वविदा सह कस्यचिदपि प्रतीयमानस्य विरोधो दृष्टपूर्वः। विरोधि-प्रतिपत्तिनान्तरीयकतया विरोधाऽवगतेः। विरोधिप्रतिपत्तौ वा नाऽत्यन्ताय तन्निषेधः। न च प्रत्यक्षाऽनुपलम्भसाधनं कार्यकारणभावः स्वभाववि-प्रकर्षवति सर्वविदि शक्याऽवगमः। अत एव व्यापकत्वमपि कस्यचिद् दुरवसायमेव सर्वविदि। नापि विपक्षे वाधके प्रमाणप्रवृत्तिः क्षणिकत्वस्येव सत्त्वे सर्वविद्व्यापकाऽभावाऽवगम[2]-निवन्धनम्। तदभावात्। भावे वा निषेधो नास्ति अत्यन्तायतस्य। न खलु खपुष्पं कस्यचिद्व्याप्यं सम्भवति व्यापकं वा। न चाऽन्यमात्रनिवृत्तावन्यस्य निवृत्तिः। अतिप्रस-ङ्गात्। यथाहुः—

अन्यस्यैव निवृत्याऽन्यविनिवृत्तिः कथं भवेत्।
नाऽश्ववानिति मर्त्येन न भाव्यं गोमताऽपि किम् ? ॥इति।

न च सत्त्वज्ञेयत्वादयो सर्वज्ञतासहभुवः सहस्रश उपलब्धा व्याप्ता विवादाध्यासितस्य पुरुषधौरेयस्य विरुद्धोपस्थापनेन सर्वज्ञतां प्रतोक्षिपन्तोति साम्प्रतम्। सत्त्वादेरसर्वविद्व्याप्त्यसिद्धेः। न खलु दर्शनाऽदर्शनमात्र-निवन्धनं व्याप्तिविज्ञानम्, मा भून्चैत्रः श्यामो मैत्रीतनयत्वात् परिदृश्य-मानमैत्रीतनयस्तोमवदित्यनुमानम्। तत्तनयताया अश्यामतया विरोधा-ऽभावेन सन्दिग्धव्यतिरेकित्वान्नानुमानमेतदिति चेत् ? न। इहाऽपि

१. विप्रकृष्टेन २ पु० पा०। २. व्यापकावगम २ पु० पा०।

समानत्वात। न हि सर्ववित्तया सह सत्त्वादेः कश्चिद्विरोधो, येनासौ न सन्दिग्धव्यतिरेकः स्यात्। द्वयी हि विरोधाऽवगतिः सहाऽनवस्थानं वा, छायाऽऽतपवत् परस्परपरिहारो वा भावाऽभाववत्। न तावदविकलकारणस्य सर्वज्ञत्वस्यालोकस्येव[1] सत्त्वादेः सन्तमसस्येव भावेऽभावः, यतः सहाऽनवस्थितिरूपविरोधसङ्गतिः स्यात्। तथा च भावे वा नात्यन्ताभावः सर्वज्ञताया इत्युक्तम्।

नाऽप्युत्तरः। न खलु सर्वज्ञतासत्त्वादिपरिहारेण सत्त्वादयो वा तत्परिहारेण भावाऽभाववत् प्रत्ययपथमवतरन्ति। न च सर्वज्ञतया तेषां व्याप्तिरस्तीत्युक्तम्।

स्यादेतत्। उपदेशप्रणयनमेव वाधकं सकलवस्तुतत्त्वदर्शनस्य। तथा हि। उपदेशो विकल्पविज्ञानयोर्निर्विकल्पश्च समारोपितगोचरतया मिथ्येति न तथा तथागतविज्ञानं भवितुमर्हति। तदयमुपदेशो निषेध्यसर्वविषयतत्त्वविज्ञानविरुद्धसमारोपितगोचरविकल्पविज्ञानकार्यं इति विरुद्धकार्योपलब्ध्या बुद्धादीनां सर्वज्ञत्वाऽभावसाधनम्। उपदेशाऽभावे वा वृथा तत्प्रसाधनं तत्सन्निधानमात्राद्वा चैत्यवन्दनादिचोदनानामनिःसृतत्वाभ्युपगमेऽनाश्वास इति। तन्न। विकल्पस्य सर्वविज्ञानत्वाऽविरोधात्। द्विविधो हि विकल्पो विपर्यासपूर्वोऽतत्पूर्वश्च। तत्र विपर्यासपूर्वो भवादृशाम् अतत्पूर्वस्तत्रभवतः सर्ववेदिनः। न खल्वसौ भ्रान्तो विकल्पवानपि तु विदितसमस्तवस्तुतत्त्वविस्तारः करुणापराधीनमानसो दुःखिन उपदेष्टुकामः। वचनमन्तरेण तदनुपपत्तेः विकल्पं विना तदसम्भवात् तस्याऽतात्त्विकत्वं विद्वानपि तमाहरति। यथा नैरात्म्यतत्त्वं विद्वानपि विकल्प्य समारोपितमात्मानं निषेधति, नास्त्यात्मेति। यथा वा वैयाकरणप्रवरो गाव्यादिशब्दानसाधून् जानानोऽपि पृथग्जनप्रतिपिपादयिषया प्रयुञ्जानोऽपि नाऽपशब्दकारी। तदिदमाहार्यमस्य रूपं न तात्त्विकमिति तत्त्वविदो नोपदेशविरोधः। न च रागादिमत्ता। न खलु कृपा रागपक्षे वर्त्तते। नन्वियं परदुःखप्रहाणेच्छेति राग एव। मैवम्। न हीच्छामात्रं रागः, अपि तु चित्तमलमात्मनो दर्शनाऽऽवरणमभूतगुणाऽभिनन्दनं रागमाचक्षते। न ह्यसति नित्यात्मदर्शने स्वार्थतृष्णापरिप्लुतः कश्चित्परिस्पन्दते। यथा हि चैत्रः स्वतो भिन्नं मैत्रमुदीक्षमाणः स्वगतसुखतृष्णापरिप्लुतो न मैत्रसुखाय घटते। तथा पूर्वाऽपरक्षणविविक्तं विज्ञानमात्रमात्मानं साक्षादीक्षमाणः सन्ततिपतिततद्विपरीतलक्षणान्तरोपकार[2]कर्मणि प्रवर्त्तते, प्रवर्त्तते च स्वार्थतृष्णापरिप्लुतः। तेनाऽवगच्छामोऽवगच्छति नूनमयमहमिति

१. लोकस्येवाभावः पु० पा०।
२. माणो न तत्संततिपतितलक्षणात्मोपकार २ पु० पा०।

न। तस्याऽनुपपत्तेः, अज्ञानाच्च। तथा हि—

हेत्वभावे फलाऽभावात्प्रमाणेऽसति न प्रमा।
चक्षुराद्युक्तविषयं परतन्त्रं बहिर्मनः॥

यद्यप्यात्मप्रत्यक्षनिवृत्तिर्विप्रकर्षवतामभावं व्यभिचरति। सर्वप्रत्यक्षविभिन्नानपि स्वचित्तक्षणानेकतया। तदिदं सहजमात्म[1]ऽदर्शनं निदानं रागादीनाम्। यथाऽहं सुखी भवेयं दुःखी च मा भूवमिति च मा भूवमिति च तृप्यतो यैवाहमिति धीः सैव सहज त[2]त्त्वदर्शनमिति। न च सर्वविदः करुणाऽहमुपकुर्यां परानित्येवमाकारापि सत्त्वदर्शनाऽवयवा यस्मान्नात्मगामी फलाभिलाषाऽयमपि तु स्वार्थमनपेक्ष्य परदुःखप्रहाणेच्छेत्युक्तम्। न च सर्वे चित्तक्षणाः प्रत्येकं परमुपकुर्यामहमहमित्यहमहमिकयोत्पद्यमाना अप्यात्मदर्शनाऽवयवाः। परोपचिकीर्षायास्तं विनाऽप्युपपत्तेः। तत्त्वदर्शने चोपदेशसम्भवात्स्वगतता[3]मन्तरेणापि परोपकारस्य समीहितत्वादपेक्षितलक्षणत्वाच्च फलस्य सत्सम्बन्धस्य प्रवृत्तेः प्रेक्षावत्ताऽविघातात्। तस्मादुपदेशतत्त्वविज्ञानयोरविरोधात्सन्दिग्धव्यतिरेकित्वाद्वचनमपि न सर्वज्ञताया बाधकमिति न बाधकप्रमाणसद्भावस्तदभावव्यवहारसाधनम्। नाऽपि साधकप्रमाणाऽभावः। तथा हि। प्रत्यक्षाऽभावो वा सकलप्रमाणाभावो वा स्यात्। प्रत्यक्षाभावोऽपि चाऽऽत्मनः सर्वेषां वा, यदात्मनस्तदाऽपि दृश्यताविशेषणो निर्विशेषणो वा। न तावदात्मप्रत्यक्षनिवृत्तिर्दृश्यताविशेषणा सर्वज्ञाऽभावसाधनी। तस्य स्वभावविप्रकर्षिणस्तत्त्वानुपपत्तेः प्रसिद्धत्वान्निर्विशेषणायाश्च व्यभिचारात् समस्तप्रत्यक्षनिवृत्तेश्चाऽसिद्धत्वात्। न खल्ववर्ग्दृशः सकलप्रत्यक्षनिवृत्तिः। असिद्धत्वात्। न च प्रमाणं प्रमेयस्य व्यापकं कारणं वा, येन[4] तन्निवृत्तौ निवर्तेत। तस्मान्न तदभावसिद्धिः। नापि तद्भावसन्देहः। तत्साधनेन तत्सद्भावस्य निवेदयिष्यमाणत्वात्। तस्मादनुविधेयपुरुषधौरेयनियोगादेव प्रवृत्तिनिवृत्ती इति साम्प्रतम्।

तदेतन्निराचष्टे—न। कुतः ? तस्याऽनु[5]विधेयस्य सर्वविदोऽनुपपत्तेः। अज्ञानाच्च। पातिते प्रमाणदारुणि यथायथं परिशोधयति—तथा हि।

हेत्वभावे फलाऽभावात् प्रमाणे सति न प्रमा।
चक्षुराद्युक्तविषयं परतन्त्रं बहिर्मनः॥

तदेतद्व्याख्यातुमना भूमिकामारचयति—यद्यप्यात्मप्रत्यक्षनिवृत्तिर्विप्रकर्षवतां त्रिविधेन कालदेशस्वभावविप्रकर्षेण तद्वतां रामसुमेरुपरमाण्वा-

१. त्माऽदर्शनं प्र० पा०। २. स प्र० पा०।
३. सकर्तृकताम् २ पु० पा०। ४. येन तन्नि प्र० पा०।
५. स्यावि प्र० पा०।

निवृत्तिरसिद्धा। असर्वदृशः सकलप्रमाणनिवृत्त्या च नाऽर्थाऽभावसिद्धिः। अव्यापकनिवृत्त्याऽव्याप्यनिवृत्तेरनियमात्। अव्यापकत्वं चाऽहेतुत्वात्। तन्मात्रानुबन्धाऽभावाच्च। अन्यथा सर्वस्य सर्वदर्शित्वप्रसङ्गात्, अविशेषाच्च। वचनादयश्च यद्यप्यविरोधादनिवर्तकाः तथापि कारणनिवृत्त्या कार्यनिवृत्तिप्रतीतेः प्रमाणाऽनुपपत्त्या तत्कार्यायाः सर्वार्थेषु संविदोऽभावमनुमिमीमहे। तथा हि। न प्रत्यक्षं चक्षुरादिजन्म तावत्सर्वार्थेषु, तेषां विषयनियमात्। किंचिदेव हि वर्तमानं संबद्धं च तद्विषयो न सर्वेऽर्थाः।

यद्यपि चाऽनेकविधप्रमेयसंवेदनाद्रूपतो नियमो दुर्निरूपः। पटुमन्दता-

दीनामभावं व्यभिचरति। सर्वप्रत्यक्षनिवृत्तिरसिद्धा। असर्वदृशोऽस्मदादेः सकलप्रमाणनिवृत्त्या च नार्थाऽभावसिद्धिः। कस्मात्? अव्यापकनिवृत्तावव्याप्यनिवृत्तेरवश्यम्भावाऽनियमात्। अव्यापकत्वमेव कुत? इत्याह—अव्यापकत्वं चाऽहेतुत्वादकारणत्वात्तन्मात्रप्रतिवन्धा[१]ऽभावाच्च। हेतुधर्म्ममात्राऽनुवन्धे हि साध्यधर्मोऽस्य व्यापकः। यथा वृक्षत्वं शिंशपात्वस्य। न च प्रमेयमात्राऽनुवन्धि प्रमाणम्। अन्यथा[२] प्रमेयाऽनुवन्धित्वे प्रमाणस्याऽस्मदादेः सर्वस्य सर्ववित्त्वप्रसङ्गः। तथा सत्यविशेषोऽस्मदादीनां भवदभिमतेन सह सर्वविदा। प्रमेयमात्राऽनुवन्धिप्रमाणशालिता हि सर्वज्ञता। सा चाऽस्मदादेरपीत्यविशेषप्रसङ्गः। वचनादयश्च यद्यप्यनिंवर्त्तकाः सर्वार्थतत्त्वविदो विपश्चितश्चाऽविरोध[३]स्तया सह वचने सत्त्वादीनाम्, तथाऽपि कारणनिवृत्त्या कार्यनिवृत्तिप्रतीतिः[४]। न ह्यस्ति सम्भवो, नास्ति धूमकेतनः, अस्ति च धूम इति। प्रमाणं च करणं प्रमाया इति प्रमाणाऽनुपपत्त्या तत्कार्यायाः सर्वार्थसंविदोऽभावमनुमिमीमहे।

प्रमाणाऽनुपपत्तिमेव दर्शयति—तथा हि। न प्रत्यक्षं चक्षुरादिजन्म तावत् सर्वार्थेषु सम्भवति। कुतः? तेषां चक्षुरादीनां विषयनियमात्। नियमभेदमाह—किञ्चिदेव वर्त्तमानं संवद्धं तद्विषयः। न हि वर्त्तमानमात्रं तद्विषयः। स्वभावविप्रकर्षवतां परमाण्वादीनामपि तद्विषयत्वप्रसङ्गात्। अत उक्तम्—किञ्चिदेवावयवि द्रव्यादीति। तथाऽपि कालव्यवहितदेशविप्रकृष्टं च तद्विषयः प्रसज्येत, अत उक्तं सम्वद्धमिति।

एतस्मिंश्च नियमे न सर्वविषयं विज्ञानमिन्द्रियजमित्याह—न च सर्वेऽर्था देशकालस्वभावविप्रकर्षशालिनः। तथा नियमान्तरे तु दूषणमनभ्युपगमादेव परिभूतमित्याह—यद्यपि चाऽनेकविधप्रमेयसंवेदनाद्रूपतो नियमो

१. तन्मात्राऽनुबन्ध २ पु० पा०। २. तस्मात् अन्यथा प्र० पा०।
३. विरोधात् २ पु० पा०। ४. प्रतीतेः २ पु० पा०।

दिभेदतश्च नानादेशपरिमाणार्थपरिच्छेदान्न देशतः संबन्धनियमः। परिमाणतो नियमश्च। कालतस्तु निरूप्यते। प्राप्यकारित्वेऽवर्तमानस्य प्राप्त्यभावात्। अप्राप्यकारित्वेऽप्यर्थसामर्थ्यसव्यपेक्षत्वात्।

ज्ञानोत्पत्तावजातनिवृत्तयोरनुपाख्येयत्वात् असामर्थ्यात्। तथा

दुर्निरूपः। तथा हि। न तावद्रूपवच्चाक्षुषम्, अरूपस्याऽपि सङ्ख्यादेश्चाक्षुषत्वात्। नापि रूपिसमवेतम्। तदसमवेतस्य नीरूपस्य कालादेरपि चाक्षुषत्वादिति न रूपतो नियमः। नापि पाटवं वा रूपशब्दादीनामुद्भवसमाख्यातम्, स्फीताऽऽलोकमध्यवर्त्तिताऽर्थस्य ऐन्द्रियकत्वनियमहेतुः। अनुद्भूतानां मन्दानां रूपशब्दादीनां चक्षुरादिगतानामन्धकारस्थस्य च घटादेरग्रहणादिति साम्प्रतमित्याह—पटुमन्दतादिभेदतश्च ग्रहणाऽग्रहणनियमो दुर्निरूपः। इन्द्रियपाटवतारतम्येन मन्दमन्दतरमन्दतमग्रहणात्। वृषदंशादीनां च निरालोकवर्तिपदार्थग्रहणात्। नापि देशसंनिधिमहत्त्वे द्रव्यग्रहणनियमकारणे इत्याह—नानादेशपरिमाणार्थपरिच्छेदान्न देशतः सम्बन्धनियमः। चक्षुरेतावति देशे संनिकृष्यते, नैतावतीति नायं नियमः सम्भवतीति तुल्यवद्भूम्यादिगतकुम्भादिशनैश्चरादिग्रहणदर्शनात्।] परिमाणतो नियमश्च दुर्निरूपः। सूक्ष्मसूक्ष्मतरसूक्ष्मतमगोचरत्वस्योपलब्धेः। अणोरनुपलम्भ इत्यचोद्यम्[1]। यदेव भवदभिमतं त्र्यणुकमोक्षामहे तदेव परमाणुमाचक्ष्महे। तदवयवाऽनुपलम्भात् तत्कल्पनाहेत्वनुपपत्तेश्च। दृश्यमानाऽवयवस्य च स्थवीयसस्तैरेव क्षोदीयोभिरारम्भसम्भवात्। अमहतोऽपि च गुणादेश्चाक्षुषत्वान्न महिमगुणशलिता तद्धेतुः। तदेकार्थसमवायस्य वा तद्धेतुत्वे द्व्यणुकस्याऽग्रहणप्रसङ्गः स्यात्, तदभावात्परस्पराऽपेक्षोभयकारणत्वे वा त्र्यणुकस्य च गुणादेश्चैकैककारणशालिनोरचाक्षुषता स्यात्। परस्पराऽनपेक्षकारणत्वे तु तृतीयस्यापि प्रकारस्य सम्भवो दुर्वारः। भवतु वा स्वभावविशेष एव चाक्षुषत्वे हेतुरेक इति न परिमाणतो नियमोपपत्तिः। तस्मान्निरूपणान्तराऽभावात् कालतस्तु निरूप्यते नियमः।

तथा हि—इन्द्रियाणि प्राप्यकारीणि न वा, उभयथापि तेषां वर्त्तमानविषयतैषितव्येत्याह—प्राप्यकारित्वे प्राप्ते उभयाश्रयत्वेनाऽवर्त्तमानस्याऽसंत आश्रयत्वाऽयोगात्। प्राप्त्यभावात् अप्राप्यकारित्वे यद्यपि प्राप्याश्रयत्वेन नाऽपेक्ष्यतेऽर्थः तथापि इन्द्रियाणामसत्यर्थे विज्ञानाऽजननात् अर्थसामर्थ्याऽपेक्षत्वात्। ज्ञानोत्पत्तौ कार्ये अजातनिवृत्तयोरनुपाख्येयत्वात् हेतोरसामर्थ्यम्।

1. इति चेत् २ पु० पा०।

चाऽतिशयानामपि चक्षुरादयः स्वविषयमेव देशतः परिमाणतः संख्यातो वाऽधिकं बोधयेयुः नाऽविषयमजातमतिवृत्तम्। तदुक्तं विद्यमानोपलम्भनत्वात्। तथा हि। प्रत्यक्षे रूपादिवेदने तच्चक्षुरादिपरतन्त्रं तन्नियमादेव

न खल्वतीतोऽजातशत्रुः सम्प्रति संतर्पयति विप्रानन्नपानैरुत्थापयति वा यूपं महासंपन्निमित्तमनागतशङ्खश्चक्रवर्त्ती। यद्युच्येत मा नाम भूतामर्वाग्दृशां लोचनगोचरावतीताऽनागतौ, योगविमलाञ्जनोज्ज्वलीकृतलोचनास्त्वालोचयिष्यन्ति सकृदेव जगदुदरवर्त्ति वृत्तवर्त्तिष्यमाणमर्थमात्रम्। अचिन्त्यो हि इन्द्रियाणां सामर्थ्याऽतिशयः, प्रभावाऽतिशयश्च योगस्य।

यथा हि न चक्षुरादीनां देशतः परिमाणतः संख्यातो वा नियमः तथा कालतोऽपि मा भूदिति तत्राह—यदा कालतो नियम इति व्यवस्थापितं तदा अतिशयानामपि सिद्धाञ्जनादिभिर्योगिनां चक्षुरादयोऽर्वाग्दृशामिन्द्रियाणि च स्वविषयमेव देशतः परिमाणतः संख्यातो वाऽधिकं बोधयेयुः, नाऽविषयमजातमनिवृत्तं वा। एतदुक्तं भवति। यथैव कार्यमहेतुकं न भवति कादाचित्कत्वव्याघातात् एवमनियतहेतुकमपि। न खलु अनियतहेतुकत्वमहेतुकत्वाद्विशिष्यते। कारणस्य हि कार्यप्रागभावनियमः कारणत्वम्, तच्चाऽनियतनिमित्तत्वेऽनुपपन्नम्। न हि जातु यववीजमत्यन्तपरिकर्मितमपि कलमोऽङ्कुराय परिकल्पते। नानाकारणमेकं वृश्चिकादी[1]ति च स्थूलदृशः। कुशाग्रीयदृशस्तु प्रणिहितमीक्षमाणाः पश्यन्ति तत्रापि कमपि जातिभेदम्। तस्माद्यथैव कारणान्तराणि स्वकार्यनिय[2]तसामर्थ्यानि स्वकार्य एवाऽतिशयमनुभवन्ति नाऽकार्ये नाऽप्यन्यकार्ये तथेन्द्रियाण्यपि न स्वा[3]विषये नाऽप्यन्यविषये इति सिद्धम्।

अत्रैव पारमर्षं सूत्राऽवयवं योजयति—तदुक्तं विद्यमानोपलम्भनत्वादिति। ननु मा प्रवर्त्तिषत वाह्यानीन्द्रियाणि, मनस्तु प्रवर्त्स्यतीत्यत आह—मानसमपि प्रत्यक्षं न सर्वं वोधयति। वहिर्मनसोऽस्वतन्त्रत्वात्। यत्र हि मनः स्थितं तत्र तेन प्रवर्त्तितव्यम्, स्वप्रत्ययाऽनुविधानात्। आन्तरे च सुखादौ तत् स्वतन्त्रमिति सुखादिविषयं तत्। न च सुखादयश्चिततया स्वसंवेदनप्रत्यक्षा इति साम्प्रतम्। विज्ञानादन्यत्वात्। विज्ञानाऽभिन्नहेतुतया तत्त्वमेषामिति चेत्। न। अभिन्नहेतुजत्वस्याऽसिद्धेः। इन्द्रियार्थसंनिकर्षो हि चन्दनविज्ञानस्य हेतुः, सुखस्य तु तद्विज्ञानम्, तदभावेऽपि विज्ञानमात्रादेव स्वप्ने सुखोत्पाददर्शनात्। सत्यपि चन्दनाऽनुलेपे हेमन्ते तदनुत्पादादित्येषा दिक्। तस्मात्सुखादिविषयं मानसं वहिर्विषयं भवितुं नाऽर्हति, तत्र तत्प्रत्ययस्य मनस इन्द्रियादितन्त्रत्वादिन्द्रियादीनां च तदगोचरत्वात्।

१. एकशरवृश्चिकादीति पु० पा०। २. निरत प्र० पा०।
३. स्ववि प्र० पा०।

नियतम् । अन्यथाऽन्धाद्यभावप्रसङ्गादिति । मानसमपि प्रत्यक्षमान्तरसुखादिविषयम् । बहिर्मनसोऽस्वतन्त्रत्वात् । स्वातन्त्र्येऽन्धबधिराद्यभावप्रसङ्गादित्युक्तम् । तज्जन्मसमनन्तरप्रत्ययसहकार्य्यपेक्षणाद्यदि नाऽन्धाद्यभावः सर्वथा पारतन्त्र्यं न निवर्तते । तद्विषयत्वात् । अन्यथेन्द्रियान्तरजसहकारिणोऽपि प्रवृत्तेः स एवाऽन्धाद्यभावः । न च तुल्यजातीयविषय एव समनन्त-

कस्मान्न स्वतन्त्रं वहिर्मन ? इत्यत आह—स्वातन्त्र्ये रूपादौ मनसोऽन्धवधिराद्यभावप्रसङ्गात् । न खल्वन्धादयो निर्मनस्कास्तेषां स्मृत्याद्यभावप्रसङ्गात् । मनश्चेच्चक्षुरादिनिरपेक्षमीक्षेत रूपादीन्न कश्चिदन्धवधिरादिः प्रसज्येतेति । तदेव स्फोटयति—तथा हि । प्रत्यक्षे रूपादिवेदने तन्मनश्चक्षुरादिपरतन्त्रं तन्नियमादेव नियतमन्यथा नियमाद्यभावेऽन्धाद्यभावप्रसङ्गादिति ।

उक्तं शङ्कते--तज्जन्मसमनन्तरप्रत्ययसहकार्यपेक्षणाद्यदि नाऽन्धाद्यभावः । अयमर्थः । न खलु मनो नाम चक्षुरादिवत् किंचिदिन्द्रियान्तरं रोचयामहे, किं तु पूर्वमेव विज्ञानं चरमज्ञानस्योपादानमाचक्ष्महे । तदेव हि समंविज्ञानत्वेनाऽनन्तरं चाऽव्यवहितत्वेन समनन्तरप्रत्यय इत्युच्यते । तत्र यदिन्द्रियजविज्ञानसमनन्तरप्रत्ययसहकारिणा तदिन्द्रियजविषयक्षणोपादानेन रूपेक्षणान्तरेणेन्द्रियजविज्ञानसमानकालेन जनितं स्वजनकक्षणविषयं विशदाभमुपरतेन्द्रियव्यापारस्य ज्ञानं तन्मानसं प्रत्यक्षम् । न तदिन्द्रियजम्, तद्व्यापारोपरमे भावात् । नाऽऽन्तरविषयम् । इद्रियजविषयविज्ञानविषयक्षणजनितक्षणान्तरगोचरत्वात् । न चाऽन्धवधिराद्यभावः । तेषामिन्द्रियरहिततया तज्जविज्ञानाऽभावेनोपादानविरहात् । न चाऽप्रत्यक्षम्, विशदाभासत्वादिति ।

निराकरोति—सर्वथा नेन्द्रियान्तरपारतन्त्र्यं निवर्त्तते स्वोत्पत्तौ मानसस्य प्रत्यक्षस्य । कुतः ? यदिन्द्रियजविज्ञानविषयाऽनन्तरक्षणो ग्राह्यः तदिन्द्रियविषयजविषयजविषयत्वात्[1] अन्यथा तदिन्द्रियजविषयजविषयाऽनपेक्षणे[2] स्वोत्पत्तौ मानसस्येन्द्रियान्तरजविज्ञानसहकारिणोऽर्थातप्रवर्त्तमानस्य रूपविज्ञानस्य स एवाऽन्धाद्यभावः प्रसज्येत । सहकारिभिः सह स्वोपादेयमुपादानमपि करोतीति सहकारीत्युच्यते । यद्युच्येत तुल्यजातीयविषय एव समनन्तरप्रत्ययो भवति नाऽसजातोयविषयः, तेनाऽयमप्रसङ्ग इति, तत्राह—न च तुल्यजातोयविषय एव समनन्तरप्रत्ययः । कस्मात् ? जात्यन्तरसंचाराऽ-

१. तदीन्द्रि-विषयजविषयत्वात्; प्र० पा० । तदिन्द्रियजविषयत्वात् २ पु० पा० ।
२. विषयजाऽनपेक्षणे २ पु० पा० ।

रप्रत्ययः। जात्यन्तरसंचाराऽभावात्। न खल्वेष ज्ञानधर्मो, जात्यन्तर-संचारात्। न प्रत्यक्षधर्मोऽवितर्कितरूपाद्यपेक्षणात्। न मानसधर्मः। सुखादिषु तददर्शनात्। अपि च विषयनियमात्पारतन्त्र्यमस्तु सहकारिविशेषाऽपेक्षया वेति पारतन्त्र्यं युक्तं स्मरणे तथा दर्शनात्। एकेन्द्रियग्राह्ये च सजातौ रूपान्तरग्रहणप्रसङ्गः। अवान्तरजात्यपेक्षणे भिन्नसन्तानाऽऽपातः। तदतत्सन्तानवृत्त्योर्ज्जात्यभेदात्। तस्मादेकसन्तानक्षणे समनन्तरप्रत्ययतां भावप्रसङ्गात्। न तावन्निरुपादानं विज्ञानं भवितुमर्हति। न चाऽनियतोपादानम्। उक्तमेतत्, [1]अनियतहेतुकत्वमहेतुकत्वान्नाऽतिरिच्यत इति। तदिह पूर्वबुद्धिभावाऽभावाऽनुविधानादुत्तरबुद्धिभावाऽभावयोः सैवोपादानमिति युक्तम्। ततश्च शुक्लविज्ञानाऽनन्तरमुपजायमानं घनसारशलाकायां शीतस्पर्शविज्ञानं शुक्लविज्ञानोपादानमेषितव्यम्। अन्यथा शुक्लविज्ञानजातीयस्य संतानस्य शिशिरज्ञानजात्यन्तरसंचाराऽभावः स्यादित्यर्थः।

तदेतद्विभजते—न खल्वेष ज्ञानमात्रस्य धर्मः। कुतः? जात्यन्तरसंचारात्। न प्रत्यग्धर्मः। कस्मात्? अविकल्पितरूपार्थाऽपेक्षणात्। अविकल्पितस्य रूपस्य साक्षात्कारात्तद्विषयपूर्वज्ञानसंभवे तु शब्दादिस्मृतौ सत्यां वाऽऽलोचनमात्रं भवेदित्यर्थः। न मानसप्रत्यक्षधर्मः। कस्मात्? सुखादिषु तद्विषयपूर्वज्ञानाऽदर्शनात्।

एवं तावदुक्तेन क्रमेण सहकारिविशेषाऽपेक्षया क्षणान्तरविषयत्वेऽपि पारतन्त्र्यमापादितं मनसः सम्प्रति विमर्शपूर्वकमिन्द्रियविषयतयैव पारतन्त्र्यमवधारयति—अपि च विषयनियमात्पारतन्त्र्यमस्तु सहकारिविषयाऽपेक्षया वेति विमृश्याऽभिमतमवधारयति—पारतन्त्र्यं युक्तम्। य एव यदिन्द्रियविषयः तत्रैव मनस्तदिन्द्रियतन्त्रं प्रवर्तत इति युक्तमित्यर्थः। कस्मात्? स्मरणे तथा दर्शनात्। अपि च तुल्यजातीयविषयं समनन्तरप्रत्ययं मानसप्रत्यक्षकारणं ब्रुवाणो न तावदेकेन्द्रियग्राह्यतया तुल्यजातीयतां वक्तुमर्हति, अतिप्रसङ्गादित्याह—एकेन्द्रियग्राह्ये च सजातावभ्युपगम्यमाने रूपान्तरग्रहणप्रसङ्गः, पीतदर्शनमपि चाक्षुषं मानसप्रत्यक्षं चक्षुरसन्निकृष्टेऽपि नीले प्रसुवीत, तदिन्द्रियग्रहणाऽर्हत्वस्योभयत्राऽविशेषादित्यर्थः। यदि त्ववान्तरजातिरास्थीयेत न चासौ रूपान्तर इति नाऽतिप्रसङ्गस्तत्राह—अवान्तरजात्यपेक्षणे हि भिन्नसन्तानज्ञानाऽऽपातः। एकनीलोत्पलसन्तानवर्त्येकनीलोत्पलक्षणविषयमिन्द्रियाऽसन्निकृष्टसंतानान्तरवर्तिनीलोत्पलक्षणविषयमपि विशदं मानसं जनयेत्। कुतः? तदसन्तानवृत्त्या नीलोत्पलक्षणयोर्जात्यभेदात्। उपसंहरति—तस्मादेकनीलोत्पलसन्तानवर्त्तिक्षणविषयेन्द्रियजज्ञाने समनन्तरप्रत्ययत्वं तदिन्द्रिय-

१. नियत प्र० पा०।

वदता चक्षुरादिविषयग्राहित्वमेवोक्तं भवति। क्षणविवेकप्रतिभासनादभेदप्रतिभासनात् क्षणिकत्वप्रतिक्षेपात्।

विषयज्ञानविषयजविषयस्य मानसस्य वदताऽकामेनापि चक्षुरादिविषयग्राहित्वमेवोक्तं भवति। तथा चाऽस्येन्द्रियपारतन्त्र्यमिति सिद्धम्।

न चैतावताऽपि चक्षुरादिविषयत्वमेव भविष्यति, न चक्षुरादिविषयग्राहित्वमित्यत आह—क्षणविवेकप्रतिभासनात्। इदमभिसंहितम्। क्षणिकत्वे हि सिद्धे भावानामेव तद्भवेदपि, न त्वेतदस्ति। तथा हि। अस्य साधनं प्रत्यक्षमनुमानं वा भवेत्। प्रमाणान्तराऽभावात्। प्रमाणस्य सतोऽत्रैवाऽन्तर्भावात्। अनन्तर्भावे तत्त्वाऽनुपपत्तेरिति स्थितेः। तत्र न तावत्प्रत्यक्षं लौकिकं नीलोत्पलादिर्वर्तिक्षणिकतां गोचरयति। ननु न नीलादन्यत् क्षणिकत्वं नाम वस्तुसत्। अर्थक्रियाभेदे हि तथा स्यात् सितादिवत्। न च क्षणिकत्वस्य नीलसाध्याया अर्थक्रियाया भिन्ना समस्ति अर्थक्रिया, या स्वलक्षणभेदेनाऽवतिष्ठेत। क्षणिकत्वं पीतादिवन्नीलसाध्ययैव चेदर्थक्रियया तत्त्वतो नीलाद्भिद्यते। न भिद्यते चेन्नूनं नीलग्राहिणा प्रत्यक्षेणैव क्षणिकत्वं गृहीतं तदव्यतिरेकात्। तदनुपपन्नम् अनुभवाऽनारोहात् न खल्वनुभवो व्याख्यानमर्हति। स च नीलमिति न तु क्षणिकवचनमिति। तदव्यतिरेकात्तद्गोचरत्वे स्थेम्नोऽपि तदभिन्नस्य तत्त्वप्रसङ्गः। मानान्तरात्तु क्षणिकस्य तद्भेदसिद्धौ प्रत्यक्षसिद्धयभिधानं प्रलापः। तत्र तस्याऽवसायाऽजनकत्वात्। अवसायाऽननुगतव्यापारस्य प्रत्यक्षस्य प्रवृत्तिविषयं प्रति प्रामाण्याऽनभ्युपगमात्।

स्यादेतत्। अनुभवारूढैव क्षणमात्रवर्तिता नीलादीनाम्। तथा हि प्रत्यक्षविज्ञानं क्षणिकं स्वसमयेनैवाऽवच्छिन्नं परिच्छिनत्ति। तद्यथा। नीलाऽऽकारमालोचनं नीलं परिच्छिन्दत् तदभावं व्यवच्छिन्दत् तदभावाऽव्यभिचारिणः पीतादीनपि व्यवच्छिनत्ति। तथाऽस्तसमयाऽवच्छिन्नं नीलं परिच्छिन्दत् स्वसमय[1]वर्तिताऽभावमप्यस्य व्यवच्छिन्दत् तदभावाऽविनाभाविनीं तत्पूर्वाऽपरसमयवर्तितामस्य व्यवच्छिनत्ति। तदव्यवच्छेदे पीतादीनामप्यव्यवच्छेदः। तथा च नीलसाध्याऽर्थक्रियाऽर्थिनो न क्वचिदेव नियमेन प्रवर्तेरन्। तदनुभवसिद्धैव क्षणिकता भावानामिति।

तदनुपपन्नम्। नीलमात्रगोचरत्वादालोचनस्य। न खलु[2] तदात्मानमपि गोचरयति, दवीयसी त्वस्य स्वसमयगोचरता। स्वसंवेदनाऽभ्युपगमेऽप्यात्माऽनात्मप्रकाशनमात्रं नात्मानं समयेनाऽऽत्मना वा नीलं समयेन वा घटयेत्।

---

१. समय प्र० पा०। २. खल्व प्र० पा०।

आलोचनमात्रतया विशेषणविशेष्यभावाऽविषयत्वात्[1]। आलोचनस्यापि तत्समयाऽविच्छेदेऽपि नीलादीनां नैकक्षणमात्रवर्त्तित्वसिद्धिः। आलोचनस्यापि द्वित्रादिक्षणवर्तित्वात् एकक्षणमात्राऽवस्थानाऽसिद्धेः। न चैकस्य क्रमवदनेकसम्बन्धो विरुध्यत इति निवेदयिष्यते। तत्सिद्धं प्रत्यक्षेण क्षणविवेकाऽप्रतिभासनान्नेन्द्रियविषयजविषयता[2] मानसस्य किन्त्विन्द्रिय[3]-विषयग्राहित्वमेवेति।

ननु मा नाम क्षणभेदः प्रतिभासताम्, तदभेदस्तु कुत ? इत्यत आह—अभेदप्रतिभासनात्। सोऽयं स्फटिक इति प्रत्यभिज्ञैव भगवती स्थापयिष्यति स्फटिकम्। नन्वियं न स्फटिकस्य पूर्वाऽपरक्षणाऽवस्थानलक्षणं स्थिरत्वं गोचरयितुमर्हति। न खल्वेतद्विज्ञानमेकम्, कारणभेदाद् विषयभेदात् स्वभावविरोधाच्च। तथा हि। स इति पारोक्ष्यमयमिति च साक्षात्कारः। न त्वनयोः स्वभावविरुद्धयोर्दहनतुहिनयोरिव शक्या शक्रेणाप्येकताऽऽपादयितुम्। त्रैलोक्यस्यैक्यप्रसङ्गात। सत्यपि च स्फटिक इति व्यपदेशाऽभेदे देशकालभेदाद् विरुद्धधर्म्मसंसर्गादनयोर्गोचरो भिद्यते। न च संस्कारः पूर्वाऽनुभवयोनितया तद्गोचरनियतः सम्प्रतितनीमननुभूतचरीमस्य सत्तामवगमयितुमर्हति। न चेन्द्रियाणि सन्निहितविषयाणि प्राक्तनीं गोचरयन्ति तत्तास्पदस्य[4] सत्तामसन्निहिताम्। न च कारणभेदेऽपि कार्याऽभेदसम्भवः। कारणभेदाऽभेदाऽधीनत्वात्तद्भेदाऽभेदयोः अन्यथाऽऽकस्मिकत्वाऽऽपत्तेः। तत्तेदन्तास्पदे च स्वगोचरमात्रचारिणी स्मरणग्रहणे न परस्परस्य गोचरं सम्भिन्तः। न चाऽऽभ्यामन्यदेकं विज्ञानमुभयविषयाऽसंभेदसमर्थं सम्भवत्युक्तादेव क्रमात्। न चाऽस्य प्रामाण्यम्, विकल्पत्वेनाऽवस्तुनिर्भासत्वात् स्मार्त्तादविशेषाच्च। तस्मात्प्रत्यभिज्ञां स्थापयति भावानिति मनोरथमात्रम्।

अत्रोच्यते। एकमेवेदं विज्ञानं प्रत्यभिज्ञासमाख्यानम्। ननूक्तं स्वभावविरोधान्नेति, तत्किमिदानीं भवतामनुमानविज्ञानमपि नैकम् ? तदपि हि प्रत्यक्षमप्रत्यक्षं वा विकल्पोऽविकल्पश्च समारोपोऽसमारोपश्च। स्वाऽनुभवाऽवस्थापिताऽभेदस्य स्वरूपस्य तद्ग्राह्यभेदाऽपेक्षया प्रत्यक्षत्वादीनामविरोध इति चेत्। न। इहापि साम्यात्। न खल्वेतदपि विज्ञानं तत्तेदन्ताऽधिकरणमेकमाभ्यामनुरक्तं स्फटिकं गोचरयति, यदभिन्नं नानुभूयते अनुभूयते वा। एकत्वेऽपि च वस्तुनस्तदनुरञ्जकतत्तेदन्ताभे[5]दापेक्षया

१. विशेषविशेषस्य भावविषयत्वात् २ पु० पा०। २. इन्द्रियविषयता २ पु० पा०। ३. किञ्चिदपि प्र० पा०। ४. तत्तास्पदमस्य प्र० पा०। ५. न्ताऽभे प्र० पा०।

प्रत्यक्षतापरोक्षते न विरोत्स्येते । सहसम्भवाद्विज्ञानैकत्वस्य च प्रमाणसिद्धत्वात् । न च स इति पूर्वदेशकालसंसर्गोऽयमिति च सन्निहितदेशकालसंसर्ग एकस्य विरुध्यते । अतो युक्तं यत्पद्मरागस्य स्वरूपे परिच्छिद्यमाने तदभावो व्यवच्छिद्यत इति । तदव्यवच्छेदे तत्स्वरूपाऽपरिच्छेदात् स्वप्रच्युतिव्यवच्छेदस्वभावत्वात् पद्मरागभावस्य । तदव्यवच्छेदे तत्परिच्छेदाऽनुपपत्तेः । कस्मात्पुनस्तदन्ये पुष्परागादयो व्यवच्छिद्यन्ते ? तदभावाऽविनाभावादिति चेत्, स एव कुतः ? प्रत्यक्षेण कदाचिदपि पुष्परागपद्मरागयोस्तादात्म्याऽनुपलम्भादिति चेत् । यत्र तर्हि सतस्तादात्म्यप्रतीतिः तत्र न तदभावाऽविनाभावः । समस्ति च सोऽयं पद्मराग इति देशकालभेदाऽनुगतमेकं पद्मरागतत्त्वमवभासयन्ती साक्षात्कारवती प्रतीतिः । तेन भवतु देशकालयोस्तत्संसर्गयोर्वा परस्परमतदात्मत्वं न तु तदवच्छिन्नस्य पद्मरागस्य । तस्य भावात्संसर्गाभ्यां चाऽन्यत्वात् । ततोऽन्यत्वे तत्संसर्गयोः कुतस्तदीयत्वमिति चेत् । स्वभावादेवेति संसर्गपरीक्षायां निपुणतरमुपपादयिष्यते । तस्मात्तत्तेदन्ताऽऽस्पदस्य पद्मरागस्य[1] तदवभासिनोऽनुभवस्य चैकत्वमनुभवाद्वा अनुमानाद्वा तदवभासलक्षणफलाऽभेदजन्मनः सिद्धम्[2] । विशदतरकार्यसिद्धौ चाऽप्रतीयमानमपि कारणं कल्पनीयं न पुनरप्रतीयमानकल्पनाभयात् कार्यवैशद्यमपह्नोतुमुचितम् । रूपादिविज्ञप्तीनामप्यपह्नवप्रसङ्गात्[3] । तदिह यद्यपीन्द्रियं केवलमसमर्थं यद्यपि च संस्कारमात्रं संस्कारसध्रीचीनं त्विन्द्रियं भावयिष्यति प्रत्यभिज्ञातद्भावाऽभावाऽनुविधानात् प्रत्यभिज्ञाभावाऽभावयोः । न हि नाऽजीजनद्[4] वीजमङ्कुरमिति मृदादिसहितमपि न जनयति । तेन भवतु स्थिरस्य भावस्य सहकारिप्रत्यय[5]समवधानसमासादिताऽतिशयस्य कार्यकारिता, भवतु वोपसर्पणं प्रत्ययपरम्परालब्धतथात्वादभेदस्य, उभयथाऽपि लोचनादीनां संस्कारसहितानामनुभववासनाभेदसहभुवां वा प्रत्यभिज्ञानजननसामर्थ्यसम्भवः । अनुभववासनामात्रजत्वेऽयमित्यनुपपत्तेरिन्द्रियमात्रजत्वे वा स इति अनर्थजत्वे वा अर्थसंनिधानाऽसंनिधानाभ्यां तत्प्रतिभासभेदाऽनुपपत्तेः । न चैवमतीतकालसम्बन्धितेन्द्रियाणाम् । तदसम्बन्धेऽप्यतीतकालतायास्तत्पारम्पर्यसम्बन्धसंस्कारद्वारेणाऽवभासोपपत्तेः । न चैवमतीतकालता न प्रत्यक्षेति साम्प्रतम् । इन्द्रियजविज्ञानविषयत्वात् तन्मात्रानुबन्धित्वाच्च प्रत्यक्षताया इन्द्रियसम्बन्धत्वे । तन्मात्रा[6]नुबन्धित्वे तु तज्ज-

---

१. तस्मान्नाऽभेदो नापि सादृश्यं पद्मरागस्येति २ पु० पा० ।
२. लक्षणाद्वा नाऽसिद्धम् २ पु० पा० ।
३. ज्ञप्तीनामप्यपह्नवप्रसङ्गात् ।
४. जनयति २ पु० पा० ।
५. एकप्रत्यय २ पु० पा०
६. इन्द्रियसंबन्धमात्र २ पु० पा० ।

विज्ञानाऽविषयाणामपि तद्गन्धादीनां[1] परमात्ममनःप्रभृतीनामप्रत्यक्षत्वप्रसङ्गः[2]। तस्मान्न कारणाऽभावः। नापि सामग्रीभेदः, यतः कार्यभेदः स्यात्। तस्मिन् जनयितव्ये नियमेन तत्पूर्वभाविनां संस्कारेन्द्रियादीनामेकत्र सामग्रीभावात्। तत्सिद्धमभेददर्शनं प्रत्यभिज्ञानात्मकमेकमनेकदेशकालाऽवस्थासम्बन्धं पद्मरागादि गोचरयतीति। च चेदं स्मार्त्तम्, पूर्वाऽपरदेशकालाऽवस्थानुगतेरधिकारात्[3]। न च विकल्परूपतयाऽस्याऽप्रामाण्यम्, अभिलापसंसर्गयोग्यप्रतिभासप्रामाण्ययोरविरोधात्। समारोपितगोचरत्वस्याऽसति बाधकेऽनुपपत्तेः। न चैतदनुसन्धानमात्रं यथा भिन्नानामपि यजमानानामेकीभूता वयमिह सत्रे इति व्यपदेशमात्रं तत्केनचिदुपाधिना न त्वेकत्वावगमः। इह तु देशकालाऽवस्थासंसर्गभेदेऽपि पश्यन्त्येकं पद्मरागतत्त्वमभिन्नदेशकालमिव लौकिकपरीक्षकाः। तत्सिद्धमभेदप्रतिभासनादिति।

नन्वस्त्वभेदप्रतिभासः, न पुनरयमक्षणिकतामावहति भावादीनाम्। बाधके सति समारोपितगोचरत्वात्। अस्ति हि बाधकं यत् सत्तत् क्षणिकं यथा घटादि। संश्च विवादाऽऽस्पदीभूतः शब्दादिरिति स्वभावहेतुः। भावमात्राऽनुबन्धिसाध्यविषयत्वात्। कथं पुनरिह सत्तामात्राऽनुबन्धसिद्धिः क्षणिकतायाः पूर्वाऽपरभागविकलकालमात्राऽवस्थितिलक्षणायाः? । इत्थम्। तथा हि। सर्वोपाख्यारहितविपरीतरूपनिरूपणा सत्ता भावानां नाऽर्थक्रियाकारिताया अतिरिच्यते। नो खलु समस्ताऽर्थक्रियाऽनुपयोगिभावसंभवः। तथा हि—स्वरूपमात्राऽनुबन्धिसार्वज्ञविज्ञानगोचरो न वा? अगोचरश्चेन्निरुपाख्यो न भावः। तद्विषयताव्याप्तस्य वस्तुरूपस्य तन्निवृत्तौ निवृत्तेः। तद्गोचरत्वे वा कथमनालम्बनम्? आलम्बनं चेत् कथमप्रत्ययः? प्रत्ययश्चेत्कथमर्थक्रियायां नोपयुज्यते? तदर्थक्रियाकारितैव सत्ता भावानाम्। सा च क्रमाऽक्रमाभ्यां व्याप्ता। तृतीयप्रकारविरहात्।

तथा हि। भावानां तासु तास्वर्थक्रियासु क्रमाऽक्रमौ परस्परपरिहारवन्तौ त्यक्षत एव चकास्तः। तथा च प्रकारान्तरमपि क्रमाऽक्रमात्मकमीदृशाभ्यामेवाऽनुभूताऽवसिताभ्यां क्रमाऽक्रमाभ्यां व्यतिरिक्तमङ्गीक्रियेत, ततो दृश्यमानयोस्तयोरपि क्रमाऽक्रमयोः परस्परसङ्करप्रसङ्ग इति दृश्यमानः क्रमोऽक्रमात्मकोऽक्रमश्च क्रमात्मक इति तथैवाऽनुभवक्रिये प्रसज्येयाताम्। तदेवं परस्परपरिहारवन्तौ क्रमाऽक्रमौ परिच्छिन्दत्

---

१. अपि तत्सम्बन्धवताम् २ पु० पा०।
२. प्रसङ्गात् २ पु० पा०।
३. अवस्थाऽवगतेरधिकारार्थत्वात् २ पु० पा०।

प्रत्यक्षमेव प्रतिक्षिपति, न मृष्यति च प्रकारान्तरमीदृक्क्रमाऽक्रमसंकीर्णमेकम्। तदनुपलम्भश्च दृश्यविशेषणरहितोऽपि दृश्यमानतादात्म्यनिषेधात्मकतया तदभावव्यवहाराय कल्पते। दृश्यमानस्तम्भतादात्म्येन स्वयमदृश्यानां पिशाचप्लवङ्गमादीनामविशेषेणाऽनुपलम्भमात्रेणाऽसद्व्यवहारसिद्धेः। अनेवंभूतक्रमयौगपद्यव्यतिरेकवति तु प्रकारान्तरे क्रमयौगपद्ये एव न संभवतः। ननु मा भूतामस्त्वन्य एव क्रमाऽक्रमाऽभिधानयौगपद्यादन्यप्रकारो यमास्थाय अर्थक्रियासूपयोक्ष्यत इति चेत्। नन्वेषां प्रकारान्तरवत्किमर्थक्रिया पिशाचायमानैव? तथा चेत्किं नश्छिन्नम्। दृश्यमानास्त्वनुभूताऽवसितपरस्परव्यावृत्तक्रमयौगपद्यरूपप्रकारद्वयसमालिङ्गितशरीरा अर्थक्रिया न प्रकारान्तराद् भवितुमीशते। न च तदपि। तथा हि। यत्र यत्प्रकारव्यवच्छेदेन यदितरप्रकारव्यवस्थानं तत्र प्रकारान्तरसंभवः। तद्यथा नीलप्रकारव्यवच्छेदेनाऽनीलप्रकारव्यवस्थानं पीते। अस्ति च क्रमयौगपद्ययोरन्यतरव्यवच्छेदेन तदितरप्रकारव्यवस्थानं व्यवच्छिद्यमानप्रकारान्तराऽविषयीकृते अर्थक्रिया सर्वत्र कार्यकारण[1]इति विरुद्धोपलब्धिः। निषिध्यमानप्रकारान्तरसम्भवविरुद्धं हि द्वयोरन्यतरनिषेधेऽन्यतरव्यवस्थानमिति प्रकारान्तराऽभावाद् भावानामर्थक्रिया क्रमाऽक्रमाभ्यां व्याप्ता, तौ च स्थिराद्व्यावर्त्तमानौ अर्थक्रियामपि व्यावर्त्तयतो वृक्षतेव शिंशपात्वमेकशिलामयादचलप्रदेशात्।

तथा हि। न तावत्क्रमेणाऽर्थक्रियासम्भवः, स्वेनैव हि रूपेण भावा अर्थक्रियासूपयुज्यमाना दृश्यन्ते यतो[2] यद्यत्कार्यान्वयव्यतिरेकाऽनुविहितभावाऽभावं तत्तत्कार्यप्रसवसमर्थम्, रूपं च तेषां कार्येणाऽनुकृताऽन्वयव्यतिरेकमिति तदेव समर्थम्। तच्च द्वितीयादिष्विव क्षणेषु प्रथमेऽपि क्षणे सदिति द्वितीयादिक्षणजन्यं कार्यकलापं प्रथमे एव क्षणे जनयेत् समर्थस्य क्षेपाऽयोगादिति नाऽक्षणिकस्य क्रमवद्व्यापारसम्भवः।

स्यादेतत्। असमर्थोपि क्रमवत्सहकारिसंनिधानात् क्रमे[3]ण करोतीति। तदनुपपन्नम्। विकल्पाऽसहत्वात्। किमस्य सहकारिणः कंचिदुपकारमादधति न वा? आदधाना अपि भावाद्भिन्नमभिन्नं वा? तत्र भिन्नोपकाराऽऽधाने भावरूपे सत्यप्यलब्धजनने सत्यप्यस्मिन्ननुपलब्धेरुत्पत्तिमत एवोपकारात्कार्यस्य निष्पत्तेर्न [4]तत्कारी भावः स्यात्। न चोपकारसहकारिणः कार्यजननमिति साम्प्रतम्। उपकारस्योपकारान्तरजननेऽनवस्थापातात्। तत एव

१. विषयीकृते सर्वकार्यकारण २ पु० पा०। २. तेनोपायात् २ पु० पा०।
३. किं प्र० पा०। ४. तत्कारीभावः प्र० पा०।

चोपकार्यस्योत्पत्तेर्भावस्याऽतत्कारित्वप्रसङ्ग इत्युक्तम्। अभिन्नोपकाराधाने भाव एवाऽभिधीयेत, न च स प्राक् सिद्धः शक्य आधातुम्। अनुपकारकत्वे वा सहकारिणो भावेन नाऽपेक्ष्येरन्नित्युत्पन्नमात्रमेव बीजमङ्कुरं जनयेत्। अनपेक्षस्य क्षेपाऽयोगात्। क्षेपे वा पश्चादपि न जनयेत्। यदि मन्येत अनुपकारका अपि भवन्ति सहकारिणः, यस्मात्तैः सहभावः कार्यं करोति। न च नाऽपेक्ष्यन्ते। तैर्विना कार्यस्याऽनुत्पत्तेरिति। तन्न। स्वरूपेण चेत्कार्यजनको भावः कस्मान्नैतानन्तरेण जनयति ?। तेभ्यः प्रागपि रूपसद्भावात्। सहकारिरूपेण वा जनकत्वे त एव जनका न भावाः। अन्यरूपेण वाऽन्यस्य जनकत्वे गगननलिनस्यापि सत्त्वेन सद्व्यवहारगोचरत्वप्रसङ्गः। न चोभयभावाऽभावाऽनुविधानादर्थक्रियाभावाऽभावयोरेकैकस्माच्च व्यभिचारादस्मादुभयाऽधीनजन्मतेति साम्प्रतम्। चरमभाविनि सति हेतौ उत्पत्तिमति कार्योत्पत्तेरवश्यम्भावनियमेन व्यभिचाराऽभावात्। न च स्वकारणात्कतिपयकालकलाविलम्बेन कार्यजननस्वभावो भावो जात इति स्वभावादेव विलम्बकारीति साम्प्रतम्। विकल्पाऽसहत्वात्। किं कतिपयकालविलम्बेऽस्य विलम्बनकारितास्वभावो निवृत्तौ न वा ? निवृत्तश्चेत् कथं स[1] भावो न निवृत्तः ? स्वभावनिवृत्तेः। अनिवृत्तौ वा कथमस्य स्वभावः ? निवृत्ताऽनिवृत्तरूपविरुद्धधर्मसंसर्गात्। अतत्स्वभावत्वे वा न विलम्बत इति जन्माऽनन्तरमेव कृतकृत्यः प्रसज्येत। अनिवृत्तौ कतिपथकालकलाऽतिक्रमेऽपि न कार्यं जनयेत्। विलम्बकारिताया रूपस्य तादवस्थ्यात्। तदुक्तेन क्रमेण न क्रमेणाऽर्थक्रियाकारिता सम्भवति भावस्य। नापि यौगपद्येन युज्यते। तस्माद्यावत्कार्यं किमपि प्रथमे क्षणे तेनाऽक्षणिकेन स्वेनाऽऽत्मना संपादिता तावत्सर्वं द्वितीयादिक्षणे संपादयेत्। तावत्कार्यसंपादनयोग्यस्याऽऽत्मनो द्वितीयादिक्षणेषु संनिधानात्। तथा च संपादितस्य संपादनाऽनुपपत्तेः तदन्यत्वे द्वितीयादिक्षणसंपाद्यस्य न यौगपद्येन निखिलाऽर्थक्रियानिर्वर्त्तनमक्षणिकस्य युज्यते। तदनेन पर्यायेण नाऽक्षणिकस्य क्रमाऽक्रमाभ्यामर्थक्रियाकारिता कल्प्यत इति। विपक्षे अक्षणिकत्वे व्यापकाऽभावात्ततो व्यावर्त्तमानं सत्त्वं क्षणिकत्वेन व्याप्यत इति प्रतिबन्धसिद्धिः।

स्यादेतत्। क्षणिकोऽपि भावोऽर्थक्रियाजननस्वभावो न वा ? न चेदसन्नेव। जनकस्वभावश्चेत् किमस्य सहकारिभिः ? इत्युत्पन्नमात्रमेव बीजमङ्कुरं जनयेत्। ननूत्पन्नो बीजक्षणः समर्थो जनयत्येवाऽङ्कुरं कुतः पुनस्तस्योत्पत्तिः पूर्वस्माद्बीजक्षणात् तर्हि तत्संतानपतितानां सर्वेषां बीजत्वाऽविशेषादङ्कुरजननसामर्थ्यमिति लब्धजन्ममात्रमेव बीजमङ्कुरं जनयेत्।

१. स्व प्र० पा०।

मैवम्। पूर्वपूर्वक्षितिवीजपवनादिक्षणसमवधानोत्पन्नाऽतिशयवत्तदुत्तरोत्तर-क्षणपरम्परालब्धजन्माऽन्यो वीजक्षणः समर्थः समर्थक्षित्यादिक्षणसहभूतो-ऽनपेक्ष एवाङ्कुरं जनयति। न चाऽस्य क्षित्यादिसहभुवस्तदनपेक्षस्यापि तैर्विना कार्यकरणम्। तदेकसामग्र्याधानस्य तदभावे अभावात्। न चाऽसहकारित्वं क्षित्यादीनाम्। तैरेव सहाऽङ्कुरजननात्। तेषामपि तत्पूर्वभावित्वस्य नियमवत्त्वाऽविशेषात्, तन्मात्रत्वादेव च कारणतायाः। न चाऽनपेक्षाणामपि परस्परं कार्यान्तराऽऽरम्भणाम, तन्मात्रस्य तेभ्य उपलब्धेः तत्रैव सामर्थ्यनियमात्। न च कृतकरतयेतरेषामक्रिया, सहक्रियायां कृतमित्यसंभवात्। न च स्वकारणवललब्धपरस्परसंनिधयोऽप्रेक्षावन्तः शक्यमिदमेकेनाप्यस्मासु कर्त्तुमिति कृतं संनिधिनेति निर्वर्तितुमीशते। न च सहकारिकारणभेदः कार्यभेदहेतुः, अपि तु सामग्रीभेदः। तस्मिन् सति कार्यभेदोपलब्धेः। अभिन्ना चेह सामग्रीति न कार्यभेदसम्भवः। परस्परसमवधानं चोपसर्पणप्रत्ययेभ्यः क्षित्यादीनामिति न क्षणिकस्याऽर्थ-क्रियाविरोधादसाधारणता हेतोः। न च साध्यधर्मिणि दृश्यमाने शब्दादौ व्याप्तिप्रसाधनादेव साध्यसिद्धेरसाधनाऽङ्गहेतुवचनम्। न खलु सर्वोप-संहारवती व्याप्तिर्दृश्यमात्रविषया भवितुमर्हति। शक्यं हि शङ्कितुं परेण दृश्यमानानां सत्त्वमक्षणिकत्वान्न व्यावर्त्तितं त्वयेति सत्त्वमनैकान्तिकं न क्षणिकत्वसाधनम् इति। तस्माद्यत्सद् दृश्यमदृश्यं वा तत्सर्वं क्षणिकमिति दर्शनीया व्याप्तिः। नन्वेवमपि शब्दादेर्विवादाऽऽस्पदीभूतस्य व्याप्तिर्दर्शन-बलादेव सिद्धा क्षणिकतेति तदवस्थमेवाऽसाधनाङ्गत्वं हेतुवचनस्य। मैवम्। असत्यपि शशविषाणादौ यत्सद् दृश्यमदृश्यं वा तत्सर्वं क्षणिकमिति यथा सर्वोपसंहारवती व्याप्तिः सिध्यति। न च शशविषाणादयो भवन्ति क्षणिकाः। एवमसत्यपि विवादास्पदीकृते शब्दादौ व्याप्तिसिद्धावपि न सिध्यति क्षणिकतेत्यवश्यं दर्शयितव्यमेव तेषां क्षणिकत्वसाधनाय सत्त्वमिति नाऽसाधनाङ्गता हेतुवचनस्य। अपि च कृतका भावाः स्वहेतुभ्य उपजाय-माना विनश्वरा जायन्ते[1] अविनश्वरा वा? विनश्वराश्चेदुदयानन्तर-मेवाऽपवृज्येरन्निति सिद्धिः क्षणभङ्गः। अथाऽविनश्वराः, न कदाचिदपि नश्येयुः। न खल्वविनश्वरो विनष्टुमर्हति। न जातु स्वकारणादुत्पन्नं नीलं पीतं भवति। न च हेत्वन्तराऽधीनजन्मा विनाश एषामिति साम्प्रतम्। विकल्पाऽसहत्वात्। स हि हेत्वन्तरेण जन्यमानो विनाशो भावाद्भिन्नोऽभिन्नो वा। न तावदभिन्नः कारणभेदात्। भिन्नत्वे तु भावस्य तादवस्थ्यात

१. तद्धेतुना उपजायमाना जायन्ते २ पु० पा०।

पूर्ववदुपलब्ध्यादिप्रसङ्गः। तेन भावस्तिरोधीयत इति चेत्। न। तिरोधानस्यापि भेदे भावतादवस्थ्यम्। अभेदे वा हेतुभेदाऽनुपपत्तिः। तस्मादभावस्यापि समस्तरूपविरहिणो विकल्पितस्य क्रियाऽनुपपन्नेति अभावं करोतीति करोतिक्रियाया अभावेन निःस्वभावेन संबन्धाऽनुपपत्तेः। नञा सह सम्बन्धो भावं न करोतीति। यश्च न करोति तस्याऽकारकस्याऽहेतुत्वमिति न विनाशहेतवः।

केचित् तु तस्मात्स्वहेतोरयमेकक्षणस्थितिधर्मा भावो जात इति द्वितीयक्षणे स्वयमेव न भवति, न पुनरत्र हेतुमपेक्षते। न खलु स्वकारणतः स्वभावव्यवस्थितं नीलमुपजायमानमपीतादिभावे हेतुमपेक्षते पर्यनुयुज्यते[1] वेति। अपि च कृतकानां भावानामवश्यम्भावी विनाशः प्रतीयते तेनापि शक्या क्षणिकताऽनुमातुम्। तथा हि। यद्येषां ध्रुवं भावि तत्र तेषां हेत्वन्तराऽपेक्षा नास्ति यथा रूपादीनां लोहमयत्वे। ध्रुवभावी च कृतकानां भावानां विनाश इति विरुद्धव्याप्तोपलब्धिर्विनाशस्य हेत्वन्तरायत्ततां प्रतिक्षिपति। ध्रुवभाविता हि निषिध्यमानहेत्वन्तराऽपेक्षत्वविरुद्धतन्निरपेक्षत्वव्याप्त्या लब्धा हेत्वन्तराऽनपेक्षत्वमुपस्थापयति। तच्च स्वविरुद्धं हेत्वन्तराऽपेक्षत्वमपाकरोति। यथा हि। ये ये हेत्वन्तरापेक्षा न ते ध्रुवभाविनः तथा वाससि रागादयः। यथा यदि भावा अपि स्वहेतुभ्यो हेत्वन्तरं विनाशं प्रत्यपेक्षेरन् ततस्तस्य संनिधाननियमप्रमाणाऽभावात् कश्चित्कृतकोऽपि न विनश्येत्। सोयमवश्यम्भावी क्षणिकानां भावानां विनाशः स्वहेतुभ्य एवैकक्षणाऽवस्थायिनामुत्पत्तिं सूचयति। तथा च स्वयमेव न भवन्ति भावा द्वितीये क्षणे इति सिद्धः क्षणभङ्ग एतेषाम्।

सदृशपराऽपरोत्पत्तिविप्रलब्धबुद्धयस्तु क्षणानामन्योऽन्यस्य भेदमपश्यन्तोऽज्ञादिवदर्वाग्दृशस्तदेवेदं स्तम्भादीत्यध्यवस्यन्तीत्याशङ्क्याह—
क्षणिकत्वप्रतिक्षेपात्।

इदमाकूतम्। नैव तावत्सत्त्वं क्षणिकत्वसाधनसमर्थं क्षणिकत्वे व्यवस्थाऽनुपपत्तेरसाधारणत्वात्। तथा हि। अन्त्यक्षणप्राप्तानां क्षणानां कार्यजननमुपेयते। तत्रेदं भवान् पृष्टो व्याचष्टां किमेकस्मादेकं कार्यमुपजायते उताऽनेकम्? एवं किमनेकस्मादेकं कार्यमुताऽनेकमिति? न तावदेकस्मादेककार्येण खल्वनुकृताऽन्वयव्यतिरेकं कारणं तदुच्यते यस्य कार्योत्पादात्प्राङ् नियमवान् भावः। अनुकारयन्ति च बहव एव क्षितिबीजादयः स्वाऽन्वयव्यतिरेकावङ्कुरं यत् नियमेन तदुत्पादस्य पुरस्तात् सहभवन्तः।

---

१. वेति प्र० पा०।

काकतालीयन्यायेन तु क्षित्यादिक्षणानां प्राग्भावो न नियमवान् भवेत्। न चाऽङ्कुरमात्रं वीजक्षणस्य परस्तादवश्यम्भावि। क्षित्यदीनामपि तथाभावात्। तान्यपि खल्वङ्कुर इव वीजक्षणस्य परस्तादवश्यम्भावनियतानि। न च पौर्वापर्यनियमादन्यः कार्यकारणभावः। अपि च एकैककारणत्वाऽभावे न नियमेनाङ्कुरादिसहभुवो भूम्यादयो भवेयुः। तस्मा[1]दनेकस्मान्नैकम्? यदाह न किंचिदेकमेकस्मा[']दिति। नाप्येकस्मादनेकम्, अनेकक्षितिवीजतेजोऽनिलसलिलाऽनन्तरभावनियमादङ्कुरादीनामनेकेषाम्। नाप्यनेकस्मादेकस्यैवाङ्कुरस्य जन्मेति साम्प्रतम्। अङ्कुराद्भिन्नानां भूम्यादीनां तेन सहैकहेतुकत्वाऽभावे तत्सहभावनियमाऽभावप्रसङ्गात्। तत्सहभावनियमस्य चाऽङ्कुरवत्तेषामप्यविशेषात्। तदनेकस्मादनेकोत्पत्तिः परिशिष्यते।

तत्रेदमालोचनीयम्। किं पूर्वक्षणा उत्तरेषां क्षणानां परस्परनिरपेक्षा एव जनका आहो स्वित्सापेक्षा? इति। ननूक्तमन्त्यक्षणप्राप्ताः परस्परनिरपेक्षाः कार्याणि जनयन्तीति तत्किमनभ्युपेतारोपितप्रतिषेधप्रपञ्चेन। तत्किमिदानीं समर्थवीजक्षणजनकोऽपि तज्जनने इति कृतं सहकारिभिः। ननूक्तं नैते प्रेक्षावन्तः किं तु स्वप्रत्ययाऽधीननियतसंनिधयो न व्यवधेरीशते इति। किमयं कृषीवलोऽपि न प्रेक्षावान् यः कुसूलादपनीय वीजमावपति भूमौ परिकर्मितायां क्षित्यादिसहभाविन एवाऽतिशयोत्पादपरम्परयाऽङ्कुरजननसामर्थ्यदर्शनात्। वीजस्य कुसूल[2]स्थस्य वत्सरशतेनापि तददर्शनात्। तत्रावपतीति चेत्। अथ किमयं न स्वसंतानमात्रप्रभवसमर्थो वीजक्षणः? तथा चेत् कथं संतानान्तरं सहकारि नापेक्षेत कार्यकरणे? नन्वपेक्षत एव चैष स्वोत्पादे न स्वकार्ये तत्र चाऽस्याऽनपेक्षत्वमुच्यते न तु स्वोत्पत्तौ। ननूत्पत्तावप्यस्य स्वसंतानवर्ती जागर्ति पूर्व एव निरपेक्षः क्षणः। एवं तस्य पूर्वः पूर्वः स्वसंततिपतित एवाऽनपेक्षो जागर्ति जनने इति कुसूलनिहितवीजे एव स्यात्कृती कृषीवलः, कृ[ष्य]मस्य प्रेक्षावतः कृषिकर्मणला दुःखाकरेणेति।

यदि मन्येत द्विविधमिह कार्यम्। एकं सहकारिभिराहिताऽतिशयविशेषमपरम्पराप्रसवधर्मकं द्वितीयं तु सहकार्यतिशयनिरपेक्षजननम्। तत्राऽङ्कुरे आहिताऽतिशयविशेषं पराऽपेक्षजन्म। आद्योऽतिशयस्तु सहकारिकृताऽतिशयपरम्परानिरपेक्षोत्पादः। न चैतदुभयविधमपि कार्यं वीजस्य

---

१. तस्मादनेकस्मादेकम् प्र० पा०। तस्मादेकम् २ पु० पा०।

२. कुसूलस्थाव प्र० पा०।

संतानमात्रादुत्पत्तुमर्हतीनि क्षित्यादिसंतानान्तरापेक्षैव स्वसंतानवर्ति[1]त्वात्कादाचित्कं कार्यं करोतीति कल्पते कृषिकर्म। संतानान्तराणि तु कादाचित्कार्योत्पत्तौ ये सहकारिप्रत्ययाः त एव यथाऽङ्कुरोत्पत्तौ सहकारिणो वीजस्य सामर्थ्यप्रवोधहेतवः कदाचित्त्वेषां क्षित्यादीनां ये मेलनहेतवस्त एव सामर्थ्याऽववोधहेतवो भवन्ति तथा वीजानामाद्याऽतिशयोत्पादने सामर्थ्यप्रवोधहेतव उपसर्पणप्रत्ययाः। सर्वथा संतानान्तरैरनाहिनाऽतिशयसामर्थ्यं न वीजं कार्यविशेषं कादाचित्कं करोति। सामर्थ्यप्रवोधहेतवश्च द्वये सहकारिप्रत्यया उपसर्पणप्रत्ययाश्चेति।

तदनुपपन्नम्। तथा हि। भवतु द्विविधं कार्यम्, अस्तु च तत् कादाचित्कत्वात्संतानान्तराऽपेक्षम्। अपेक्षाऽर्थस्तु वक्तव्यः। कारणस्य स्वसामर्थ्यप्रवोध इति चेत्। ननु सामर्थ्यतत्प्रवोधयोः समर्थभावतत्प्राकट्याऽव्यतिरेकात् समर्थप्रत्ययोत्पाद इत्युक्तं स्यात्। तथा च स्वोत्पादे अपेक्षेत कारणं सहकारिप्रत्ययान्[2]। सत्यम्। नाऽभ्युपगम एव दोषत्वेन चोद्यते। अथाऽयमङ्कुरसमर्थो वा क्षण आद्याऽतिशयो वा किं निरपेक्षेण स्वसंतानमात्रजन्मना पूर्ववीजक्षणेन जन्यते निरपेक्षेण न पुनः स्वसंतानमात्रजन्मना। तस्यापि पूर्वस्मादेव पुञ्जादुत्पत्तेः। ननु समानकुसूलजन्मसु वहुषु वीजसंतानेषु कस्मात्किंचिदेव वीजं परम्परयाऽङ्कुरजननाऽनुगुणमुपजनयति वीजक्षणाम्, नाऽन्ये वीजक्षणा भिन्नसंताने पतिताः। न खलु उपसर्पणप्रत्ययात्प्राक्तेषां समानाऽसमानसंतानवर्त्तिनां कश्चित्परस्पराऽतिशयो वीजक्षणानाम्। अथोपसर्पणप्रत्ययात्प्राक् न तत्संतानवर्त्तिनो जनयन्ति परम्परयाप्यङ्कुरजननाऽनुगुणं वीजक्षणम्। वीजमात्रजननात्तु तेषां कस्यचिद् वीजक्षणस्योपसर्पणप्रत्ययसहभुव आद्यातिशयोत्पादः। हन्त तर्हि तदभावे सत्युत्पन्नोऽपि जनयेदेव। न चाऽस्योपसर्पणप्रत्ययेन सहभावनियमः। तत्सन्तानानां कुसूलवर्तिनां वीजक्षणानां तेन सह समानयोगक्षेमाणामप्युपसर्पणप्रत्ययसहभावाऽभावात्। क्षणस्य चैकस्य क्षणान्तरेणैकेन कार्यकारणभावनिश्चयाऽयोगात्सामान्यविषयत्वादन्वयव्यतिरेकयोस्तत्रैवोपपत्तेः। न खलु कारणभेदेन। तथा च केवलानां व्यभिचारसम्भवादाद्याऽतिशयोत्पादमङ्कुरोत्पादं वा प्रति क्षित्यादीनां परस्पराऽपेक्षाणामेवोत्पादकत्वमकामेनाप्यङ्गीकरणीयम्।

अपि चाऽन्त्यक्षणप्राप्तं वीजमनपेक्षमङ्कुराऽवनिपवनपाथस्तेजांसि जनयेत्। किं येनैव रूपेणाङ्कुरं जनयति तेनैव तदितराण्यपि किं वा रूपान्तरेण? न तावत्तेनैव। क्षित्यादीनामप्यङ्कुरस्वाभाव्यापत्तेः। न खलु कारणा-

---

१. वर्ती २ पु० पा०। २. सहकारिप्रत्यात प्र० पा०।

ऽभेदे भेदवत्कार्यं भवितुमर्हति । कार्यभेदस्याऽऽकस्मिकत्वप्रसङ्गात् । यदाह— 'अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धकर्माऽध्यासः कारणभेदश्चे' ति । नापि सामग्रीभेदः । तस्या अप्येकत्वात् । अन्यथा सहभावे नियमाऽभावात् । रूपान्तरेण तदितरेषां जनकम् । तथा हि । बीजमङ्कुरादि जनयदुपादानं तद्वि-क्रियया तदुपपत्तेः । तदितरेषु पुनरस्य सहकारिप्रत्ययता । तेषां तु पूर्वे पावनादयो यथास्वमुपादानानि, तद्विक्रियया तदुत्पादादिति चेत् । ननु सहका-रितोपादानतेति किमेकं तत्त्वं नाना वा ? एकं चेत्कथं रूपान्तरेण जनकम् ? नानात्वेऽप्यनयोर्बीजाद्भेदोऽभेदो वा ? भेदे कथं बीजस्य जनकत्वम् ? ताभ्या-मेवाऽङ्कुरादीनामुत्पत्तेः[1] । अभेदे वा कथं बीजस्य नानात्वं ? भिन्नता-दात्म्यात् । एतयोर्वैक्यमेकतादात्म्यात् ।

यद्युच्येत क्षित्यादौ जनयितव्ये तदुपादानभूतमेव क्षित्यादिबीजस्य रूपान्तरमिति । न तर्हि बीजं तदनपेक्षं क्षित्यादीनां जनकम् । तदनपेक्षत्वे तेषामङ्कुराद्भेदाऽनुपपत्तेः । न चाऽनुपकारकाण्यपेक्ष्यन्त इति त्वयैवोक्तम् । न च क्षणिकस्योपकारसंभवोऽन्यत्र जननात् । तस्याभेद्यत्वात् । तथा चाऽर्थ-क्रियाकारिताया एकाऽनेकत्वसाऽपेक्षत्वव्याप्तत्वात् । तृतीयप्रकारविरहादन-योरन्यतरनिषेधस्याऽन्यतरविधाननान्तरीयकत्वात् क्षणिकत्वे च तद्व्यापक-योरेकाऽनेकत्वप्रकारयोरभावादुक्तेन क्रमेण सत्त्वं न निवृत्तमित्यसाधारणा-ऽनैकान्तिकं गन्धवत्त्ववदिति ।

यदि मन्येत अनुपकारका अपि भवन्ति सहकारिणोऽपेक्षणीयाश्च कार्येणाऽनुविहितभावाऽभावत्वात्सहकार्यकरणाच्च । नन्वनेन क्रमेणाऽक्षणिको-ऽपि भावोऽनुपकारकानपि सहकारिणः क्रमवतः कार्येणाऽनुकृताऽन्वयव्यति-रेकानपेक्षिष्यते करिष्यते च क्रमवत्सहकारिसमवधानवशात्क्रमेण कार्याणीति व्यापकाऽनुपलब्धेरसिद्धेः संदिग्धव्यतिरेकमनैकान्तिकं सत्त्वं क्षणिकत्वसिद्धा-विति । नन्वयमक्षणिकः स्वरूपेण कार्यं जनयति । तच्च स्वरूपं तृतीयादिष्विव क्षणेषु द्वितीयेऽपि क्षणे सदिति तदाऽपि जनयेत् । अकुर्वन्वा तृतीयादिष्वपि न कुर्वीत स्थिरस्य तादवस्थ्यात् । अतादवस्थ्ये वा तदेवास्य क्षणिकत्व-मिति ।

अत्रोच्यते । सत्यं स्वरूपेण कार्यं जनयति, न तु तेनैव, सहकारिसहि-तस्य तस्य जनकत्वात् । क्रमवत्स्वप्रत्ययाऽपेक्षिणस्तत्तत्सहकारिसमवधानस्य द्वितीये क्षणे भावात् स्वरूपवत् सहकारिसमवधानमप्यात्मनोऽन्वयव्यतिरेका-

---

१ अङ्कुरत्वापत्तेः । २ पु. पा ।

वनुकारयति तत्कार्योत्पादने। न चैतावता सहकारिसमवधानादेवोत्पत्तिमतः कार्यसिद्धेः कृतमेतेषां स्वरूपेणेति साम्प्रतम्। तत्सहितादेव ततस्तदुत्पत्तिदर्शनाद्रूपे सत्यप्यनुत्पादात्। समवधाने तु उत्पादादेव कार्यस्य तदेव हेतुः न पुना रूपमपीति चेत्। नन्वेवमहेतुत्वे समानेऽपि बीजे रूपस्य रासभादिभिः सह कस्माद्वीजरूपे सत्येवाङ्कुरोत्पादो न रासभादिषु? सत्स्वेव वीजादिस्वरूपसमवधानस्यैव हेतुत्वादिति चेत्? तद्धेतुत्वे कथं तन्निवेशि स्वरूपमपि न हेतुः? अहेतुत्वे वा कथं न रासभादितुल्यता? न चाऽवर्जनीयतया रूपनिवेशः। समवधानमात्रस्य तदन्तरेणापि भावात्। विशेषस्तु रूपमेव। तस्माद्यथोभयाऽधीननिरूपणा व्याप्तिर्व्यापकस्य व्याप्ये भाव एव, नाभाव इति व्याप्यस्य तु व्यापक एव भावो, नाऽन्यत्रेति निरूप्यते तथा कार्यकारणभाव उभयाधीननिरूपणोऽपि कारणस्य कार्यात्प्रागभाव एव नाभाव इति कार्यस्य कारणे सत्येव नाऽसति भाव इति अनुभवाऽनुसारान्निश्चीयते। तथैव लौकिकपरीक्षकाणां कार्यकारणभावाऽवगतेः। न च कारणतैव सत्तास्वरूपं नीलादेरनुभवाऽवसितम्। तद्धि तेनैव स्वरूपेण स्वभावव्यवच्छिन्नं तासु तास्वर्थक्रियासूपयुज्यते, न पुनस्तत्कारितैवास्य रूपम्। मा भूदपर्यायेणाऽनेकार्थक्रियाकारणे रूपभेदः, मा च भूदुपाध्यपेक्षमस्यापि निरूपणं कार्यत्वस्यैव सत्त्वस्य शुद्धस्यैव निरूप्यमाणत्वात् कारणत्वे तु सत्त्वे यथा कार्यत्वं भावस्वभावोऽपि वस्तुतः कारणाधीननिरूपणं तथा कारणत्वमपि स्वसम्बन्धिकार्यमन्तरेणाऽशक्यनिरूपणमिति सत्त्वं शुद्धं न निरूप्येत। ततश्चोपाध्यपेक्षः शुद्धो वा नाशे कार्यत्वसत्त्ववदिति व्याहन्येत। तथा च यद्यस्ति सर्वज्ञः तथाऽपि सिद्धं सद्रूप एव भावस्तद्विज्ञानालम्वनप्रत्ययत्वमनुभविष्यति। अथ नास्ति, तथाऽपि स्वस्वहेतुतो लब्धस्वरूप एवापाततोऽकिञ्चित्करः समर्थोऽपि तत्तत्सहकारिसंनिधेस्तासु तास्वर्थक्रियासूपयोक्ष्यते। न च प्रथमतः कार्याऽनुपलब्धेरसामर्थ्यं, तथा सति रासभादेरपि क्षित्यादिसमवधानादङ्कुराद्युत्पत्तिप्रसङ्ग इत्युक्तम्। ननु जनकत्वमजनकत्वं च विरुद्धौ धर्मौ कथमेकत्र समाविशतः? तथैकत्रैव वीजेऽङ्कुरजनकत्वं तदजनकत्वलक्षणं च क्षित्यादिजनकत्वं कस्मान्न विरुद्धे? विरोधिनी चेत्कथमभेदः? भेदश्चेन्नैकं जगति किंचिदिति नाऽनेकमपि स्यादिति सुनिरूपितमत्रभवता भावानां तत्त्वम्। सकृदुपलभ्यमाने कार्यभेदेऽपि वीजरूपस्य जनकस्याऽभेदावगतेः प्रत्यक्षेणाऽभेद इति चेन्न। इहापि समानत्वात्। न खल्वत्रापि क्रमवत्कार्यभेदेऽपि वीजरूपमन्यदन्यदपेक्ष्यते। न च नञः प्रयोगाऽप्रयोगमात्राभ्यां विरोधाऽवगतिः। अतिप्रसङ्गात्। न च वीजस्यापि यदैव जनकत्वं तदैवाऽजनकत्वम्। न च जनकत्वमस्य स्वभावोऽपि तु वीजं जनकत्वं न

अपि च मनोवैगुण्ये चक्षुराद्यभावे च रूपाद्यवेदनादुभयवेद्यताऽवसीयते। केवलमनोवेद्यता तु कुतः ? द्वितीयक्षणोपलब्धेरिति चेत्। न। तत्र चक्षुरा-

तदितरप्रत्ययसमवधानं वा सामर्थ्यं वा धर्मभेदः। समवधानं चोत्सर्पणप्रत्यया-ऽधीनमस्य। न च न धर्म्मधर्मिणोरभेदः। तस्य ततोऽन्यत्वात्। अन्यत्वेऽपि च तदाश्रितत्वात्तस्योलब्धेः तेन च सहकार्यकरणात्तत्सम्बन्धः। तत्सिद्ध-मक्षणिकस्यापि क्रमाऽक्रमाभ्यामर्थक्रियाकारितोपपत्तेः सन्दिग्धव्यतिरेकित्वा-दनैकान्तिकं सत्त्वमसाधनाङ्गं क्षणभंगुरत्वे भावानामिति।

यच्च विकल्पितं, स्वभावतो भावा विनश्वरा अविनश्वरा वा जायन्त इति, तत्रोच्यते। न वयं विनश्वरत्वमविनश्वरत्वं वा जानीम, किन्तु सन्तः स्वहेतुभ्यो जायन्ते, ध्वंसन्ते च हेत्वन्तरेभ्यः स्वप्रत्ययाऽधीनसंनिधानेभ्य इति। ध्वंसश्च ध्वंस्यमानाऽभिन्नो हेतुभेदात्स्वभावभेदाच्च। उपपादितश्च स्वभाव-भेदो नियोगपरीक्षायाम्। नन्वस्मिन्नुत्पन्नेऽपि भिन्नमूर्तौ किमायातं भावस्य? न किञ्चिदायातम्। अस्त्ययमायुष्मान् भावः। अस्तु स्वकारणाधीनजन्मना, तदभावेन तत्स्वरूपविरहलक्षणेन स्वलक्षणशालिता स्वाऽनुरूपं व्यवहारं प्रवर्त्तयता निरस्तसमस्तार्थक्रियाः किं नच्छिन्नम्? न च ध्रुवभाविता विनाशस्य हेत्वन्तरानपेक्षतामावहति। असिद्धत्वादनैकान्तिकत्वाच्च। इदं हि भवान्निरूपयतु, किं घटसन्तानात्संविभागा कपालसंततिर्ध्रुवभाविनी न वा? न चेद्विनाशोऽपि घटस्याऽध्रुवभावी। न खलु संविभागक्षणोत्पादमन्तरेण घटविनाशमीक्षामहेऽपिहितचक्षुषः। तथा चाऽसिद्धा ध्रुवभाविता विनाशस्य। अथ ध्रुवभाविनी, तस्यामेव विभागसंततौ ध्रुवभाविन्यामपि मुद्गरापेक्षि-ण्यामनैकान्तिकं ध्रुवभावित्वं नाऽनपेक्षत्वेन व्याप्तमिति हेत्वन्तराऽपेक्षत्वं निषेद्धुमर्हति। तस्मात् क्षणिकत्वसाधनाऽनुभानप्रतिक्षेपादबाधितं प्रत्यभिज्ञानं स्थापयति भवानिति सिद्धम्।

तदेवं क्षणिकत्वप्रतिक्षेपान्नेन्द्रियजविज्ञानसमयभावी तद्विषयजन्मा क्षणोऽस्ति यो मनोविज्ञानगोचरः स्यादित्युक्तम्। अस्तु वा, तथाप्ययमपि चाक्षुषो, न तु मनोमात्रगोचरः। उभयभावाऽनुविधानात्तद्विज्ञानभावाऽभावयोरि-त्याह—अपि चाऽन्यविषयव्यावृत्तमनसां मनोवैगुण्येऽप्रणिहितमनसामन्धादीनां चक्षुराद्यभावे च रूपाद्यवेदनात् इतरथा च वेदनात् उभयवेद्यताऽनुमीयते। केवलमनोवेद्यता कुतः? शङ्कते—प्रथमे एव क्षणे इन्द्रियसामर्थ्योपक्षयात् द्वितीयक्षणोपलब्धेः केवलमनोवेद्यताऽनुमीयते इति चेत्? निराकरोति—न। कुतः? तादृशतज्जातीयक्षणावधृतसामर्थ्यानां चक्षुरादीनां सामर्थ्यपरिक्षये हेत्वभावात् न चैकस्मिन्नेव क्षणे सामर्थ्यमेतेषां येन क्षणान्तरे. तत्र स्यादि-

दीनां सामर्थ्यपरिक्षये हेत्वभावात् । तज्ज्ञानधारावाहिकत्वदर्शनाच्च । स्मरणे तु प्रतीतमेव पारतन्त्र्यमनुमानादिषु लिङ्गाद्यभावे प्रत्ययात् पारतन्त्र्यमिति न क्व[1] चिदप्यनान्तरे मनःसाक्षात्स्वतन्त्रं प्रवर्तत इति आन्तर एव साक्षाद्विषयस्तत्रैव साक्षाद् वृत्त्या प्रकर्षमनुभवेत् नाऽविषये ।

त्याह—तज्ज्ञानधारावाहिकत्वदर्शनाच्च । ननु स्मरणे केवलमेवं मनः प्रवर्तते, अन्धादीनामपि रूपादिस्मरणोपलब्धेरित्यत आह—स्मरणे तु प्रतीतमेव पारतन्त्र्यं मनसः । प्रमाणान्तराऽधिगतगोचरत्वात् । प्रमाणान्तरजन्माऽनुभवाऽऽहितभावनासहितं हि मनः स्मरणे हेतुः, न निरपेक्षमित्यर्थः । न चाऽनुमानादिज्ञानेषु स्वतन्त्रमित्याह—अनुमानादिषु लिङ्गाद्यभावे प्रत्ययात्पारतन्त्र्यं मनसः प्रतीतमिति । तस्मान्न क्वचिदनान्तरे मनः साक्षात्स्वतन्त्रं प्रवर्त्तत इत्यान्तर एव सुखादिरस्य साक्षादव्यवधानेन संयुक्तसमवायलक्षणेन संनिकर्षेण स्वतन्त्रस्य विषयो न तु वाह्यम् । तेन साक्षाच्चक्षुरादिवदसंवन्धादस्वतन्त्रत्वाच्च । तेन तन्मनस्तत्रैव साक्षाद्वृत्त्या प्रकर्षमनुभवेद् न तदविषये वाह्ये । तत्सिद्धमेतत् विवादाध्यासितानि चक्षुरादीनि नाऽतीताऽनागतविषयविज्ञानजनकानि विषयसहकारिणां तत्कार्यजनकत्वाद् यद्यत्सहकारि यत्कार्यजनकं तत्तदभावे न कार्यं जनयति यथा वीजमङ्कुरजनकक्षित्यादिसहकारिक्षित्यादावतीतेऽनागते वा नाऽङ्कुराय कल्पते । न चाऽर्थसहकारित्वमिन्द्रियाणामसिद्धं, विज्ञानजनने तदसहकारित्वेऽस्मदादीनामप्यतीताऽनागतार्थप्रत्यक्षत्वप्रसङ्गात् । सिद्धौषधमन्त्रतपः समाधीनां चक्षुराद्यतिरोधायकत्वेऽपि न स्वविषयाऽतिलङ्घनमित्युक्तम् । न च संदिग्धव्यतिरेकिता । तथा हि । सहकारित्वमपेक्षणीयतया व्याप्तं तदभावे तु कार्यजनने [2]अपेक्षणीयत्वविरुद्धमनपेक्षणीयत्वं व्यापकविरुद्धोपलब्ध्या सहकारितामपि निवर्त्तयतीति प्रतिवन्धसद्धिः । एवं विवादाऽऽस्पदं मनो न चक्षुरादिनिरपेक्षं वाह्ये प्रवर्त्तते तत्तन्त्रप्रवृत्तित्वाद्यद् यत्तन्त्रप्रवृत्ति न तत्तन्निरपेक्षं तत्र प्रवर्त्तते यथाऽऽलोकापेक्षं चक्षू रूपे न संतमसे इति विरुद्धोपलब्धिः । न च वाह्ये न चक्षुरादितन्त्रं मन इति साम्प्रतम् । अन्धवधिराद्यभावप्रसङ्गात् इति विपञ्चितम् । ननु मा भूदिन्द्रियजं मानसं च प्रत्यक्षं सर्वविषयं, भावनामयं तु भविष्यति । तथा हि ।- श्रुतमयेन विज्ञानेन समस्तवस्तुविषयनैरात्म्यादि गृहीत्वा युक्तिमयेन च भूततामस्य

१. क्वचिदप्यन्तरे । प्र० पा० ।

२. अपेक्षणीयत्वंविरुद्ध । प्र० पा० ।

व्यवस्थाप्याऽसकृच्चेतोनिवेशनरूपभावनाप्रकर्षपर्यन्त-जन्मप्रत्यक्षं विज्ञान[1]-मनवयवेनाऽऽत्मादिरूपविश्वालम्बनं करतलाऽरविन्दविषयमिवाऽतिविशदं भावयिष्यति तथागतः । न चाऽयमीदृशः प्रत्ययो न सम्भवति भावना-प्रकर्षात् । तथा हि । भावनाऽभावाद्वा तत्प्रकर्षाऽभावाद्वा तत्सामर्थ्याऽभावाद्वा न भवेद् ।°न भावनाऽ[2]भावात् सर्वधर्मनैरात्म्यभावनाऽसम्भवः । स खल्वेवं न भवेद् यदि जगति दुःखं नाम न स्यात्, सद्वा न जिहासितं स्यात्, जिहासितं वा न शक्यहानम्, अशक्यहानता च तन्नित्यत्वाद्वा, तदुपाया-ऽपरिज्ञानाद्वा, उपायाऽपरिज्ञानेऽपि च शक्यहानत्वेऽपि च नैरात्म्यभावनाया अनुपायत्वाद्वा, लघुतरोपायान्तरसम्भावाद्वा । न तावत् दुःखं नाम नास्ति जगति, परिणामतापसंस्कारैः खल्वनवयवेन पञ्चापि स्कन्धा भवन्ति संसारिणाम् । न चैते स्वस्य परेषां वा नाऽपनिनीषिताः । श्रावकबोधिप्रति-नियतेन सा नैसर्गिककरुणापराधीनचेतसा वा पुरुषधौरेयकेण परदुःखदुःखिना प्रतिकूलवेदनीयत्वात् । नाप्यशक्यहानता । न हि नित्यो नाम भावः संभवी, तस्य समस्तक्रियाविरहिणो व्योमोत्पलायमानत्वात् । नाप्युपायाऽपरिज्ञानम् । तथा हि । दुःखस्य समुत्पादका दोषाः रागद्वेषादयो मदमानादयश्च ते चोत्पादका अपि तदवयवान्निवर्तमानास्तदपि निवर्त्तयन्ति, यथा कफोद्भवो ज्वरः कफनिवृत्त्या निवर्त्तते । दोषाश्च नित्यात्मादिदर्शनजन्मानः तदवय-वास्तदविभागवर्त्तिनस्तदभावे न भवन्ति । तदभावहेतुर्न तत्प्रतिपक्षसाक्षा-त्कारादन्यः । तस्यैव तद्विरोधित्वात् । तथा हि । यत्र यद्विरुद्धसमवधानं तत्राऽवश्यं तदितरनिवृत्तिः । यथा विरुद्धवह्निसंनिधाने शीतनिवृत्तिः । संभवति च चित्ते स्थिराऽऽत्मदर्शनविरुद्धसर्वधर्मनैरात्म्यस्वात्मीभाव इति स्व-भावविरुद्धोपलब्धिः । एवं च तद्धेतुरागादीनामप्यत्यन्तनिवृत्तिः । तथा हि । ये संभवत्स्वहेतुविरुद्धाऽत्यन्तविवृद्धयः ते संभवदत्यन्तसमुच्छेदाः यथेन्द्रलुप्त-नितान्तविवृद्धयः केशाः । संभवत्स्वहेतुविरुद्धात्यन्तविवृद्धयश्च रागादय इति स्वभावहेतुः । सर्वधर्म्मनैरात्म्यं च तत्प्रतिपक्षस्तत्साक्षात्कारश्च न भावनाप्रकर्षादन्यतः । न चाऽसौ भावनामन्तरेणेति । न च सर्वधर्म्मनैरात्म्य-विज्ञानं प्रति च समर्थो **भावनाप्रकर्षः** ।

तथा हि । यन्मनोविज्ञानं सम्भवद्भावनाप्रकर्षं तद्भावनाऽऽधेयज्ञेयाऽऽ-कारवैशद्यं यथाकामार्त्ताद्यवस्थासु मनोविज्ञानं कामिनीवस्त्वाद्यालम्बनं

---

१. **विज्ञानमनवयवेन । प्र० पा० ।**

२. **न भावनाऽभावात्... न भवेदित्यन्तः पाठः नास्ति ।**

भावनाप्रकर्षऽऽधेयविशदभावम् । सम्भवद्भावनाप्रकर्षश्च नैरात्म्यविकल्प इति स्वभावहेतुः, भावनाप्रकर्षमात्रनिमित्तत्वात् । प्रतिभासवैशद्यस्य यस्य भावनाप्रकर्षस्तस्य विशदप्रतिभासत्वं नियतसंविधानमिति सम्भवद्भावना-प्रकर्षमात्रानुबन्धिनो विशदप्रतिभासतेति सत्यपि भावनाप्रकर्षसम्भवे यदि प्रतिभासवैशद्यं नोत्पद्येत निमित्तान्तरसापेक्षं स्यात् । निरपेक्षतया च व्याप्तः प्रकर्षो दृष्टः, ततो व्यापकविरुद्धोपलब्ध्या विपक्षाद् व्यावर्तमानो भावनाप्रकर्षो वैशद्येन व्याप्यत इति न संदिग्धव्यतिरेकः । नाप्यसिद्धः । कारुण्येन दुःखभयाद्वा भावनाप्रकर्षप्रारम्भसम्भवात् । न च लङ्घनोदकताप-वद्व्यवच्छिन्नोत्कर्षता सर्वधर्म्मनैरात्म्ये चेतसो येन क्वचिन्न विवादः सम्भवेत् । यतो यः स्थिराऽऽश्रयो धर्मो यत्र यथोत्पन्नो यथाहितस्य भागस्य प्रवृत्तये न पुनर्यत्नमपेक्षते सोऽत्यन्तं निष्ठां तत्र गच्छति । तद्यथा कल-धौतस्य पुटपाकप्रवन्धाऽऽहिता विशुद्धिः रक्तसारताम् । स्थिराश्रयश्च सर्वधर्म-नैरात्म्यबोधे उत्पन्ने विशेषे पुनः प्रयत्नाऽनपेक्षः सम्भवदत्यन्ताऽभ्यासः पुंसामिति स्वभावहेतुः स्थिराश्रयत्वं परलोकसिद्धेः । अप्रधानमपि भावाद्भिन्न-मभिन्नं वा ? तत्राऽभिन्नोपकाराऽभावरूपे सत्यप्यलब्धजन्मनः सत्यप्यस्मिन्न-नुपलब्धेरुत्पत्तिमत एवाऽपकरात् कार्यनिष्पत्तेरशक्ताद्भावः स्यात् । न चोपकारिणः कार्यजननमिति साम्प्रतम् । उपकारस्योपकारान्तरजनने ऽनवस्थापातात् । तत एव कार्यस्योत्पत्तेर्भावस्याऽतत्कारित्वप्रसङ्ग इत्युक्तम् । अभिन्नोपकाराऽऽधाने वा भाव एवाधेयः । न च स प्राक्सिद्धः शक्य आधातुम् । अनुपकारित्वे वा सहकारिभावेन नापेक्षेरन्नित्युत्पन्नमात्रमेव बीजमङ्कुरादि जनयेत् । अनपेक्षस्य क्षेपाऽयोगात्तत्क्षेपे वा पश्चादपि न जनयेदविशेषात् । यदि मन्येताऽनुपकारका अपि भवन्ति सहकारिणो यस्मात्तैः सहभावः कार्यं करोतीति । न च नाऽपेक्ष्यन्ते, तैर्विना कार्यस्या-ऽनुपपत्तेरिति । तत्र स्वरूपेण चेत् कार्यस्य जनको भावः तस्मान्नैवाऽभाव-योरेकैकस्माद् व्यभिचारादुभयाऽधीनजन्मतेति साम्प्रतम् । हेतोरुक्तकार्यो-त्पत्तेरवश्यम्भावनियमेन व्यभिचाराऽभावात् । न च स्वकारणात् कति-पयकालकलाविलम्बेन कार्यजननस्वभावो भावो जात इति स्वभावादेव विलम्बकारीति साम्प्रतम् । विकल्पाऽसहत्वात् । किं कतिपयकालकला-विलम्बनकारितास्वभावो निवृत्तो न वा ? निवृत्तश्चेत् कथं भावो न निवृत्तः ? स्वभावनिवृत्तेः । अनिवृत्तौ बाधकमस्य स्वभावो निवृत्तरूप-विरुद्धधर्मसंसर्गात् । अतत्स्वभावत्वे वा न विलम्बत इति जन्मानन्तरमेव भावः कृतकृत्यः प्रसज्येत । अनिवृत्तौ कतिपयकालकलातिक्रमेऽपि न कार्यं जनयेत् । विलम्बकारिताया रूपस्य तादवस्थ्यात् । तदुक्तं 'न क्रमेणाऽर्थ-

क्रियाकारिता सम्भवति भावस्य नापि यौगपद्येन युज्यते यस्माद्यावत्कार्यं किमपि प्रथमे क्षणे तेनाऽक्षणिकत्वेनात्मना सम्पादितं तावत्सर्वं द्वितीयादिक्षणेषु सम्पादयेत् तावत्कार्यम् । क्षणिकस्य तु क्रमाऽक्रमाभ्यामर्थक्रिया कल्पत इति । विपक्षे क्षणिकत्वे व्यापकाभावात्ततो व्यावर्त्तमानं सत्त्वं क्षणिकत्वेन व्याप्यत इति प्रतिवन्धसिद्धिः ।

स्यादेतत् । क्षणिकोऽपि भावोऽर्थक्रियाजननस्वभावः । न चेदमत्रैव जननत्वाऽभावश्चेत् किमस्य सहकारिभिरित्युत्पन्नमात्रमेव वीजमङ्कुरं जनयेत् । ननूत्पन्नो वीजक्षणः समर्थो जनयत्येव, कुतः पुनस्तस्योत्पत्तिः पूर्वस्माद्वीजक्षणात् ? तर्हि तत्सन्तानपतितानां सर्वेषां वीजत्वाऽविशेषादङ्कुरजननसामर्थ्यमिति लब्धजन्ममात्रमेव वीजमङ्कुरं जनयेत् । मैवम् । पूर्वं क्षितिबीजपवनादिक्षणसमवधानोत्पन्नाऽतिशयवत्तदुत्तरोत्तरक्षणपरम्परालब्धजन्माऽन्योऽपि क्षणसमर्थः समर्थक्षित्यादिक्षणसहकृतोऽनपेक्ष एवाऽङ्कुरं जनयति । न चाऽन्यक्षित्यादिसहभुवस्तैस्तदनपेक्षितस्यापि तैर्विना कार्यकरणं, तदेकसामर्थ्याऽधीनस्य तदभावेऽभावात् । न चाऽसहकारिता क्षित्यादीनां सिद्धेति नोदकतापवद्व्यवस्थितोत्कर्षता । तत्राऽत्यन्ततापेन तदाश्रयाणमपामुपरतेरस्थिराश्रयत्वात् । नापि लङ्घनवद्व्यवस्थितोत्कर्षम् । यथाहितस्य भागस्योत्पत्तौ तत्र पुनर्यत्नापेक्षत्वात् । न हि तत्र पूर्वसिद्धाऽऽलम्वनमात्रा सती[1] लङ्घनान्तराय कल्पते, अपि त्वसौ विनष्टा । लङ्घनान्तरं तु पूर्वलङ्घनवद्वलप्रयत्नाभ्यां प्रवर्तते । सर्वधर्मनैरात्म्यप्रकाशनस्वभावस्तु चेतसः स्वरसवाहीति न पुनः प्रयत्नमपेक्षते । तस्य हि पूर्वभावनाऽऽहिताऽधिकाऽधिकोत्तरविशेषप्रतिलम्भेनाऽत्यन्तप्रकर्षोत्पत्तेराश्रयस्वभावभूतत्वात् । इह प्रकर्षविशेषणं लङ्घनं तु न देहस्वाभावः । सत्यप्याश्रये पुनर्यत्नापेक्षत्वात् । एवमुदकतापोऽपि नोदकस्वभावः । तद्विनाशत्वात् । भावनां वा पक्षीकृत्योच्यते । तथा हि । या याऽऽदरनैरन्तर्यदीर्घकालाऽऽसेविता भावना सा सर्वा करतलाऽमलकायमानाऽऽलम्वननिर्भासविज्ञानफला । तद्यथा कामातुरस्य कामिनीभावना विशेषणत्रयवती कामिनीविषयविज्ञानविशदाभताहेतुः । तथा च समस्तवस्तुनैरात्म्यभावनाविशेषणत्रयशालिनोति स्वभावहेतुः । मनोविज्ञानं हि विशदाभमियमीदृशी भावना स्वाऽन्वयव्यतिरेकावप्यनुकारयन्ती कारणान्तरनिरपेक्षा कामातुरादिषु दृष्टा । तद्यदि सत्यामप्यस्यां विशदाभत्वं समस्तवस्तुनैरात्म्यग्राहिणो विज्ञानस्य नोपजायेत, कारणान्तरसापेक्षत्वमस्याः प्रसज्येत । तथा च दृष्टं निरपेक्षत्वं भावनाया व्यापकं

१. लम्बनमात्मनश्च २ पु० पा० ।

भावनामयमपि विज्ञानं श्रुताऽनुमितविषयम् अकस्माद्भावनाऽयोगा-दागमाऽनुमानपरतन्त्रम् । पूर्वज्ञानभूतार्थत्वविपर्य्ययाऽनुविधानात् सापेक्षत्वाद-प्रमाणम् ।

व्याहन्येतेति विपक्षे व्यापकविरुद्धस्य सापेक्षत्वस्य दर्शनाद्धीवैशद्यजननाद् व्यापकविरुद्धोपलब्ध्या व्यावर्तमाना भावना वैशद्यजन्मनियताऽवशिष्यत इति भावनाविशेषाऽनुविधानात्स्फुटत्वोत्पादस्य न भावनामात्रानुबन्धितेति स्व-भावहेतुः, हेतोश्च समग्रस्य कार्योत्पादनसामर्थ्याऽनुमानम् । तथा च सत्यामेव तस्यां सामग्र्यामप्रतिबन्धायां नियमेन फलमुत्पद्यत इति न पाक्षिक-फलसम्भवविषयत्वं सामग्र्या निश्चीयत इति निश्चयान्नाऽनुमानत्वविरोधः । न चाऽसिद्धो हेतुः । सम्भवति हि भावना विशेषणत्रयवती सांसारिकदुःख-निमित्ताद् बिभ्यतां श्रावकबोधिप्रतिनियतानां निखिलदुःखनिमित्तशमनी कारुणिकानां च सकलानेव दुःखिन आत्मतयाऽभ्युपगच्छतां दानादिपार-मिताभ्यासतनूकृतान्तर्मलानामीदृग्भावनाप्रकर्षजन्मविज्ञानमभ्रान्तं च । प्रमाणसिद्धवस्तुविषयत्वात् । अविकल्पश्च विशदाभत्वात् । समस्तवस्तुविषयं च तन्नैरात्म्यसाक्षात्काररूपत्वात् । न च नैरात्म्यं नाम भावेभ्यो भिन्नं किं-चिदस्ति, यदप्रत्यक्षगोचरेष्वपि तेषु प्रत्यक्षगोचरं स्यात् । विकल्पारूढं च स्फुटं नाऽविकल्प्य विज्ञानं प्रतिभासि । तदेतद्भावनाधेयवैशद्यं सद्विशदभावात्म-नैव स्यात् । तथा च विश्वनैरात्म्यवैशद्यं विश्ववैशद्यमेवेति । यदिदं सार्वज्ञं तद्भूतार्थभावनाया एवाऽऽदरनैरन्तर्यदीर्घकालाऽऽसेवितायाः सर्वाऽऽकार-सकलवस्तुसाक्षात्कारहेतोः सम्भवादसिद्धो हेत्वभावो न फलाऽभावसिद्धा-वङ्गमित्याशङ्क्याह—भावनामयमपि विज्ञानं श्रुताऽनुमितविषयम् । कुतः ? अकस्माद्भावनाया अयोगात् । आगमाऽनुमानपरतन्त्रं तद्विषय एव साक्षाद्-वृत्त्या प्रकर्षमनुभवेद् न तदविषय इति पूर्वेण सम्बन्धः । न च तदपि प्रकर्षवत्प्रमाणमित्याह—पूर्वज्ञानभूतार्थत्वविपर्ययाऽनुविधानाच्च साऽपेक्षत्वा-दप्रमाणम् ।

एतदत्रार्थतत्त्वं विवक्षितमाचार्यस्य । सत्यं, श्रुताऽनुमानगोचरचारिणी भावना विशदाभविज्ञानहेतुरिति नाऽवजानीमहे, किं तु यद्विषये जातं तदेव विशदप्रतिपत्तिगोचरो न जातु रूपभावनाप्रकर्षो रसविषयविज्ञानवैशद्याय कल्पते । ननु न विषयान्तरवैशद्यहेतुभावं भावनायाः सङ्गिरामहे, किं तु श्रुताऽनुमानविषयवैशद्यहेतुतामेव । तद्विषयं च समस्तवस्तुनैरात्म्यमिति

तद्भावनाप्रकर्षः समस्तवस्तुनैरात्म्यं विशदयन् समस्तवस्तुविशदतामन्तरेण तदनुपपत्तेः समस्तवस्तुवैशद्यमावहती[1]-त्युक्तम् ।

सत्यमुक्तम् । अयुक्तं तु तत् । तथा हि । नाऽऽगमाऽनुमानगोचरत्वं निरात्मनां वस्तुभेदानां परमार्थसताम् । न हि ते एतेषामन्यनिवृत्तिमात्रावगाहिनी परमार्थसत्स्वलक्षणं गोचरयितुमर्हति । नापि तद्विषया भावना तदग्राह्यमपि स्वलक्षणं तदध्यवसेयतया तद्विषय इति · तद्योनिरपि भावना तद्विषयेति तत्प्रकर्षवैशद्यहेतुरिति चेत् । न । तदवसेयस्यापि परमार्थसत्त्वाऽभावात् । तथा हि । यदनुमानेन गृह्यते यच्चाऽवसीयते द्वे अप्यन्यनिवृत्ती न वस्तुनी । स्वलक्षणाऽवगाहित्वे अभिलापसंसर्गयोग्यप्रतिभासत्वाऽनुपपत्तेः ।

मा भूत्तयोः स्वलक्षणं विषयः । [2]तत्प्रभवभावनाप्रकर्षजन्मनस्तु विशदाभस्य[3]चेतसो भविष्यति कामिनीविकल्पप्रभवभावनाप्रकर्षादिव कामाऽऽतुरस्य कामिनीस्वलक्षणसाक्षात्कारः । करिकुम्भकठोरकुचकलशे हरिणशावलोल[4]लोचने चम्पकदलाऽवदातगात्रलते लावण्यसरसि निरन्तरलग्नललितदोःकन्दलीमूलमालिङ्गनमङ्गने प्रेयसितरे प्रयच्छ सञ्जीवय पतितोऽस्मि तव चरण[5]नलिनयोरिति वचनकायचेष्टयोरुपलब्धेः । अस्ति च विकल्पाऽविकल्पयोः कथंचित्समानविषयतेति नाऽतिप्रसङ्ग इति । सत्यम् । सम्भवत्यनुभवो न पुनरस्याऽर्थ प्रामाण्यसम्भवः । अतदुत्पत्तेः अतदात्मनस्तदव्यभिचारनियमाऽयोगादतादात्म्यं चाऽर्थस्य विज्ञानादतिरेकात् अनतिरेकेऽपि च विज्ञानानामन्योन्यस्य भेदतादात्म्यात् एकस्य विज्ञानस्येतरविज्ञानवेदनाऽनुपपत्तेः । विज्ञानस्वलक्षणैकत्वाऽभ्युपगमे तन्नित्यमेकमेवाऽद्वितीयं ब्रह्माऽभ्यसनीयमिति क्षणिकनैरात्म्याऽभ्यासाऽभ्युपगमो दत्तजलाञ्जलिः प्रसज्येत । तन्न तादात्म्यादस्याऽव्यभिचारः । नापि तत्कार्यत्वात् । भावनाप्रकर्षकार्यं खल्वेतन्न विषयकार्यम् ।

यद्युच्येत पारम्पर्येण तत्कार्यमनुमानवत् । यथा हि वह्निस्वलक्षणाद् धूमस्वलक्षणं ततो धूमाऽनुभवस्ततो दहन[6]विकल्पस्ततश्चाऽनुमानमुत्पन्नमिति पारम्पर्येण वह्निप्रतिबन्धात्प्रापकं च वह्नेर्दाहपाककारिणः, तथैतदप्यनुमानजनितभावनाप्रकर्षपर्यन्तजं पारम्पर्येणाऽर्थप्रभूततया तदव्यभिचारनियमान्न प्रमाणमिति चेत् । किमनुमानेन वह्निं व्यवस्थाप्य भावयतो यद्वह्निविषयं

---

१. आदधाति । २. पु० पा० ।
२. तत्प्रभावभवना । पु० पा० ।
३. विशदाभस्याऽचेतसो । पु० पा० ।
४. लोलोचने । पु० पा० ।
५. चरणननलिनयोः । पु० पा० ।
६. धूम । १ पु० पा० ।

विशदं विज्ञानं तत्प्रमाणमिति ? ओमिति ब्रुवाणस्य पर्वतनितम्वारोहणे सति इन्द्रियसंनिकर्षजन्मनो दहनविज्ञानस्य भावनाऽऽधेयविशदाभविज्ञानेन सह सम्वाद[1]नियमप्रसङ्गः । विसंवादश्च वहुलमुपलभ्यते । लक्षणयोगिनि च व्यभिचारसम्भवे तल्लक्षणमेव वाधितमिति विशदाभमपि प्रातिभमिति संशयाक्रान्तमप्रमाणम् । तद्भावनाया भूतार्थत्वं न तज्जन्मविशदविज्ञान-प्रामाण्ये हेतुर्व्यभिचारात् । एवं च प्रसर्प्पकस्येव सक्तुकर्करीप्राप्तिमूललाभ-मनोरथपरम्परानीतो द्रविणसम्भारसाक्षात्कारस्तथागतस्य निरात्मकसमस्त-वस्तुसाक्षात्कार इत्यापतितम् सर्वार्थवस्तुभावनापरिकर्मितचित्तसन्तानवर्त्ति ज्ञानं प्रत्यालम्वनप्रत्ययत्वमर्थस्य । तथा च तदुत्पत्तेस्तदव्यभिचारनियम इति चेत् । नार्थस्याऽऽलम्वनप्रत्ययत्वं विज्ञानं प्रतीन्द्रियाऽपेक्षत्वेन व्याप्तं, तच्चा-ऽस्माद्विरुद्धोपलब्ध्या व्यावर्तमानमालम्वनप्रत्ययतामप्यर्थस्य निवर्त्तयति । न खल्विन्धनविशेषो धूमहेतुरिति विनापि दहनं सहस्रेणापि संस्कारैर्धूममा-धत्ते । तदाधाने वा समस्तकार्यहेतुताऽनुमानोच्छेदप्रसङ्गः । भावनायाश्च भूतार्थाया अर्थाऽनपेक्षाया एव विशदविज्ञानजननसामर्थ्यमुपलब्धं कामातुरा-दिवर्त्तिन्या इति भूतार्थापि तन्निरपेक्षैव समर्थेति नाऽर्थस्यालम्वनप्रत्ययत्वं शक्याऽवगमम् । अपि चाऽऽलम्वनप्रत्यया अपि त एवाऽस्य क्षणा युज्यन्ते, ये तस्य पुरस्तात्तना अव्यवधानाः । तथा च त एवाऽस्य ग्राह्या न पुनः पूर्वतरास्तत्काला अनागताश्चेति न सर्वविषयता । अथ दृश्यमाना धातुत्रय-पर्यापन्नाः प्राणभृतो जन्मान्तरपरिवृत्तौ यत्राऽतीताऽनागतस्कन्धकदम्वको-पादानोपादेयात्मान इति तद्दर्शनं दृश्यमानतादात्म्येन तद्विशेषणतयाऽतीता-ऽनागतान्यपि गोचरयति । न चाऽस्मदादिदर्शनस्यापि तथा प्रसङ्गो, रागादिमलावृतत्वात् । तस्य हि भगवतो निर्मृष्टनिखिलक्लेशोपक्लेशमलं विज्ञानमना[2]वरणं परितः प्रद्योतमानं स्वालम्वनं प्रत्ययं सर्वाऽऽकारं गोचरयत्तस्य च साक्षात्परम्परया च कथंचित्सर्वेण सम्वन्धाद्देशकालविप्र-कीर्णवस्तुविशिष्टस्वभावतया तथैव गोचरयेत् । न च सर्वग्रहणमन्तरेणेति सर्वविषयमस्य विज्ञानमनावरणं सिद्धम् ।

तदनुपपन्नम् । विचाराऽसहत्वात् । तथा हि इयमालम्वनप्रत्ययस्य सर्वविशिष्टता स्वाभाविकी चेन्न तावत्सर्वस्मिन्नालम्वनप्रत्यये चैका भवति । एकस्याऽनेकवृत्तित्वाऽनुपपत्तेः । नाना चेदालम्वनप्रत्ययाश्च सर्वे चेति तत्त्वम् । तथा च न सम्वन्ध इति न तद्ग्रहणे सर्वग्रहणविकल्पारोपिततथात्वविल्पकं वस्तुविषयं सर्वत्र प्रतीयत इति सुभाषितम् । स्वालम्वनप्रत्ययमात्रगोचरमेवा-

१. सम्भवाद । पु० पा० ।    २. मनाचरणं । पु० पा० ।

ऽविकल्पकं समस्तवस्तुविशिष्टालम्बनाऽध्यवसायजननम्। तेनाऽध्यवसायाऽनुगतव्यापारमविकल्पकमपि समस्तवस्तुविषयं भवति। यथाऽऽह—'व्यवस्य[1]न्ति क्षणादेव सर्वाकारं महाधिय' इति चेत। अथ कतिपय[2]वस्त्वालम्बनस्याऽनुभवस्य कुतः स एष महिमा? यतः समस्तवस्त्ववसाय इति। रागाद्यावरणविगमादिति चेत्तर्हि यथावस्तु तानि पश्येत्, न पुनरस्मादपार्थत्वमेवेति। तदयुक्तम्। विकल्पनिर्माणकौशलमस्य युज्यते। तत्त्वाऽऽवरकता हि मलानां केशादीनां न पुनर्विकल्पनिर्माणप्रतिबन्धता। तस्माद्भावनाप्रकर्षमात्रजत्वादर्थाऽव्यभिचारनियमाऽभावाद्विशदाभमपि संशयाक्रान्तत्वादप्रमाणमप्रत्यक्षं चेति साम्प्रतम्।

यदपि सदर्थप्रकाशनं बुद्धेः स्वभावोऽसदर्थत्वं त्वागन्तुकमित्यसति बाधके सदर्थत्वमेवेति। तदयुक्तम्। अनुमितभावितवह्निविषयविशदाभविज्ञानादिप्रामाण्यप्रसङ्गात्। तद्विषयस्य क्वचिद्बाधदर्शनादप्रामाण्यमिहापि समानम्। अन्यत्राऽभिनिवेशात्। तदिह यदि विशदाभविज्ञानहेतुत्वं भावनाया विशेषणयोगेन साध्यते ततः सिद्धसाधनम्। भवतु तथागतस्तथाभूतविज्ञानवान्, न तत्त्वे तद्विज्ञानमस्य प्रत्यक्षमप्रमाणत्वात्। तथा चाऽपक्षधर्मतया हेतोरसिद्धता, प्रसिद्धधर्मिणोऽजिज्ञासितविशेषणतयाऽनुमेयत्वाऽभावात्। अथ प्रत्यक्षविज्ञानहेतुता भावनायाः परं प्रत्यक्षसिद्धा साध्यते, तथा सति साध्यविपर्ययव्याप्तेर्विरुद्धता हेतोः। विशेषणत्रयवत्या अपि भावनाया विशदाभभ्रान्तिविज्ञानजनकत्वात्। दृष्टान्तस्य च साध्यहीनत्वात्। यदा च भूतार्थभावनाजनितत्वेऽपि नाऽस्य प्रामाण्यमभूतार्थत्वात्तदा, यदुच्यते

'निरुपद्रवभूतार्थस्वभावस्य विपर्ययैः।
न बाधोऽयत्नवत्त्वेपि बुद्धेस्तत्पक्षपाततः' ॥ इति,

तदनुपपन्नम्। भूतार्थत्वे हि बुद्धेस्तत्प[3]क्षपातित्वेऽभूतार्थैः प्रतिपक्षैर्बाधो न भवेत्। अभूतार्था त्वियं स्वात्माऽभावमापन्नाप्यात्मीयदृष्टिरिव सम्भवद्बाधा। तस्मात्प्रतिपक्षविवृद्धिमात्रम्। न चाऽऽत्यन्तिकी विवृद्धिः सम्भवति। यथा समूलकाषं कषिता दोषा न पुनरुद्भविष्यन्ति अत एवाऽस्थिराश्रयत्वेऽप्यपुनर्यत्नापेक्षित्वेऽप्यस्य नाऽऽत्यन्तिकी निष्ठा सम्भवति। आत्मीयदृश इव विरोधिप्रत्ययसम्भवात्। तत्सम्भवश्चाऽभूतार्थत्वात्। तच्च न। श्रुता[4]नुमितविषयं तु प्रत्यक्षं न सम्भवत्येव। तयोः परोक्षरूपाऽवगाहित्वात्। प्रत्यक्षस्य च

१. व्यवस्यान्ति। पु० पा०।
२. कतिवय। पु० पा०।
३. पतिताऽभूतार्थैः। पु० पा०।
४. अनुमित। पु० पा०।

ननु न का[1]लतोऽपि नियमश्चक्षुरादीनाम् । अवर्तमानरजता[2]द्युपलब्धेः । न हि सा शुक्तिकाद्युपलब्धिः । अन्याकारसंविदोऽन्यविषयत्वाऽयोगात् अनाश्वासात् ।

तद्विपरीतार्थत्वात् तद्गतभूतार्थत्वाऽनुविधायित्वेन स्वविष[3]ये श्रुताऽनुमानज्ञानापेक्षतया प्रामाण्याऽनुपपत्तेश्च । तत्सिद्धमेतद्भूतार्थभावनाप्रकर्षपर्यन्तजं विज्ञानमप्रत्यक्षम्, अर्थे प्रमाणत्वात् यदप्रमाणं तदप्रत्यक्षमर्थे । यथा कामाऽऽतुरस्य कामिनीविज्ञानम् । अप्रमाणं च तत् । नितान्तविशदाभत्वे सति भावनाजन्यत्वात् । यन्नितान्तविशदाभत्वे सति भावनाप्रकर्षजं विज्ञानं तदप्रमाणं, यथाऽनुमितभावितवह्निविषयविशदाभविज्ञानमिति समानहेतुकत्वं समानरूपतया व्याप्तम् । यथाह 'तदतद्रूपिणो भावास्तदतद्रूपहेतुजा' इति । तदस्याः प्रामाण्यं निवर्तमानं तुल्यहेतुजत्वमपि निवर्तयति । न चैषा भूतार्थे भावनाप्रकर्षपर्यन्ताऽतीन्द्रियसंनिकृष्टाऽनुमितभावितवह्निवैशद्ये च निरात्मकसमस्तवस्तुवैशद्येऽपि च विशिष्यते । न च रागाद्यावरणविरहो वा विशेषः । न खल्वेते कम्बलादिवदावरका विज्ञानस्य, किं तु तदाक्षिप्तमना विविधविषयभेदतृष्णादिपरिप्लुतो न शक्नोति भावयितुमिति भावनाऽऽदरमात्रे एव तद्विरहोपयोगः । अस्ति चेहापि शिशिरतरसंभूतजडिममन्थरतरकायकाण्डस्याऽनुमितवह्निभावनाभियोग इति न हेतुभेद इति प्रतिबन्धसिद्धिः । न चैकपार्थिवाऽणुसमवायिकारणजन्मभिरभिन्नौष्ण्याऽपेक्षैकवह्निसंयोगाऽसमवायिकारणैर्गन्धरसरूपस्पर्शैर्नानाभावैर्व्यभिचारः । सामर्थ्यवैचित्र्यादेकत्वेऽपि पार्थिवस्य परमाणोः । तद्वैचित्र्यं च कार्यवैचित्र्योपलम्भात् । तच्च नित्यसमवेतं नित्यं कारणसामर्थ्यक्रमेण च पार्थिवाऽवयविनि कार्ये जायत इत्यवदातम् । परिशिष्टं ग्रन्थव्याख्यानसमये वक्ष्यामः । तदास्तां तावत् ।

सम्प्रति व्यवस्थापितोन्मूलनेन कश्चित्प्राभाकरगन्धी प्रत्यवतिष्ठते—ननु न कालतोऽपि नियमश्चक्षुरादीनाम् । कुतः ? इदं रजतमित्यवर्त्तमानरजताद्युपलब्धेः । नन्विदं रजतमिति पुरोवर्त्तिनीं शुक्तिमवलम्बमाना कथमसंनिहितदेशकालरजतोपलब्धि ? रित्यत आह—न हि सा शुक्तिकाद्युपलब्धिः । कस्मात् ? अन्याऽऽकारायाः संविदोऽन्यविषयत्वाऽयोगात् । तद्योगे विषयत्वस्याऽनियमात् । सर्वं विज्ञानं सर्वविषयमित्ययत्नसिद्धा सर्वज्ञता स्यादिति फलितं तथागतमनोरथेन । तस्माद्यदाकारविज्ञानं[4] स एवास्य विषय एषि-

---

१. कालतो । पु० पा० ।
२. द्यनुपलब्धेः । पु० पा० ।
३. श्रुतानुमित ।
४. यदाकारविषयं विज्ञानम् । २ पु० पा० ।

अधिगतस्वातन्त्र्यं च मनः स्वप्ने । न च स्वप्नज्ञानं स्मृतिः । अतद्रूपत्वात् । नैतत्सारम् । तथा हि—

अर्थाऽपेक्षा मुधा तुल्यमन्याकारप्रवेदनम् ।
देहिनो वर्तमानाभा स्वप्ने स्पष्टाऽपि हि स्मृतिः ।।

चक्षुरादयस्तावद्वर्तमानमेव शुक्तिकाशकलाद्यर्थं दर्शयन्ति, तदपेक्षणात् । अन्यथा वैफ[1]ल्यात् तत्सन्निधेः तदसन्निधावपि रजतवेदनप्राप्तेः ।

तव्यो नियमाय । रजताऽऽकारं चेदमिति तदेवास्य विषयो न पुनः शुक्तिः । अवेदनात् अनाश्वासाच्च । यदि ह्यन्याऽऽकारा संविदन्यविषया भवेत्तदा संविदः स्वार्थव्यभिचारात् सर्वत्रैवाऽनाश्वासप्रसङ्ग इति न प्रेक्षावान् क्वचित् कुतश्चिद्वा प्रवर्तेत निवर्तेत वा । तस्मादपि रजतविषयमेव । न चेदं रजतमिति सामानाधिकरण्यप्रथेयमपि त्वसामानाधिकरण्याऽग्रहो दोषवशात् । न च स्मृतिः । साक्षात्काराऽऽस्पदत्वात् । न च नास्ति । स्वसंवेदनसिद्धत्वात् । तदस्य कृत्स्नसामर्थ्यं चक्षुर्वा मनो वा कारणमकामेनाऽप्यभ्युपगन्तव्यम् । न च रजतं वर्त्तमानमित्यवर्तमानमपि चक्षुर्मनो वा गोचरयति । तथा च न कालतोऽपि नियमः ।

परतन्त्रं वहिर्मन इत्याक्षिपति—अधिगतस्वातन्त्र्यं च मनः स्वप्ने । तेनाऽन्यत्रापि वाह्ये स्वतन्त्रमेव । यद्युच्येत स्वप्नेऽपि पूर्वाऽनुभवभावनासहंकारि स्मृतिं जनयति मनः, तेनाऽस्वतन्त्रमेवेति, तत्राह—न च स्वप्नज्ञानं स्मृतिः । कस्मात् ? अतद्रूपत्वात् । अनुभूतविषयाऽसंप्रमोषो हि स्मृते रूपम् । असंप्रमोषश्चाऽनुभूततयाऽनुभाव्यस्याऽनुसन्धानम् । न चैवंविधं स्वप्नज्ञानं, तस्मान्न स्मृतिः । न च चाक्षुषं, चक्षुर्व्यापाराऽभावात् । तत्सिद्धमेतद्वाह्ये मनः स्वतन्त्रमिति ।

तदेतन्निराकरोति--नैतत्सारम् । तथा हि—

अर्थाऽपेक्षा मुधा तुल्यमन्याकारप्रवेदनम् ।।
दोषतो वर्त्तमानात्वं स्वप्ने स्पष्टा ऽपि हि स्मृतिः ।।

यत्तावदुक्तम् अनीताऽविषयं चक्षुरादीति, तत्राह—चक्षुरादयस्तावद्वर्त्तमानमेव शुक्तिकाशकलाद्यर्थं दर्शयन्ति । कुतः? तदपेक्षणात् । शुक्तिकाद्यपेक्षणात् । अन्यथा तदनपेक्षणे वैफल्यात्तत्संनिधेः शुक्तिसंनिधानस्य । कुतोऽस्य वैफल्यप्रसङ्ग ? इत्यत आह—शुक्तिकाऽनपेक्षणे तदसंनिधावपि रजतवेदनप्राप्तेः । अयमभिसंधिः । न तावच्चक्षुरादिवद्रजतविज्ञानं कारण-

१. वैकल्यात् । पु० पा० ।

**रजतताऽवभासनं यदि न शुक्तिविषयं वर्तमानाभासनमपि तर्हि नाऽवर्त्तमानगोचरम् ।**

तामात्रेणाऽपेक्षते शुक्तिशकलम् । चक्षुराद्यभाव इव तदभावेऽन्यत्र रजतसंनिधावपि रजतविज्ञानाऽभावप्रसङ्गात् । तस्माद्विषयतयैवाऽपेक्षते रजतविज्ञानं शुक्तिशकलमिति ।

यच्चोक्तमन्याऽऽकारासंवित्तिनाऽन्यविषयेति, तत्राह—रजतावभासनं यदि न शुक्तिविषयं वर्तमानाभासनमपि तर्हि नाऽवर्तमानगोचरम्[1] ।

अयमभिसन्धिः । अतीतरजतगोचरं चेदेतद्विज्ञानमतीततयैवाऽस्मिन् रजतं प्रपद्येत, तथा च तत्प्रेप्सवो न प्रवर्तेरन्, अतीतस्य प्राप्त्यभावात् । न खल्वतीतं तत्तयाऽवगम्य शब्दाद्वदान्यप्रेष्ठं युधिष्ठिरं क्षुत्क्षामात्माऽपि भिक्षुको याचितुं प्रवर्तते । अतीतस्यापि रजतस्य दोषतस्तत्राऽनवभासनाद्वर्तमानस्य च शुक्तिकेय[2]मिति तत्तया गृहीतस्य रजतसाधारणरूपवेदनात् । तद्भेदहेतुशुक्तिकात्वसामान्यविशेषाऽनवभासाच्च । समीहितसंनिहितरजतमतितुल्यताभेदाऽनध्यवसायसामर्थ्याऽस्यासात्[3] । ततश्च रजतमिदमिति सामानाधिकरण्यव्यपदेशः समीचीनं संनिहितरजतप्रत्ययतुल्यव्यवहारप्रवर्तनं च शुक्तिकेयमिति भेदधियः स्वविषयविरुद्धभेदाऽग्रहनिवारणेन पूर्वप्रत्ययप्रसञ्जितरजतोचितव्यवहारनिराकरणाद्बाधकताऽप्युपपन्नेति चेन्न । भेदाऽग्रहमात्रस्य तथाभूतव्यवहारप्रवर्तकत्वाऽनुपपत्तेः । सन्निहितरजताऽवभासो हि तद्व्यवहारहेतुर्न पुनरतथाऽनवभासः । तत्तुल्यतया सोऽपि तद्व्यवहाराय कल्पते । भेदाऽनवभासश्च तत्तुल्यतेति चेत् । यद्येवमवर्तमानाऽवभासनयाऽतीतरजताऽवभासविज्ञानतुल्यताऽप्यस्यास्तीति तत्तुल्यव्यवहारप्रवृत्तिरप्येतस्य स्यात् । तदयं रजतविज्ञानवान् पुरोवर्त्तिनि शुक्तिकाशकले प्रवर्त्तेत निवर्त्तेतेति तव विरुद्धं क्रियाद्वयमापन्नम् । पुरोवर्त्तिवस्त्ववभास एव रज विज्ञानादगृहीतभेदः समीचीनसंनिहितरजताऽवभाससदृशव्यवहारहेतुरिति नाऽयं प्रसङ्ग इति चेत् । अथ रजतं तदिदं तु शुक्लभास्वरमिति बुद्धेर्व्यवहारं कस्मान्न प्रवर्त्तयति ? यथैव हि **समीचीनसंनिहितरजतधीतुल्यतयाऽस्य** भेदाऽनध्यवसायात्तथा तद्रजतमिदं तु शुक्लभास्वरमितीत्येतत्तुल्यताऽप्यभेदानध्यवसायात् । न चाऽध्यवसाययोः कश्चिद्विशेषः, येनैक एव स्वोचितं

---

१. वर्तमानगोचरः—१ पु० पा० ।　२. न शुक्तिकेयम्—२ पु० पा० ।
३. सामर्थ्यात्—२ पु० पा० ।

साम्यं संपादयति नाऽपरोऽस्तीति। सोऽयमस्य तदवस्थ एव विरुद्धक्रियाद्वयस्य समावेशप्रसङ्गः। न च चेतनव्यवहारोपायतुल्यता ज्ञानोपायानां, येन ज्ञानहेतोरेव चरमवस्तुव्यवहार इत्युच्येत। अजातरूपतत्कार्यतत्संबन्धानामपि चक्षुरादीनां ज्ञानोपायत्वदर्शनात्। चेतनव्यवहारस्य तु विज्ञानजत्वनियमेन पर्यनुयोगाऽनर्हत्वात्। तत्सिद्धमेतद्विवादाध्यासितं रजतविज्ञानं दृश्यमान-पुरोवर्त्तिवस्तुगोचरं तदुपायाऽविषयत्वेऽपि सति तदर्थिनस्तत्रैव नियमेन प्रवर्तकत्वात्। तदुपायाऽविषयं सद्यत्रैव यदर्थिनं प्रवर्तयति तत्तद्विषयं, यथोभयसिद्धसमीचीनरजतविज्ञानमिति। तथा ह्ययं प्रवृत्तिनियमो हेतुमत्तया व्याप्तः स चाऽतद्विषयत्वाद् व्यावर्तमानः स्वव्याप्यं प्रवृत्तिनियममपि व्यावर्त्त-यति तद्विषयत्वे एव व्यवस्थापयतीति प्रतिबन्धसिद्धिः। न चाऽसावतद्विषयत्वे-ऽपि भेदाऽग्रहमात्राद्भवितुमर्हति। अभेदाग्रहणस्यापि स्वोचितव्यवहारप्रवर्त-नेन विरोधिक्रियासमावेशेन व्यवहर्तुः प्रवृत्तिनिवृत्तिप्रसङ्गादित्युक्तम्। तस्मादन्यस्याऽन्यथाग्रहणमेषितव्यम्। एवं च वर्तमानतयाऽवभासनमुपपद्यते। तथा च रजताऽवभासनं यदि न शुक्तिविषयम् अन्यत्वाद्वर्त्तमानाऽवभासनमपि तर्हि नाऽवर्त्तमानगोचरम्। अन्यत्वतादवस्थ्यात्।

यद्युच्येत, अवर्तमानगोचरं भविष्यति वर्तमानाऽवभासं विज्ञानदोष-सामर्थ्यात्। न च दोषाणां कार्यकारणसार्थ्यविहतिमात्रे व्यापारो न कार्यान्तरविषयशक्त्याऽऽधाने, न जातु यववीजमुपहतं दोषैः शाल्यङ्कुराय कल्पते इति साम्प्रतम्। भस्मकादिदोषवशादुदरजस्य वह्नेर्बहुविधाऽन्नपानपाच-नोपलम्भात् व्यभिचारात्। अशितपीताहाररसभावः कार्यमुदरजस्य तेज-सस्तत्प्रतिघातेन भस्मकस्यापि दोषभाव इति न व्यभिचार इति चेन्न। इहापि समानत्वात्। इन्द्रियादीनामपि परमार्थविज्ञानजननसामर्थ्यं स्वाभा-विकमपबाध्य विपर्ययविज्ञानहेतुतामादधाना दोषा न च्यवन्ते तत्ताया। न चाऽनवभासनात् अवर्तमानं न विषय इति युज्यते। विकल्पाऽक्षमत्वात्। किमवर्तमानं रजतमवर्त्तमानतया न विषय इति साध्यते आहो स्वित् रजततयाऽपि विषय ? इति। तत्र प्रथमे कल्पे न विप्रतिपद्यामहे। रजततया त्वविषयत्वे साध्ये तत्त्वेनाऽनवाभासनमसिद्धं न हेतुर्भवति। तथोक्तमाचार्येण 'आभासते कथंचिच्च तन्नात्यन्तं न भासते, तेन नावेदिके'ति। तस्मा द्दोषवशादवर्त्तमानमपि वर्त्तमानतया प्रतीयत एवेत्याह—दोषतस्तथात्वमवर्त-मानगोचरस्य विज्ञानस्य वर्त्तमानाऽवभासनमितरस्यापि शुक्तिकागोचरस्यापि रजताऽवभानं तुल्यमेव।

दोषतस्तथात्वमितरस्यापि तुल्यम्। वर्तमाने चाऽवर्तमानाऽवभासो नाऽवर्तमाने वर्तमानाऽवभासः। अर्थसन्निधेः साफल्यात्। नेदं रजतमिति च प्रसक्तस्य प्रतिषेधोपपत्तेः। तैमिरिकस्य केशोण्ड्राभं ज्ञानमालोकांशेष्विति नाऽर्थापेक्षो व्यभिचारः। स्वप्नेऽपि किं स्मृतेर्वर्तमाना[1]ऽवभासत्वम्, उत मनसः स्वातन्त्र्यमिति? स्मृतेर्वर्तमानाऽवभासता युक्ता[1]। अनन्तरदिवसाऽनुभूतस्याऽविकलाऽनधिकस्य विस्पष्टस्मृतेः वर्तमानवद्वेदनाद्दोषोपप्लवेन। न त्वदृष्टं मनसः स्वातन्त्र्यम्। दोषतश्च न सामर्थ्याऽतिरेको,

एवमापाततस्तुल्यतामभिधाय स्वाऽभिमतस्यास्य विशेषमाह—वर्तमाने शुक्तिशकले चाऽयमवर्त्तमानरजतावभासो नाऽवर्तमाने रजते वर्तमानाऽवभासः। पुरोवर्त्तिवस्तुविषयं नाऽतीतविषयं रजतमिदमिति विज्ञानमित्यर्थः। कस्मात्? अर्थसंनिधेः साफल्यात्। कुतश्च नेदं रजतमिति प्रसक्तस्य प्रतिषेधोपपत्तेः। अङ्गुलीनिर्द्देशेन शुक्तिकाशकलमेव रजततया प्रतिषेधन्ति विप्रतिपत्तारः। तत्तत्र रजतं प्रसञ्जितं पूर्वविज्ञानेनेति गम्यते। न च विवेकाऽग्रहणेन तत्प्रसञ्जनं, जीवत्यविवेकाऽग्रहे परिपन्थिनि। तस्माद्विपरीतग्रहे तत्प्रसञ्जकं कल्पते नान्यथा। न च पुरोवर्त्तित्वमनेनाऽतीते प्रसञ्जितम्। इदन्तया तस्य प्रतिषेधाऽसम्भवात्। तत्पुरोवर्त्तिवस्तुविषयमेव तद्विज्ञानमित्यवदातम्।

ननु तैमि[2]रिकस्य केशाभविज्ञानमुपजायते। न च तत्रास्ति केशानां संनिधिः। नाप्यन्यस्य कस्यचित्। येन तत्तदालम्बनं भवेत्। तस्मादसंनिहितकेशावलम्बनमेषितव्यं तद्विज्ञानम्। ततश्चाऽर्थापेक्षो व्यभिचारश्चक्षुरादीनामित्यत आह—तैमिरिकस्य केशोण्ड्राभं विज्ञानमालोकांशेष्विति नाऽर्थापेक्षो व्यभिचारः।

यच्चोक्तमधिगतस्वातन्त्र्यं मनः स्वप्नाऽवस्थायां वाह्य इति तन्निराचिकीर्षुर्विमृशति स्वप्नेऽपि किं स्मृतेर्वर्त्तमानाऽवभासित्वमुत तस्मिन्मनःस्वातन्त्र्यमिति? विमृश्य स्वपक्षं प्रतिजानीते—स्मृतेर्वर्त्तमानाऽवभासता युक्ता। हेतुमाह—अनन्तरदिवसाऽनुभूस्या [3]विकलानाधिकस्यापि स्पष्टस्मृतेर्वर्त्तमानवद्वेदनाद्दोषोपप्लवेन। न त्वदृष्टं मनसः स्वातन्त्र्यं वाह्ये युक्तम्। अथ कस्माद्दोष एव मनसो नाधत्ते तथाविधसामर्थ्याऽतिशयं? येन वाह्ये स्वतन्त्रमेव तद्वर्तेतेत्यत आह—दोषतश्च न सामर्थ्याऽतिशयो दृष्टो येन मनः

१. स्मृतेर्वर्तमानावभासता 'युक्ता। इत्येव'पाठोऽन्यत्र। २. तैमिरिमस्य। पु० पा०। ३. कल्पनाधिकस्यापि। पु० पा०।

दोषस्य तदपनयनहेतुत्वात् । सत्यस्वप्नदर्शनं तु यदि वर्तमानस्य तथाग्रहणात्तददृष्टम् । प्रबोधे स्वप्नाख्यानार्थसंवाददर्शनाद् दृष्टमिति चेत् । न । आख्यानसंवादाऽभावात् । आख्यानसंवादस्तु काकतालीयः । भविष्यतस्तु वर्तमानवद्दर्शनं कथं सत्यम् ? मा भूत् सत्यम् । अस्ति तावत् स्वातन्त्र्यं मनसः । तदपि तद्विविधस्याऽनुभूतस्य स्मरणम् । इतरथा मनसोऽदृष्टस्वतन्त्रं तदबाह्ये तत्त्वज्ञानं प्रसुवीत । विपर्यासस्तु संस्कारतन्त्रादेव मनस इत्युक्तम् । कस्मान्न दोषतो मनसः सामर्थ्याऽतिरेक इत्यत आह—दोषस्य तदपनयनहेतुत्वात् । तदिति तच्च विज्ञानजननसामर्थ्यं परामृशति ।

यदि मन्येत अस्ति खलु सत्यं स्वप्नदर्शनमपि । तद्यथा । वल्लभालिङ्गितमात्मानम[1]नुभूय स्वप्ने जागरायामपि तथैव पश्यति । न चेयं वर्तमानाऽवभासा स्मृतिरिति साम्प्रतम् । असति बाधके तदनुपपत्तेः । तदभावश्च संवाददर्शनात् । तस्मादत्र मनसः स्वातन्त्र्यमुपेतव्यमिति, तत्राह—सत्यस्वप्नदर्शनं तु यदि वर्तमानस्य तथाग्रहणात् तददृष्टम् । न खल्वयमपि प्रत्ययः संवादी । तथा हि स्वप्ने जागराऽवस्थाऽऽपन्नमयमात्मानं वल्लभाबाहुकदलीवलयितमुपलब्धवान्, विनिद्रनयनोत्पलस्तु पश्यन्नपि प्रियाऽऽलिङ्गनं निद्राणोऽहमासं सम्प्रत्येव प्रबुद्ध इत्यवगच्छति । कुतोऽस्य स्वप्नदृष्टाऽर्थसंवाद ? इत्यर्थः ।

शङ्कते—प्रबोधे स्वप्नदृष्टार्थसंवाददर्शनान्मनसः स्वातन्त्र्यं दृष्टमिति चेत् । यदा खलु स्वप्ने शुक्लमाल्याम्बरधरो ब्राह्मणायनमाह 'सोमशर्मन्नायुष्मन् पञ्चमेऽहनि प्रातरेव भूपतिरुर्वराप्रायभुवा ग्रामवरेण मानयिष्यति त्वामिति, स च पञ्चमेऽहनि प्रातरेव तथा संमानितः सोमशर्मा भवति सत्यस्वप्नवानित्यर्थः । निराकरोति—न । कस्मात् ? आख्यानसंवादाऽभावात् । आख्यानेन हि प्रवुद्धः सोमशर्मा स्मरन्नप्याख्यातारं ब्राह्मणायनं न पश्यति तत्प्रणीततां चाऽऽख्यानस्य स्मृत्यारूढस्य मन्यते इति । मैवं भूदाख्यानसंवादः स्वप्नस्यास्तीति, तथा च सत्यतेत्यत आह—आख्यानसंवादस्तु काकतालीयो दैवप्राप्तो न स्वप्नज्ञानं प्रमाणयति, यथाविधस्यैव तत्सामग्रीकस्य विसंवादवतो बहुलमुपलब्धेः । संवादस्य दैवाऽधीनत्वात् । ननु यत्राऽतीतस्य वर्त्तमानवद्भासनं तत्र संस्कारतन्त्रमस्तु मनो भावनायोनिपूर्वाऽनुभवात् । यत्र पुनरनागत एव वर्तमानतयाऽवभासते स्वप्ने कुतस्तदनुभवः कुतस्तरां च तद्भावना कुतस्तमां च मन[2]स स्वतन्त्रते ? त्यत आह—भविष्यतस्तु वर्तमानवद्दर्शनं कथं सत्यम् ? चोदक आह—मा भूत्सत्य-

१. मभूय । पु० पा० । २. मनससः स्वतन्त्रता । पु० पा० ।

सामर्थ्यस्य कल्प्यत्वात् । धर्मविशेषश्चेद्यथार्थदर्शनप्रसङ्गात् । तस्य कार्यं प्रत्यदृष्टसामर्थ्यस्य कल्प्यत्वात् । यदि च न स्मृतिः स्वप्नज्ञानं प्रमाणं तर्हि न प्रमाणमपि । बहिस्तथा ग्राह्यस्याऽभावात् । न तर्हि बहिरर्थे स्वतन्त्रं मनः । स्वप्ने तस्याऽग्राह्यत्वात् । ग्राह्यत्वे वाऽनुभूतस्य ग्रहणं, तथा दृष्टत्वात् । न दोषतोऽदृष्टसामर्थ्याऽतिरेककल्पनेत्युभयथा न स्वतन्त्रं बहिर्मनः । एतेन तिमिरतः केशादिदर्शनं प्रत्युक्तम् ।

मस्ति तावत्स्वातन्त्र्यं[1] मनसः संस्कारस्य भविष्यत्यसम्भवात् । समाधाता स्वाऽभिप्रायमुद्घाटयति—तदपि तद्विधस्यान्यत्राऽनुभूतस्य स्मरणम् । न हि सर्वथाऽननुभूतमुपलभ्यते स्वप्ने । परस्परविरुद्धानामपि क्वचित्कदाचित्कथंचिदुपलब्धानां सहानुभवविभ्रमसम्भवः । कस्मात्पुनः क्लेशेन सर्वत्र स्मरणमाश्रीयते ? इत्यत आह—इतरथा मनसोऽदृष्टस्वातन्त्र्यकल्पनाप्रसङ्गात् ।

यद्युच्येत स्वप्नेऽपि प्रेयसीसंभोगजन्मनः सुखोद्भवस्योपलब्धेरस्ति समुदाचाराद् वृत्ति[2]रस्य धर्मः, तेन तद्विशिष्टमेव मनः प्रियानुभवं भावयिष्यतीति कृतं संस्कारेणेति, तत्राह—धर्म्मविशेषश्चेद् यथार्थदर्शनप्रसङ्गात् । धर्म्मविशेषो हि यथार्थदर्शनहेतुरवगत आगमतः कथं मिथ्याज्ञानाय कल्पते ? अपि च लौकिकं कारणमसाधारणमाश्रित्य स्वकार्यं जनयति । न च तन्मनसः स्वातन्त्र्यं प्रति किंचिदुपलभ्यते । तेन धर्मविशेष एवाऽसहायः कारणमिति कल्पनीयं, तच्चाऽदृष्टप्रमाणेनेत्याह—तस्य धर्म्मविशेषस्य मनःस्वातन्त्र्यं कार्यं प्रत्यदृष्टसामर्थ्यस्य कल्पनाप्रसङ्गात् । यदि च न स्मृतिः स्वप्नज्ञानं भवन्मते प्रमाणं तर्हि स्वतन्त्रस्य मनसस्तद्विषये प्रवृत्तिः । अथ न प्रमाणमपि । कुतः ? स्वप्नज्ञाने भासते वस्तु, तस्य बाधके सति बहिस्तथा ग्राह्याऽभावात् ।

उत्तरं—न तर्हि बहिरर्थे स्वतन्त्रं मनः, स्वप्ने तस्य तथाविधस्याऽग्राह्यत्वात् । प्रकारभेदरहितवस्तुरूपग्राह्यत्वे वा भावनैव जागर्ति स्मरणहेतुः । तस्याश्च पूर्वाऽनुभवमन्तरेणाऽसम्भवादनुभूतस्य ग्रहणम् । तथा सिद्धोपप्लववशात्संस्कारतन्त्रस्य मनसो बाह्यस्मृतेः कारणत्वेन दृष्टत्वात् । न तु दोषतोऽदृष्टसामर्थ्याऽतिरेककल्पना । तस्माद्यदि ग्राह्यत्वं बाह्यस्य यदि वाऽग्राह्यत्वमुभयथाऽप्यस्वतन्त्रं बहिर्मनः । एतेन मनसः स्वप्नविज्ञाने स्वातन्त्र्यप्रदर्शनमार्गेण तिमिरतः केशादिज्ञानं मानसमिति प्रत्युक्तम् । अलोकांशालम्बनतया तद्विज्ञानस्य दोषवल्लोचननिमित्तत्वात् ।

---

१. स्वन्त्र्यं । पु० पा० ।

२. समुदाचरप्रवृत्ति पा० २ पु० ।

यत्तूक्तमनाश्वासादिति तदन्यत्राऽऽचार्येण—

'वोधादेव प्रमाणत्वमिति मीमांसकस्थितिम् ।
विदन्नव्यभिचारेण तां व्युदस्यत्यपण्डितः' ।।

इत्यादिना प्रवन्धेन दूषितमिति नेह दूषितम् । तथा दूषणकणिकेह सूच्यते ।

किमव्यभिचारितैव प्रामाण्यमथ तत्कारणं तद्व्यापिका वा ? येन क्वचिद्व्यभिचारदर्शनात्तदभावे सति ज्ञानमात्रेऽनाश्वासः स्यात् । न तावदव्यभिचारितैव प्रामाण्यम् । अव्यभिचारिणामपि वह्न्यादौ धूमादीनां कुतश्चिन्निमित्तादनुपजनितकृशानुप्रत्ययानामप्रामाण्यं स्यात् । व्यभिचारिणामपि चक्षुरादीनां नीलादिभेदे तद्विषयविज्ञानहेतूनां प्रामाण्यमिति साम्प्रतम् । प्रमितिक्रियां प्रति साधकतमत्वसम्भवात् । अन्यथा काष्ठादीनामपि पाकादावपि असाधनत्वप्रसङ्गात् । नापि प्रामाण्यकारणम् । अत एवाऽन्यथा चक्षुरादीनां नीलादिभेदव्यभिचारिणां तत्प्रतिमितिहेतूनामप्रामाण्यप्रसङ्गात् । केचिदेव हि धूमादयो वह्न्यादिवोधजननायाऽव्यभिचारमपेक्षन्ते, नाऽपेक्षन्ते च चक्षुरादयः । स्वभावनियमात् । एतेन व्यापकत्वमव्यभिचारितायाः प्रमाण्यं प्रत्युक्तं वेदितव्यम् । ज्ञानेनाऽव्यभिचारोऽपेक्ष्यते स्वकार्ये इति चेत् । न । विकल्पाऽसहत्वात् । अथापि स्यादव्यभिचारितोपेतं विज्ञानं प्रमाणं तस्याऽभावस्तत्त्वम् । तद्धि तथाविधं सत्स्वकार्ये पर्याप्तं मिथ्याज्ञानस्य तत्राऽसामर्थ्यादिति । तन्नास्ति । विकल्पाऽनुपपत्तेः । तथा हि । विज्ञेयाऽवभासोऽस्य कार्यमुच्यते स्वगोचरोचितव्यवहारप्रवर्त्तनं वा । तत्र न तावत् ज्ञेयाऽवभासेऽस्य स्वभावप्रतिलम्भमात्राऽधीनजन्मनि सम्भवत्यव्यभिचारग्रहाऽपेक्षा । न हि वयमुत्पन्नविज्ञानविषयाऽवभासायाऽस्य स्वविषयस्य स्वविषयाऽव्यभिचारमुदीक्षमाणाः स्म । भूतिरेव हि विज्ञानस्य विषयाऽवभासे क्रियेति । यथाह—'तेन जन्मैव विषये बुद्धेर्व्यापार इष्यते । तदेव च प्रमाणरूपमिति ।

'न हि तत् क्षणमप्यास्ते जायते वा प्रमात्मकम् ।
येनाऽर्थग्रहणे पश्चाद्व्याप्रियेतेन्द्रियादिवत् ।।इति च ।

अथ स्वगोचरोचितव्यवहारप्रवर्त्तने ज्ञानमव्यभिचारितामपेक्षते । न हि विज्ञानं विज्ञानमित्येव व्यवहारं प्रवर्तयति, मिथ्याज्ञानादपि तत्प्रसङ्गात् । तस्मान्मिथ्याज्ञानाद् व्यावृत्तमस्य संवादकत्वमर्थक्रियाप्रापणसामर्थ्यमव्यभिचारितालक्षणं प्रेक्षावत्प्रवृत्त्यङ्गमवगन्तव्यम् । न खल्वव्यभिचारमन्तरेण

ततस्तत्प्राप्तिः स्वार्थव्यभिचारश्च । ततोऽन्यस्य ज्ञानस्य तस्मादनुत्पत्तेः । अन्यथाऽतिप्रसङ्गात् । यथाह—

'अर्थस्याऽसंभवे भावात् प्रत्यक्षेऽपि प्रमाणता ।
प्रतिवन्धस्वभावस्य तद्धेतुत्वे समं द्वयम्' ।। इति ।

तद् द्विविधं प्रत्यक्षज्ञानम् । अर्थक्रियासाधननिर्भासकं प्रवर्तकं प्रमाणम्, अभ्यासदशाऽऽपन्नं तद्विपरीतं च । तत्र तद्विपरीतस्याऽर्थक्रियानिर्भासाद्विज्ञानात्प्रामाण्यमभ्युपगन्तव्यम् । यथाह 'प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत्प्रमाण'मिति । तथा 'प्रमाणमविसंवादि ज्ञानमर्थक्रियास्थितिः, असंवादन'मिति । तदर्थेनान्तरीयकाऽर्थान्तरदर्शनादभ्यासदशापन्नात् । तद्यथा । आराद्वह्निविज्ञानस्य वह्निकिंशुकनिचयसंशयेन तिरोहितप्रामाण्यस्य [1]धूमदर्शनात् प्रामाण्यविनिश्चयः । अर्थक्रियानिर्भासस्य ज्ञानस्याऽगृहीतप्रामाण्यस्य न प्रवर्तकविज्ञानप्रामाण्यनिश्चायकत्वं, गृहीतप्रामाण्यस्य वा[2] तन्निश्चायकत्वेनाऽनवस्थाप्रसङ्ग इति चेत्, न । अर्थक्रियानिर्भासस्य ज्ञानस्य स्वरूपेणेष्यमाणतया फलत्वेनाऽप्रवर्तकतया प्रमाणलक्षणाऽयोगितया व्यभिचारनिश्चयस्याऽनुपयोगात् । तद्रूपस्य च स्वसंवेदनसिद्धस्य शङ्काऽनास्पदत्वात् । यदाह—'स्वरूपस्य स्वतो गति'रिति । निवन्धारोऽप्याहुः—

अर्थक्रिया सुखाद्यात्मज्ञानमेव तथाविधम् ।
प्रमाणलक्षणाऽयोगि स्वतोऽधिगतशक्तिकम्' ।। इति ।

अन्योन्यसंश्रयान्नैवमिति चेत् । न । प्रवृत्तिद्वैविध्यात् । तत्रैतत्स्यात् । अर्थक्रियानिर्भासाद्विज्ञानाच्चेदव्यभिचारनिश्चयश्चेतसस्तदेव कुतः ? प्रेक्षावतां प्रवर्तकविज्ञानान्निश्चिताऽव्यभिचारादिति चेत् प्राप्तमन्योन्यसंश्रयमिति तत्र प्रेक्षावत्प्रवृत्तिद्वैविध्यात् । द्वयी खल्विह प्रवृत्तिः प्रेक्षावतां, तत्राऽऽद्या प्रवर्त्तकविज्ञानपरीक्षार्था, द्वितीया तु परीक्षितसाधननिर्भासस्य विज्ञानस्य तज्जातीयाद्विज्ञानादर्थक्रियाप्राप्त्यर्था । यथा किल कृषीवलस्य कर्परस्थितायां कृषिपरिकर्मितायां वीजाऽऽवपनलक्षणा प्रवृत्तिराद्या वीजपरीक्षार्था । स तु तत्राऽङ्कुरोत्पादनादवगतवीजतत्त्वः सस्याऽधिगमकाम्यया द्वितीयां प्रवृत्तिमारभते परिकर्मितायां भुवि तज्जातीयवीजाऽऽवपनलक्षणां, तथेयमपि प्रवृत्तिर्द्वयीति नाऽन्योन्यसंश्रयः । न च प्रेक्षावत्त्वव्याघातः । परीक्षोपाये प्रवर्तमानस्याऽनुपाये संदिग्धोपाये वाऽप्रवृत्तेः । प्रवर्ततां वोपायसंदेहादपि तथापि न प्रेक्षावत्त्वविघातः । अर्थसंशयस्य प्रेक्षावत्प्रवृत्त्यङ्गत्वात् निवृत्त्यङ्गत्वाच्चाऽनर्थसंशयस्य । अभ्यासदशापन्नस्य तु प्रत्यक्षस्य प्रापिताऽर्थक्रिया-

---

१. धूमाऽदर्शनात् । पु० पा० । २. प्रमाणकस्य १ पु० पा० ।

ज्ञानसाधर्म्यादनुमानात् प्रामाण्यविनिश्चयः। अनुमानस्य तु नान्तरीयकाऽर्थदर्शनजन्मतया निश्चितव्यभिचारस्य स्वत एव प्रामाण्यनिश्चयः। तत्स्वगोचरोचितव्यवहारप्रवर्त्तनायाऽस्त्वव्यभिचारनिश्चयाऽपेक्षा प्रमाणस्येति।

तदिदमसाम्प्रतम्। अर्थक्रियानिर्भासिनो हि विज्ञानस्याऽर्थाव्यभिचारस्य स्वार्थे विनिश्चायकत्वं दुर्लभं, किमङ्ग पुनः पूर्वविज्ञानस्य प्रापणसामर्थ्ये स्वसंवेदनसिद्धस्य तस्य प्रयोजनतया किमर्थाऽव्यभिचारनिरूपणेन किं च प्रामाण्येनेत्युक्तमिति चेत्। तत्किमिदानीं यत्र स्वप्ने कामुकस्य स्वोचिताऽर्थक्रियासामर्थकामिनीविज्ञानं तदनन्तरं प्रवृत्तिज्ञानमथ संभोगविज्ञानमन्तरं सुखं चरमधातुविसर्गश्चेति तत्र तावदाद्यं कामिनीविज्ञानमस्तु प्रामाण्यं, न ह्यन्यत्राऽर्थक्रियानिर्भासं नास्ति विज्ञानम्। तदनन्तरं तस्य भावाज्जागरायां तदर्थकारिणः कामिनोरूपस्य बाधनात्। सुखचरमधातुविसर्गयोश्च मनोमात्रयोनितया कामिन्यामसत्यामपि तज्ज्ञानमात्रादुत्पादनात् जागरायामनुवृत्तेरविरोधात्। अन्यथा कामिनीवस्तुसाध्याऽधरपल्लवनखक्षतादिवद्व्यावृत्तिप्रसङ्गादयमदोष इति चेत्। न। प्रकृतेऽर्थक्रियानिर्भासस्य ज्ञानस्याऽव्यभिचारित्वाऽग्रहेणाऽर्थक्रियाया अनिश्चयेन प्रवर्त्तकस्य ज्ञानस्याऽर्थक्रियासमर्थवस्तुपरिप्रापणलक्षणप्रामाण्याऽनिश्चयेन स्वप्नविज्ञानसाम्यात्।

यदि मन्येत अर्थक्रियानिर्भासं ज्ञानं स्वतः प्रमाणम्। अर्थक्रियानिश्चयात्मकत्वात्। न च स्वप्नादौ प्रसङ्गः। तत्राऽवस्थान्तरे पुरुषान्तरे कालान्तरे वा बाधकोत्पादादप्रामाण्यात्। तत्प्रवर्त्तकेष्वपि ज्ञानेषु समानमन्यत्राऽभिनिवेशात्। अपि चाऽव्यभिचारित्वं नाम ज्ञानस्यार्थेन सह। न च तदर्थग्रहणादृते शक्याऽवसानम्। न खल्वगृहीतदहनो धूमस्य तदव्यभिचारमवधारयितुमर्हति। क्षणिकत्वमपि ज्योतिर्विदागमेषु पूर्वाऽपरभागरहितकालकलामात्रस्य प्रसिद्धेस्तन्मात्रवर्त्तित्वं भावस्येति नाऽत्यन्ताऽप्रसिद्धं येन सत्त्वस्य तदव्यभिचारो न शक्याऽवगमो भवेत्। मा भूद्वा कापि न नः क्षतिः। न चाऽप्रमाणमप्रमाणेन वा ऽनवधृतप्रामाण्येन तद्ग्रहणमव्यभिचारग्रहणाऽङ्गम्। न खल्वप्रमाणेनाऽगृहीतप्रमाण्येन वा प्रमाणेन विषयीकृतो वह्निर्धूमाऽव्यभिचारग्रहणाय कल्पते। तस्मादव्यभिचारग्रहणमन्तरेण नाऽर्थग्रहणं, न चाऽर्थग्रहणमन्तरेणाऽव्यभिचारग्रहणम् इति परस्पराश्रयप्रसक्तिः। एवं च दृष्टसामर्थ्यसाधर्म्याऽनुमानेनाऽभ्यासदशापन्नप्रत्यक्षज्ञानानां स्वार्थव्यभिचारग्रहणं परास्तं वेदितव्यम्।

यच्चाऽनुमानस्य स्वतःप्रामाण्यमुक्तं तस्मिन् दर्शने प्रत्यक्षस्य स्वाऽर्थाऽव्यभिचारग्रहणादुक्तेन क्रमेण तत्पूर्वकत्वाऽनुमानस्योदय एव दुर्लभः कुतो-

ऽस्य प्रामाण्यं कुतस्तरां च तत् स्वतः ? नन्वव्यभिचाराऽग्रहे ज्ञानमात्राद-नाश्वासः प्रेक्षावतामित्युक्तम्। सत्यमुक्तमिदं तु वक्तव्यं, कोऽयमनाश्वासः, किं संशय आहोस्विदज्ञानम् ? न तावदज्ञानं बोधस्यैव ज्ञानत्वात्। नापि संशयः। विशेषस्मृत्यपेक्ष विमर्शं त्रिकारणं पञ्चकारणं वा संशयं रोचयन्ते[1] समानाऽनेकधर्मोपपत्तेः[2]। 'विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्य[3]दस्थातृश्च विशेषा-ऽपेक्षो विमर्शः संशय' इत्याचक्षाणास्तद्विचक्षणाः। न चाऽगृहीते विशेषे[4] स्मरणसंभवः। न च संशयात्मैव तद्ग्रहणं स्मृतिहेतुः। स्मृतौ सत्यां यद्भावात्तस्मिंश्च स्मृत्युपपत्तेरन्योन्याश्रयप्रसङ्गात्। संस्कारजत्वेऽपि च प्रसङ्गतादवस्थ्यात्। अनादितायाश्च गत्यन्तरसम्भवेऽनाश्रयणात्। तत्सिद्धं नाऽव्यभिचारनिश्चयो ज्ञानस्य स्वाऽर्थनिश्चयनिमित्तं, तस्योत्पत्तौ तद-पेक्षत्वात्। यत्स्वरूपस्योत्पत्तौ यदपेक्ष्यते न तत्तस्य हेतुः। यथाऽनुमेयविज्ञानं लिङ्गविज्ञानस्य। न चाऽसिद्धता हेतोः। उक्तं हि—'स्वाऽर्थनिश्चयापेक्षं तदव्यभिचारविज्ञान'मिति। कार्यात्प्राग्भावित्वेन हि कारणत्वं व्याप्तं, तद्विपक्षाद्विरुद्धोपलब्ध्या व्यावर्तमानं कारणत्वमपि व्यावर्तयतीति प्रतिबन्ध-सिद्धिः। अर्थप्रापण[5]शक्तिरपि तस्याऽर्थत्वप्रदर्शनान्नाऽन्या। न हि ज्ञानमात्मीय-हस्ते वस्तूनयति, अपि तु तत्र प्रवर्तयति ज्ञातारम्। न चास्य तत्र प्रवर्त्तन-मन्यदतो वस्तुतत्त्वोपदर्शनात्। न च वस्तुतत्त्वमर्थस्याऽन्यदतः स्वरूपात्। तच्चास्य रूपमनुभवः स्वभावत एवाऽनुभवति, न पुनरव्यभिचाराद्यपेक्षते। तदिदमनुभवस्याऽर्थे स्वतःप्रामाण्यमुच्यते। यत्पुनरनुभूयमानाद्रूपादर्थस्याऽ-न्यथात्वं न तदनुभवत्यनुभवः। रजतविभ्रमेण तदन्यथात्वग्रहणे रजतार्थि-नस्तत्राऽप्रवृत्तेर्बाधकाऽनुपपत्तेश्च। ततश्च ज्ञानान्तराऽवसेयमन्यथात्वं, तेन तत्राऽन्यदपेक्षत इति तदस्य परत इत्युच्यते। यत्पुनरस्य तत्त्वाऽवबोधरूपत्वं विज्ञानस्य तदपि तद्ग्राहिणः प्रत्ययान्तरान्मानसादानुमानिकाद्वाऽवगम्यमानं स्वत इत्युच्यते। तत्स्वरूपग्राहिणः प्रत्ययात्प्रत्ययान्तराऽनपेक्षणात्। न चास्य बाधकाशङ्कायामाप्रामाण्यमाशङ्कनीयम्। बाधाऽनर्हे तदाशङ्काऽनुपपत्तेः। सन्ति हि कानिचिद्विज्ञानानि स्वस्थेन्द्रियस्वान्तस्य पुंसः स्फीताऽऽलोकमध्यवर्ति-प्रमेयविषयाणि, यत्र न मनागपि बाधा दृष्टचरी कथं तत्र बाधार्हता, यत्रापि निपुणेन प्रतिपत्रा भवितव्यम्। स यदि प्रयत्नेनाऽनुसरन्नपि नाऽऽपादयत्यस्य बाधां तदौत्सर्गिकमस्य प्रामाण्यमविहतमनपेक्षमवतिष्ठते। यदि तु पश्येत्त-तस्तदपोहितमिति नान्यत्र तदुत्प्रेक्षितव्यम्। यथोक्तम्—

---

१. रोचन्ते। पु० पा०। २. पपत्तेर्विप्रतिपत्ते। का० वि० पा०।
३. लब्धिव्यवस्था। पु० पा०। ४. विशेषे न। पु० पा०।
५. प्रमाण २ पु० पा०।

लिङ्गाद्याभासजं लोके प्रतिभानमनिश्चयः ।
सर्वतः पूर्णविज्ञानः पूर्णे न्यूने न कश्चन ।।

यदपि किल श्वो मे भ्राताऽऽगन्तेति प्रतिभायामक्षलिङ्गाद्यपेक्षाऽभावाद् बहिः स्वतन्त्रं मनो दृष्टं, सर्वं च सर्वमिति वा सदसत्पदार्था द्रव्यादयः

तस्माद्बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता ।
अर्थाऽन्यथात्वहेतूत्थदोषज्ञानादपोद्यते ।
द्वावेव निन्दितौ लोके निरशङ्काऽतिशङ्कितौ ।।
एवं त्रिचतुरज्ञानजन्मनो नाऽधिका मतिः ।
अर्थ्यते[1] तावदेवैकं स्वतः प्रामाण्यमश्नुते ।।
उत्प्रेक्षते हि यो मोहादज्ञानमपि बाधकम् ।
स सर्वव्यवहारेषु संशयात्मा क्षयं व्रजेत् ।। इति ।

न चेदं शापमात्रम् । उक्तं हि—'न बाधाऽनर्हे तदाशङ्का युज्यते अतिप्रङ्गादि'ति । बाधकारणदोषाभ्यामप्रामाण्यज्ञानात्तदभावग्रहाऽपेक्षप्रामाण्य[2]निश्चये, न तु स्वत इति चेत् । न एकहेतुत्वकल्पनायां कार्योत्पत्तावनेकहेतुत्वकल्पनाऽनुपपत्तेः । बाधकारणदोषग्रहणस्य चाऽप्रामाण्यनिश्चयहेतुभावमात्रेण प्रामाण्योपहन्तृत्वेन तदभावे बोधमात्रादेव प्रामाण्योपपत्तौ न तदभावोऽपेक्षणीयः । स च सत्यामाशङ्कायां, सा च यादृशे विषये दृष्टचरी तादृशे एव न सर्वत्रेत्यावेदितम् । तत्सिद्धं स्वतः सर्वप्रमाणानां प्रामाण्यं, तदन्याऽनपेक्षणात् । यद्यतोऽन्यत्राऽपेक्षते तत्तस्य स्वत एव । तद्यथा वह्नेर्दहनसामर्थ्यमिति । तदन्याऽनपेक्षत्वं च साधितमुक्तेन प्रबन्धेन । तदन्याऽपेक्षस्य हि तत्स्वभावाऽनधीनत्वे तदाश्रितत्वविरुद्धतदनाश्रितत्वप्रसक्तिबाधकं प्रमाणमिति न सन्दिग्धो व्यतिरेकः । तदिदमुक्तम्—

'स्वतः सर्वप्रमाणानां प्रामाण्यमिति गृह्यताम् ।
न हि स्वतोऽसती शक्तिः कर्त्तुमन्येन शक्यते' ।।इति ।
तस्मान्नाऽनाश्वास इति सिद्धम् ।

सम्प्रति नैयायिकाऽभिमतयोगिज्ञानविषयत्वं विश्वस्य निराकरोति—

लिङ्गाद्याभासजं लोके प्रतिभानमनिश्चयः ।
सर्वः संपूर्णविज्ञानः पूर्णे न्यूने न कश्चन ।।

यदपि किल श्वो मे भ्राता आगन्तेति लौकिक्यां प्रतिभायामक्षलिङ्गाद्यपेक्षाऽभावाद्[3] बहिः स्वतन्त्रं मनो दृष्टम् । ननु तत्र भ्रातुः स्वरूपस्य

१. प्रार्थ्यते २ पु० पा० । २. प्रामाण्या पु० पा० । ३. लिङ्गाद्यभावात् २ पु० पा० ।

प्रकृतिपुरुषौ पञ्चस्कन्धा इत्यादि वाऽभेदेन लोकप्रमाणवशेन मनसो विषय इत्यपि स्वातन्त्र्ये बहिः सर्वज्ञत्वसिद्धिः। अत्रोच्यते—

लोकोत्तरं तावत् प्रतिभानं विवादपदं, लौकिकं तु प्रियाऽप्रियगोचरं प्रायः सहप्रवृत्तहृदयप्रसादोद्वेगादिलिङ्गाद्याभासप्रभवमत एवाऽनिश्चयात्मकं तथा व्यपदिशन्ति प्रतिभानमेव, न तु निश्चयः। उभयकोटिसंस्पर्शित्वा-तुल्यत्वाच्च न संशयात्मकम्। प्रतिभैव। न प्रमाणम्। अनिश्चयफलत्वात्। प्रमाणान्तरापेक्षनिश्चयत्वात्। एवं लिङ्गादिजातीयाऽपेक्षत्वात् तत्रापि

प्रागुपलब्धेर्भवत्वेवमिह तु विश्वेषां भावानां देशकालाऽवस्थाविशेषविप्र-कीर्णानां न रूपतोऽप्युपलम्भसम्भव इति कथमत्र मनसः स्वातन्त्र्यमित्यत आह—सर्वं च सर्वमिति वा प्रकाररहितेन रूपेण व्यूढं प्रकारभेदवता यतो नेदानीं व्यूहे हेतुप्रकारान्नैयायिकः स्वपराऽभिमतानाह—सदसत्पदार्था द्रव्या-दयः प्रकृतिपुरुषौ पञ्चस्कन्धा इत्यादिना वा भेदेन लोकप्रमाणवशेन मनसा विषयीकृतं भावनामयस्य स्फुटाऽवभासस्य लोकोत्तरस्य प्रत्यक्षस्य विषय इत्यपि सर्वज्ञतासिद्धिः स्वातन्त्र्ये मनसः। एतदुक्तं भवति। निष्प्रकारं सप्रकारं वा लौकिकेन प्रमाणेन गृहीत्वा भावयतो भावनाऽपनीताऽऽवरणं मनः स्वतन्त्रमेव विश्वमवगाहते इति।

अत्रोच्यते। लोकोत्तरं तावत्प्रतिभानं सत्तया विवादपदमेवेति न तत्र मनसः स्वातन्त्र्यं स्वरूपेण प्रतिषेधनीयम्। लौकिकं तु प्रियाऽप्रियाऽगोचरं न स्वतन्त्रमनोजन्यं, यतः प्रायः सहप्रवृत्तहृदयप्रसादोद्वेगादिलक्षणलिङ्गाद्या-भासप्रभवमत एव लिङ्गाद्याभासप्रभवत्वादेव तदनिश्चयात्मकम्। तथा च व्यपदिशन्ति 'एवं प्रतिभानं न तु निश्चय' इति। उभयकोटिसंस्पर्शस्या-ऽतुल्यत्वाच्च न संशयात्मकम्।

ननु यदि न संशयो नापि निश्चयः तर्हि तद्विज्ञानतत्त्वं वाच्यमित्यत आह—प्रतिभैव। न ह्येतद्विज्ञानतुल्यवदुपप्लवमानविरुद्धकोटिद्वयविषयो येन संशयात्मकं, नाप्येककोटिविषयामपि प्रमामवधारयति येन निश्चयः स्यात्। न चैककोटिविषयं न च प्रकाशते येन न स्यात्। तस्मात्सिद्धं प्रतिभैवेति। तर्हि स्वयमनिश्चयात्मापि निश्चयजननादस्तु प्रमाणं चक्षुरादिवदित्यत आह—न प्रमाणम्। कस्मात्? अनिश्चयफलत्वात्। ननूपजाते प्रतिभाभेदे यत्र तदनन्तरं निश्चयो भवति तत्र निश्चयफलकः प्रमाणभेदः कस्मान्न प्रमाणम्? इत्यत आह—प्रमाणान्तराऽपेक्षनिश्चयत्वात्। न तावत्प्रतिभाया एवाऽनपेक्षया एव निश्चयजनकत्वं, सर्वत्र तथाभावप्रसङ्गात्। लिङ्गाद्य-

पारतन्त्र्यम् । अन्यथा तदनपेक्षो मनोमात्रसाधनो बहिरर्थसंबन्धः सर्वस्य सर्वस्मिन् सर्वदा स्यादिति । अदृष्टविशेषादक्षलिङ्गाद्य[1]नपेक्षं मनः कस्यचिद् बाह्येऽप्यर्थेऽसति चक्षुराद्यारम्भवैयर्थ्यप्रसङ्गः । तत एवाऽदृष्टविशेषाऽभिसंस्कृ-तात्[2] सर्वप्रतिपत्तिसिद्धेस्तस्यापि वैयर्थ्यात् । अकरणस्यैव कर्तुरात्मनोऽदृष्ट-विशेषादेव परिच्छित्तिक्रियासिद्धेः । न खल्वनुपायमदृष्टमप्यर्थं साधयति शरीराद्यार[3]म्भात् न तर्हि अक्षलिङ्गाद्यनपेक्षं चैभिर्मनसः प्रवृत्तिः स्वतः । अत एव योगजाद्धर्मात् सर्वार्थेषु न मानसं प्रत्यक्षं, संनिकर्षोपायत्वात् सिद्धेः ।

पेक्षायां च तद्धेतुत्वे कृतमनया, लिङ्गादीनां तन्निरपेक्षाणामेव तत्र तत्र सामर्थ्यप्रतीतेरिति ।

उपसंहरति—एवं लिङ्गादिजातीयाऽपेक्षत्वाल्लिङ्गाद्याभासाऽपेक्षत्वात् तत्रापि प्रतिभानेऽपि लौकिके परतन्त्रं मनः । अन्यथा स्वातत्र्ये तल्लिङ्गा-द्याभासाऽनपेक्षमनोमात्रसाधनो वहिरर्थसंवन्धो मनसो नित्यसंनिधानात् सर्वस्य पुंसः सर्वस्मिन्नर्थे सर्वदा स्यादिति सर्वः सर्वदा सर्वदर्शी स्यात् । अदृष्टविशेषाद् वाह्ये मनः स्वतन्त्रं कदाचित्कस्यचिदेवेति नाऽतिप्रसङ्गः । तदाह—अदृष्टविशेषादक्षलिङ्गाद्यनपेक्षं मनः कस्यचित्क्वचिद्वाह्येऽप्यर्थे चक्षुराद्यारम्भवैफल्यप्रसङ्गः । कस्मात् ? तत एव मनसोऽदृष्टविशेषाऽभि-संस्कृतात्सर्वरूपादिप्रतीतिसिद्धेः । आसतां चक्षुरादयः, तस्य मनसोऽपि वैयर्थ्यम् । कुतः ? अकरणस्यैव कर्त्तुरात्मनोऽदृष्टविशेषादेव रूपादिपरि-च्छित्तिक्रियासिद्धेः ।

यद्युच्येत, न खल्वनुपायमदृष्टमप्यर्थं साधयति । कुतः ? शरीराद्या-रम्भात् । न तर्ह्यक्षलिङ्गाद्यनपेक्षा वहिर्मनसः प्रवृत्तिः । ततोऽदृष्टत एवाऽनुपायस्याऽसाधनत्वादेव योगजाद्धर्मात्सर्वार्थेषु न मानसं प्रत्यक्षं, यत्त-त्तारकमित्याचक्षते स्वायम्भुवाः । कुतः ? इन्द्रियाऽर्थसंनिकर्षोपायत्वात्त-द्वाह्यविषयप्रत्यक्षत्वसिद्धेः ।

यद्युच्येत नेन्द्रियार्थसंयोग एव, तदुपायगुणादिज्ञानस्याऽप्रत्यक्षत्व-प्रसङ्गात् । नाऽपीन्द्रियसमवाय एव । शब्दज्ञानस्यैव प्रत्यक्षत्वापत्तेः । अपि तु संयुक्तसमवायादयोऽपि तदुपायाः । अत एव सर्वाऽविरोधार्थ'मिन्द्रियार्थ-संनिकर्षोत्पन्न'मित्याह स्म तत्रभवानक्षपादः । तद्गुणादिग्रह इव संयुक्तसम-वायादिहापि समाधिजधर्मसंस्कृतस्य मनसो वाह्येन्द्रियस्य वा तत्संयुक्त-

---

१. लिङ्गाद्यपेक्षं । पु० पा० । २. संस्तुतात् । पु० पा० ।
३. शरीराद्यारम्भातेन । पु० पा० ।

संयुक्तसंयोगाऽनभ्युपगमात् । अन्यथा कुड्यादिव्यवहिताऽर्थोपलब्धिप्रसङ्गात् । अनुमानेऽपि प्रत्यक्षत्वाऽऽपातात् । अजाताऽतिवृत्तेषु तस्याप्ययोगात् । अत एव नेन्द्रियाऽर्थयोः सिद्धयोः सन्निकर्षः । अतीताऽनागतानां तदाप्यसत्त्वाद् व्यवहिताऽर्थोपलब्धिप्रसङ्गात् । अनुमानादिषु च प्रत्यक्षत्वाऽऽपातात् । सन्निकर्षग्रहणाऽऽनर्थक्याच्च । नन्वतीताऽनागतानां देशादिविशेषणत्वेन ज्ञानाज्ज्ञानस्य विशेषदेशाद्यालम्बनत्वात् तैश्चक्षुषो मनसो वा सन्निकर्षसम्भवात् । तेषां च सत्त्वात्सन्निधानादव्या[1]हतमनुत्पन्नाऽतिवृत्तज्ञानस्येन्द्रि-

संयोगादिराश्रयिष्यते तत्तद्व्यवहितादिग्रहणसिद्धयर्थमित्यर्थंत आह—संयुक्तसंयोगस्य प्रत्यक्षज्ञानहेतोरनभ्युपगमाद् भवद्भिः ।

न केवलमनभ्युपगतोऽनुपपन्नश्चाऽतिप्रसङ्गादित्यत आह—अन्यथा कुड्यादिसंयोगव्यवहिताऽर्थोपलब्धिप्रसङ्गादस्मदादीनाम् । न च समाधिसंस्कृतस्य मनसो लोचनादेर्वा सामर्थ्यमेवंविधं सम्भवतीत्युक्तं बौद्धसर्वज्ञपरीक्षायाम् । ततः सर्वस्य सर्वज्ञत्वप्रसङ्गात् अस्ति हि कथंचित्सर्वस्य सर्वेण सम्बन्धः । तथाऽनुमानेऽपि प्रत्यक्षत्वापातात् । इन्द्रियार्थसन्निकर्षोत्पन्नत्वेन ह्यनुमानात् प्रत्यक्षं व्यावर्तते । यदा त्वनुमानमपि तथा तदपि प्रत्यक्षं स्यात् । तथा हि । धूमादि यावच्चक्षुरादिसंयुक्तं धूमादिश्च वह्न्यादिना तदनेन प्रकारेणाऽस्ति कश्चित्कथंचिदिन्द्रियस्य संनिकर्ष इति तदुत्पन्नमनुमानं प्रत्यक्षं प्रसज्येत । न च प्रत्युत्पन्नचक्षुरादिनिरपेक्षमत्र धूमाद्येव कारणमिति युक्तम् । संनिकर्षस्यैव तत्र तत्र क्लृप्तसामर्थ्यस्य सम्भवे लिङ्गादिसामर्थ्यकल्पनाऽनुपपत्तेः । न चैतावता सर्वज्ञता सिध्यतीत्याह—अजाताऽतिवृत्तेषु तस्याप्ययोगात् । अत एव नेन्द्रियाऽर्थयोः सद्भावो ज्ञानजननं प्रति परस्पराऽऽनुकूल्येनाऽवस्थानं संनिकर्षः ।

अत एवेति विभजते—अतीताऽनागतानां तदा विज्ञानसमयेऽसत्त्वाद्व्यवहितार्थोपलब्धिप्रसङ्गात् । अनुमानादिषु च प्रत्यक्षत्वाऽऽपातात् । हेत्वन्तरमाह—संनिकर्षग्रहणाऽऽनर्थक्यप्रसङ्गाच्च । इन्द्रियार्थोत्पन्नमित्येतावतैव तयोः सद्भावसिद्धेः । असत उत्पादकत्वाऽयोगात् ।

चोदयति—नन्वतीताऽनागतानां देशादिविशेषणत्वेन ज्ञानात् । तद्यथा । इयमतीताऽनागतबहुराजा जगतीति तज्ज्ञानस्य विरोधिदेशाद्यालम्बनत्वात्तस्यैवाऽङ्गुल्या निर्देशात् तत्र प्रवृत्तेश्च देशादिभिर्विशेष्यैर्यथायथं चक्षुषो मनसो वाऽवधृतप्रत्यक्षता न हेतुभावस्य, संनिकर्षसम्भवात् । कुतः सम्भव ? इत्यत आह—तेषां च विशेष्याणां देशादीनां च सत्त्वात् संनिधानादव्याहतमनुत्पन्नाऽतिवृत्तज्ञानस्येन्द्रियार्थसंनिकर्षजत्वाऽविशेषेणाऽनवभासोऽपि विशेष्य-

१. दव्याहत । पु० पा० ।

याऽर्थसन्निकर्षजत्वम् । अनुमानादिलक्षणा[1]भावे च इन्द्रियाऽर्थसन्निकर्षोत्पन्नं ज्ञानमिति नाऽनुमानादिषु तत्त्वम् । यदि तावद्यः कश्चिदर्थस्ततः स्मृतौ प्रत्यक्षत्वप्रसङ्गः । अथ प्रमेयो देशादिप्रज्ञानं भवतु प्रत्यक्षं, तन्मात्रसन्निकर्षात् न तु विशेषणज्ञानम् । विशिष्टज्ञानं प्रत्यक्षमिति तदाक्षेपात् विशेषणमपि प्रत्यक्षमिति चेत् । न तस्याऽसन्निकर्षात् । न ह्यसति विशेषणे विशिष्टो वर्तमानोऽपि भवति । सर्वस्य तथात्वप्रसङ्गात् । कथं तर्हि अतिवृत्तायां मातरि देवदत्ता[2]पुत्रो यज्ञदत्त उच्यते । किमत्र ? न स तया तदा विशिष्टतया व्यवहारमनुपतेदिति । यदि तर्ह्यवर्त्तमानं न व्यवहाराङ्गं देवदत्ताऽपि

स्यैवार्थत्वादिति भावः । नन्वेवमपि पर्वतादेरिन्द्रियसंनिकृष्टस्याऽनुमानविषयत्वादनुमानस्यापि प्रत्यक्षत्वापात इत्यत आह—पृथगनुमानादिलक्षणप्रणयनसामर्थ्यादनुमानादिलक्षणाभावे इन्द्रियाऽर्थसंनिकर्षोत्पन्नमिति प्रत्यक्षलक्षणमिति नाऽनुमानादिषु तत्त्वं प्रत्यक्षत्वम् । तल्लक्षणविरहात् ।

तदेतद्विकल्पप्य दूषयति—यदि तावद्यः कश्चिदर्थः तेन सहेन्द्रियाऽसंनिकर्षाद्यद्विज्ञानं तत्प्रत्यक्षं, ततः स्मृतौ प्रत्यक्षत्वप्रसङ्गः । सापि खलूद्बुद्धसंस्कारेणाऽऽत्मना सह मनसः संनिकर्षादुपजायते । न चैतस्याः पारमर्षं पृथगस्ति लक्षणम् । अथ प्रमेयः स एव खलु अर्थ्यमानतयाऽर्थो, न चाऽऽत्मा स्मृतावर्थ्यमानः, किं तु पूर्वाऽनुभूतो देशादिरिति दूषयति—देशादिमात्रज्ञानं भवतु प्रत्यक्षं, तन्मात्रसन्निकर्षात्, न तु विशेषणज्ञानम् ।

शङ्कते—विशिष्टज्ञानं प्रत्यक्षमिति तदाक्षेपाद्विशेषणमपि प्रत्यक्षमिति चेत् ? निराकरोति—न । तस्याऽविधेयस्य विशेषणवदसंनिकर्षात् । कस्मात्तर्ह्यसंनिहितविशेषणोऽतीतविशेषणो विशिष्टावर्त्तमानो भवति रूपमात्रस्य वर्त्तमानत्वेऽपि । कुतः ? सर्वस्य तथात्वप्रसङ्गात् । असंनिधानाऽविशेषात् । चोदयति—देशाद्यवर्तमानविशेषणे विशिष्टो वर्त्तमानः, कथं तर्ह्यतिवृत्तायां मातरि देवदत्तापुत्रो यज्ञदत्त इत्युच्यते ? समधातुं निगूढाऽभिसन्धिः पृच्छति किमत्र कथं ? चोदक आह—न स तया तदा विशिष्ट इति न देवदत्तापुत्र इति हि विशिष्टतया व्यवहारमनुवर्तेत । अवर्तमानस्य व्यवहाराऽनङ्गत्वादिति । समाधाताऽऽह—यदि तर्ह्यवर्त्तमानं न व्यवहाराऽङ्गं देवदत्ताऽप्यतीतयो-

---

१. लक्षणमपि पु० पा० ।

"अत्रटीकां विलोक्य पृथगनुमनादि, इत्यादि पाठः शोधनीयः । इति निवेदनम्मम—कृपाचार्यस्य ।

२. देवदत्तपुत्रो । पु० पा० ।

विशेषणतया न व्यवहाराङ्गं स्यात् । अथ भूतपूर्वेण विशेषणेन व्यवहारः, विशिष्टतयापि तादृश्या न दण्डवारितः । न चेदृशं विशेषणमुपलक्षणं तु, रूपतो भिन्नस्याऽसन्निधानात् । सन्निध्यसन्निधिकृत एव चैतयोर्भेदः । तस्मान्नाऽसंनिहितविशेषणो विशिष्टः सन्निहितः । यदि विशेषणं प्रमेयं जाताद्यर्थश्च प्रमेयः । अनर्थसन्निकर्षजमपि प्रत्यक्षं प्राप्तम् । न च तथा । तल्लक्षणविरहादिन्द्रियस्याऽर्थापेक्षत्वात् ।

अथ देशविशेष एव प्रमेयो न तद्विशेषणं तथा । न च तल्लक्षणविरहः । अर्थ्यमानसंनिकर्षात् । न तर्हि देशाद्यालम्बनज्ञानेनाऽनुत्पन्नादिवेदिनो ध्यायिनः । प्रमेयैकदेशसन्निकर्षाच्च प्रत्यक्षज्ञानोदये सर्वः सर्वप्रत्यक्षदर्शी

भयसिद्धा न तद्व्यवहाराङ्गं स्यात् । समाधातैवाऽऽशङ्क्य तुल्यतामापादयति—अथ भूतपूर्वेण विशेषणेन व्यवहारो न विशिष्टतयाऽपि तादृश्या दण्डेन वारितः । अपि चाऽभ्युपेत्य विशेषणत्वमेवंविधस्येदमुदितं, परमार्थतस्तु नेदं विशेषणं देवदत्तादिकं नामेत्यत आह—उपलक्षणं तु, रूपतो भिन्नस्य स्वलक्षणस्याऽऽकारिण इति यावत् । असंनिधानाद्विशेष्यस्याऽभिमतवस्त्वनाकारत्वादिति । अथ मा भूत् संनिधानं, तथापि विशेषणं कस्मान्न भवती ? त्यत आह—संनिध्यसंनिधिकृत एव एतयोर्विशेषणोपलक्षणयोर्यथाक्रमं भेदः । कस्मात् ? नाऽसंनिहितविशेषणो विशष्टः संनिहितः । स्वरूपेण संनिहितोऽपि तदसंनिहितविशेषणस्य वस्तुनः स्वरूपं संनिहितस्य तन्मात्रं प्रत्यक्षं न पुनर्विशिष्टत्वमपीति सिद्धम् ।

यदि च विशिष्टप्रमेयतासिद्ध्यर्थं विशेषणमपि प्रमेयमङ्गीक्रियेत तदन्तरेण विशिष्टप्रमेयताऽनुपपत्तेः । ततो जाताद्यर्थश्च प्रमेय इति अनर्थसंनिकर्षजमपि ज्ञानं प्रत्यक्षं प्राप्तम् । विशेषणस्याऽर्थ्यमानस्य तत्र संनिकर्षाऽभावात् । न च तथा सम्भवति । कुतः ? प्रत्यक्षलक्षणविरहात् । इन्द्रियार्थसंनिकर्षोत्पन्नमिति हि तल्लक्षणम् । अथ मा भूत् लक्षणं विशेष्येन्द्रियसंनिकर्षमात्रात्तज्जन्निष्यते, लप्स्यते च प्रत्यक्षं वैशद्यादित्यत आह—इन्द्रियस्याऽर्थाऽपेक्षत्वादिति तत्त्वज्ञानोत्पत्तौ यत्तदवोचाम तत्त्वविज्ञानजननमिन्द्रियाणामर्थसहकारितया नियतमिति ।

तदेतत्समुत्थानं शङ्कते—अथ तेषु देशविशेष एव प्रमेयो न तद्विशेषणम् अतीतादि । तथा च न प्रत्यक्षलक्षणविरहोऽर्थ्यमानेन्द्रियसंनिकर्षात् । उत्तरं—न तर्हि देशाद्यालम्बनेन ज्ञानेनाऽनुत्पन्नादिवेदिनो ध्यायिनः । यदि मन्येत प्रमेयैकदेशसंनिकर्षादेव ध्यायिनो ध्यानसंस्कृतस्वान्तवृत्तयो युञ्जाना विश्वमेव

स्यात् । सर्वस्येन्द्रियसन्निकृष्टं प्रति कथंचिद्विशेषणत्वोपपत्तेः । अनुमानलक्षणाऽभावेऽपि प्रत्यक्षविद्यमानाऽर्थस्मृतौ प्रत्यक्षप्रसङ्गः । संस्कारस्तत्र कारणं नाऽर्थसत्ता । असत्यप्यर्थे भावात् । इतरत्रापि तुल्यम् । योगजधर्मस्य हेतुत्वात् । न हि तत्राऽर्थोपयोगे प्रमाणम् । सन्निहितेऽसंनिहिते, व्यवहितेऽव्यवहिते, वर्तमानेऽवर्तमाने च सर्वत्र योगिप्रत्यक्षोत्पादाऽभ्युपगमात् । वर्तमानदेशाद्यालम्बनत्वं लिङ्गाद्यभावे इति वदता संप्लवो निरस्तः स्यात् । उत्सूत्रं च कल्पितमनुमानादिति बाधनासूत्रं कल्पितम् । अनुमानादिबाधना-

वर्त्तमानाऽवर्त्तमानं कथंचिदिन्द्रियसंनिकृष्टं प्रमेयैकदेशविशेषणतया साक्षात्करिष्यन्तीति, तत्राह—प्रमेयैकदेशसंकिर्षात्तु कथंचिद्विशेषणींभू[1]तावर्त्तमानविश्वविषयप्रत्यक्षज्ञानोदये सर्वः सर्वप्रत्यक्षदर्शी स्यात्सर्वस्येन्द्रियसन्निकृष्टमर्थं प्रति कथंचिद्विशेषणत्वोपपत्तेः । उक्तं हि—'नाऽन्यत्र योगः प्रभवती'ति । अनुमानलक्षणाऽभावे च अनुमानलक्षणाऽनवरुद्धे विषये प्रत्यक्षलक्षणे व्यवस्थाप्यमाने प्रत्यक्षे कस्मिंश्चित् सदृशे गवयादौ दृष्टे संस्कारबोधात्सदृशान्तरस्य गवादेरर्थस्य विद्यमानस्य स्मृतौ प्रत्यक्षप्रसङ्गः ।

सम्भवति हि गवादेरपि हि विद्यमानस्य कथंचित् प्रत्यक्ष[2]गवयादिविशेषणत्वमिति शङ्कते—संस्कारस्तत्र स्मृतौ कारणं नाऽर्थसुत्ता । कुतः ? असत्यप्यर्थे सति संस्कारे स्मृतेर्भावात् । उत्तरम्—इतरत्रापि तुल्यम् । कुतः ? अर्थसत्तानिरपेक्षस्य योगजधर्मस्य हेतुत्वात् । तद्दर्शयति—न हि तत्र योगिनां सर्वविषयप्रत्यक्षजन्मनि समस्तार्थोपयोगे[3] प्रमाणम् । कस्मात् ? संनिहितेऽसंनिहिते, व्यवहितेऽव्यवहिते, वर्त्तमानेऽवर्त्तमाने च सर्वप्रकारे योगिप्रत्यक्षोत्पादाऽभ्युपगमात् शास्त्रे ।

यद्युच्यते अतीतादिविशिष्टसंनिहितवर्त्तमानदेशाद्यालम्बने तत्राऽतोतादिगोचरमिति, तत्राह—वर्त्तमानदेशाद्यालम्बनत्वं योगिज्ञानस्यातीतादिविशिष्टाऽर्थग्राहिणः प्रत्युक्तमधस्तात् । अपि च प्रमाणत इति सर्ववचनोपसंग्रहार्थं तसिं प्रयुञ्जानेन तदर्थं चोपरिष्टात्तु विशदयता तत्र भवता पक्षिलस्वामिना प्रमाणेन प्रमाणाभ्यां प्रमाणैश्चैकस्यैव प्रमेयस्याऽऽत्मादेः प्रमितिरिति प्रमाणसंप्लवो दर्शितः, तद्व्याकोपश्च प्रसज्येतेत्यत आह—लिङ्गाद्यभावे प्रत्यक्षमिति वदता संप्लवः प्रमाणानां निरस्तः स्यात् । उत्सूत्रं च कल्पितम् । न खलु लिङ्गाद्यभाव इति उद्देशो लक्षणं परीक्षासूत्रं वा समस्ति ।

१. भूतवर्त्तमान । पु० पा० । २. गवादि । पु० पा० ।
३. अर्थक्रियायोगे २ पु० पा० ।

न्नोत्सूत्रमिति चेत्। शब्दनिवृत्त्यर्थमव्यपदेश्यपदव्याख्यानमयुक्तम्। षड्विधसन्निकर्षाभ्युपगम इन्द्रियग्रहणं चाऽनुमानादिनिवृत्त्यर्थमित्यादि पराहतं स्यात्। तस्मादक्षलिङ्गादिपरतन्त्रं मनः। सर्वं च परिपूर्णं चेल्लौकिकप्रमाणगोचरो लौकिकप्रमाण[1]व्यवहार्य्यपि परिपूर्णज्ञान इति न लोकोत्तरज्ञानाऽभिमतस्य विशेषः। स्पष्टाऽवभासं ज्ञानं यदि, न तत्र तस्योपयोगः। अथ निश्चयः, स इतरस्यापि प्रमाणतुल्यः। प्रमितेः प्रत्यक्षदर्शिनः सर्वार्थेषु

शङ्कते—अनुमानादिलक्षणप्रणयनबाधनान्नोत्सूत्रमिति चेत्? सूत्राऽऽहिताऽर्थसामर्थ्यलभ्यमपि तदर्थ एव, तन्मूलत्वादित्यर्थः। निराकरोति—शब्दनिवृत्त्यर्थमव्यपदेश्यपदव्याख्यानमयुक्तम्। भाष्यकारो हि शाब्दज्ञाननिवृत्त्यर्थम् अव्यपदेश्यपदं वर्णयांबभूव। तथा हि। यत्र प्रत्यक्षेण दृश्यमाने केसरादिमति वस्तुनि नागरिकेणाऽऽरण्यकं प्रत्युच्यते तुरङ्गोऽयमिति तत्राऽऽरण्यकस्तस्य वस्तुनस्तुरङ्गमपदवाच्यतामवैति, मानद्वयव्यापारात्। तथा हि। तुरङ्गमपदाऽभिधेय इत्येतावता शब्दः पुरोवर्तिनि च विशेषे तदभिधेयताश्रये इन्द्रियतदुपदेशस्य तत्र शब्दस्य प्रवृत्तेः। तच्चैतदुभयजमपि ज्ञानं शाब्दमेव, शब्दस्य तत्र साधकतमत्वात्। सत्यपीन्द्रियाऽर्थसंनिकर्षे शब्दाऽभावे तदनुपपत्तेः। असति तु तस्मिन्यदा सदेव वस्त्वनुभूतमारण्यकेनाऽनुस्मर्य सङ्केतं प्रतिपद्यते स केसरादिमान् पदार्थस्तुरङ्गम इति तदा वाक्ये सति तदवबोधात्। तस्मादुभयजस्य विज्ञानस्य शब्दस्य निवृत्त्यर्थमव्यपदेश्यपदव्याख्यातमयुक्तं स्यात्। लिङ्गाद्यभावे प्रत्यक्षलक्षणव्यवस्थापनात्, उभयजस्य शाब्दत्वेन प्रत्यक्षत्वप्रसक्त्यभावात्।

एतदुक्तं भवति। तदेव सूत्राऽभिहितसामर्थ्येन लभ्यते न यत्सूत्राऽवयवमुपहन्ति न तूपघातकमपीति, तथा देशकालविप्रकीर्णमात्रविषयप्रत्यक्षज्ञानाऽभ्युपगमो लिङ्गाद्यभावे प्रत्यक्षलक्षणम्, इन्द्रियग्रहणं चाऽनुमाननिवृत्त्यर्थमित्यादि पराहतं स्यात्। तद्विषयं प्रत्यक्षमित्यादिशब्दसूचितं पराहतं वेदितव्यम्। प्रकृतमुपसंहरति—तस्मादक्षलिङ्गादिपरतन्त्रं बहिर्मनः। अपि च सर्वं परिपूर्णं लौकिकं प्रमाणगोचरो न्यूनं वा? तत्र सर्वं च परिपूर्णं चेल्लौकिकप्रमाणव्यवहार्येऽपि परिपूर्णज्ञान एवेति न ततो लोकोत्तरज्ञानाऽभिमतस्य विशेषः।

शङ्कते—स्पष्टाऽवभासं ज्ञानं यदि विशेषः। एतदुक्तं भवति। पूर्णविषयमपि लौकिकमविशदाभमलौकिकं तु भावनाऽऽधेयविशदाभमित्यस्यास्ततो विशेष इति। निराकरोति—न। तत्र सर्वस्मिन् सम्पूर्णगृहीते न

१. प्रमाणाऽव्यवहार्य्यपि। पु० पा०।

नैराकाङ्क्ष्यं नेतरस्य। अप्रत्यक्षमपि यदि परिपूर्णं मानान्तरेण मितं किमन्यदाकाङ्क्षेदिति। न हि प्रमाणान्तराऽऽकाङ्क्षा, प्रमेयसिद्धयर्थत्वात्तदाकाङ्क्षायाः। पुनः प्रमेयसिद्धयर्थं प्रमाणान्तराकाङ्क्षा। न। पूर्वस्मादप्यसकृत्तत्सिद्धेः। सिद्धस्य पुनः सिद्धयपेक्षाहेत्वभावाच्च। उपायान्तरसद्भावश्चोपायान्तराकाङ्क्षैव स्यात्। प्रीति[1] विशेषश्चेत्पूर्वप्रमाणजाद्दर्शनात्सिद्ध्यतीति

स्पष्टाऽवभासस्योपयोगः। लौकिकप्रमाणाऽन्वितमर्थमवगमयता विस्पष्टं तेन पिष्टं पिष्टं स्यात्।

शङ्कते—अथ निश्चयः ? निराकरोति—स इतरस्यापि लौकिकस्य प्रमाणत्वेन तुल्यः। शङ्कते—प्रमितेः सर्वस्या एव प्रत्यक्षपरत्वात् सर्वार्थेषु नैराकाङ्क्ष्यं नेतरस्य प्रमाणान्तरेण समस्तवस्तुदर्शिनो लौकिकस्याऽप्रत्यक्षे सर्वस्मिन्नैराकाङ्क्ष्यम्। तथा हि प्रमाता आगमादर्थमवगम्य अनुमानात् बुभुत्सते अनुमाय च तं प्रत्यक्षेण दिदृक्षते। अथ साक्षात्कृत्य निराकाङ्क्षतामापद्यते। सेयं सर्वैव प्रत्यक्षप्रमितिः प्रमातॄणाम्। निराकरोति—अप्रत्यक्षमपि यदि मानान्तरेण परिपूर्णमितं किमन्यदाकाङ्क्षेदिति। यत्र खल्वनुमायाऽपि प्रत्यक्षेण दिदृक्षते न नूनं तत्राऽनुमानेन सम्पूर्णप्रमेयाऽधिगतिरभूत् तद्भावे दिदृक्षाऽनुपपत्तेः। यथाहुरत्रभवन्तो वार्त्तिककारमिश्राः।

यावदज्ञातसन्दिग्धं मेयं तावत्प्रमित्स्यते।
प्रमिते तु प्रमातॄणां प्रमोत्सुक्यं विहन्यते ॥ इति।

अथ मानान्तरमाकाङ्क्षति तत्राह—न हि प्रमाणान्तराऽऽकाङ्क्षा। कुतः ? प्रमेयसिद्धयर्थत्वात्तदाकाङ्क्षायाः। हिताऽहितप्राप्तिपरिहारार्थिनो हि तदुपायमर्थयन्ते, स च प्रमाणाऽधीननिरूपण इति प्रमाणमनुसरन्ति, स चेत् कुतश्चित्प्रमाणात्सिद्धः कृतं तर्हि प्रमाणान्तरानुसरणेन तेषाम्। तथापि चेदनुसरन्ति नूनं प्रमेयान्तरमप्यमी बुभुत्सन्ते इत्यर्थः। अथ ततः प्रमेयसिद्धावपि तस्याऽऽशुतरविनाशित्वेन[2] पुनस्तत्प्रमेयसिद्धयर्थं प्रमाणान्तराकाङ्क्षां निराकरोति—न। पूर्वस्मादप्यसकृत्तत्सिद्धेरनेकजन्मपरम्पराऽऽयाससाध्ययोगजविज्ञानगोचरप्रयत्नाऽनुपपत्तेः। कुतश्चित्सिद्धस्य पुनः प्रमाणान्तरात्सिद्धयपेक्षाहेत्वभावाच्च। तदनुभवभावितभावनोद्बोधवशादेतद्विषयस्मृतिसन्तानसम्भवात्।

शङ्कते—विचित्राऽभिसन्धित्वात् प्रमातॄणामुपायान्तरसद्भावस्तस्मिन्प्रमेये विशेषणतया बुभुत्सिते चेत्। निराकरोति—तर्हि प्राप्ताऽप्राप्तविवेकेन उपायान्तराऽऽकाङ्क्षैव स्यात् न प्रमेयान्तराऽऽकाङ्क्षा। शङ्कते—

१. प्रतीति. मू० पा०। २. आशुतरस्याशुतरविनाशित्वेन २ पु० पा०।

व्यर्थं प्रमाणान्तरम् । उपायान्तरसद्भावाच्च पुनर्जिज्ञासमानं दृष्टमपीतरै-र्जिज्ञासेत, विशेषनिश्चयात्मकं प्रत्यक्षमनिश्चयात्मकमनुमानादिति व्यभि-चारात् । अप्रमितत्वादेव तर्ह्याकाङ्क्षा । व्यभिचारिणोऽनिश्चयात्मकस्याऽ-प्रमाणत्वात् । भानादियोग्यं प्रत्यक्षं सन्निकर्षान्नाऽनुमानादि । सन्निकर्षसाधनं तर्हि गमनाद्यपेक्षतां न तु प्रमासाधनं, सिद्धत्वात्प्रमायाः प्रमिते च सन्निकर्षस्य भानादिहेतुत्वात् । प्रकृतं च प्रत्यक्षमसन्निकृष्टगोचरमिति न नैराकाङ्क्ष्या-याऽलमित्यविशेष एव लौकिकलोकोत्तरयोः प्रमात्रोः । अनुमानादेः सामान्य-विषयत्वात्प्रत्यर्थनियतात्मविशेषाऽनवधारणात् साकाङ्क्षत्वं लौकिकस्य

प्रीतिविशेषश्चेत् । यथा हि श्वश्रूरेकेन गवाक्षेण वीक्ष्य जामातरमपरेण वीक्षते प्रीतिविशेषात् तथेदमपीत्यर्थः । निराकरोति—सुकरे पूर्वप्रमाण-जादपि पुनर्दर्शनात्सिध्यतीति व्यर्थं प्रमाणान्तरम् । अत्यन्तदुष्करमपि चोपायान्तरसद्भावाच्च पुनर्जिज्ञासमानं प्रत्यक्षदृष्टमपीतरैरनुमानादिभिरयं विचित्राऽभिसन्धिः प्रतिपत्ता जिज्ञासेतेति न प्रत्यक्षपरा सर्वप्रमितिः । प्रत्यक्षपरत्वमिच्छता वाच्यो विशेषः प्रत्यक्षस्य मानान्तरेभ्यः । अथाऽय-मुच्यते निश्चयात्मकं प्रत्यक्षं विशदत्वादनिश्चयात्मकमनुमानादि व्यभिचार-दर्शनात् । तदिदमनुपपन्नम् । अनुमानादेरपि यथोक्तलक्षणोपपन्नस्य व्यभि-चाराऽभावात् । आभासव्यभिचार[1]स्तु प्रत्यक्षेऽपि तुल्य इत्यनभिधाय स्थूलनिराकरणान्तरमाह[2]—अप्रमितत्वादेव तर्ह्याकाङ्क्षा । कुतः ? व्यभि-चारिणोऽत एवाऽनिश्चयात्मकस्याऽप्रमाणत्वात् । शङ्कते—भानादियोग्यं प्रत्यक्षम् । कुतः ? सन्निकर्षाद्विषयस्य सन्निहितत्वात् असन्निधाने तदनु-पपत्तेः । न पुनरेवमनुमानादि । तस्य देशकालविप्रकीर्णवस्तुगोचरत्वात् । निराकरोति—सन्निकर्षसाधनं तर्हि गमनाद्यपेक्षतां न तु प्रमासाधनम् प्रमाणम् । कुतः ? अनुमानादेरेव सिद्धत्वात्प्रमायाः । न च प्रमैव भानादिहेतुरित्याह—सन्निकर्षस्य प्रमाण[3]मात्रसहायस्य भानादिहेतुत्वात् । अपि च प्रकृतं प्रत्यक्षं देशकालविप्रकीर्णवस्तुमात्रविषयमसन्निकृष्टवस्तुगोचर-मिति न नैराकाङ्क्ष्यायाऽलमिति । तस्मादविशेषो लौकिकलोकोत्तरयोः प्रमात्रोः सर्वप्रमायाम् ।

पुनः शङ्कते—गृहीतसम्बन्धलिङ्गादिप्रभवतया[4] विशेषे च सम्बन्ध-संवेदनाऽनुपपत्तेः अनुमानादेः सामान्यविषयत्वात्प्रत्यर्थनियताऽनन्तविशेषाऽ-

१ अथ व्यभिचारः २ पु० पा० ।
२ इति स्थूल...याऽनभिधाय दूषणान्तरमाह २ पु० पा० ।
३ संनिकर्षप्रमाण २ पु० पा० । ४ लिङ्गावितरथा २ पु० पा० ।

प्रमातुः। लौकिकोत्तरस्याऽपि कालरूपाऽवधारणान्नैराकाङ्क्ष्यमिति नाऽविशेषः। यदि तर्हि लौकिकं प्रमाणं विकलवस्तुविषयः लोकोत्तरमपि भावनामयं तत्परतन्त्रं न तद्‌गोचरयितुमर्हति। स्वातन्त्र्यं तु बहिर्मनसो नेत्यावेदितमेव। तस्मात्सर्वं मनसो विषया इति प्रलापः। अपि च—

मिथ्यैव वर्तमानाभं न तु प्रत्यक्षमन्यथा।
क्रमाऽक्रमौ न कल्पेते न प्रमेयं निरूप्यते ॥

कालत्रयपरिवृत्त्यर्थगोचराणि मानान्तराणि वर्तमानविषयं प्रत्यक्षं तत्र वर्तमानात्मना पश्यतो मिथ्याज्ञानं, सर्वस्याऽतथाभावात्। यथार्थं तु पश्यतो न प्रत्यक्षम्। अतीताऽनागतविषयत्वाऽभावात् तस्य। अथ वाऽवश्यमनेन बहुविधस्य प्रत्यक्षस्यैकं लक्षणं वाच्यम्। अन्यथा प्रमाणान्तरत्वाऽभिधानम-

नवधारणात् साकाङ्क्षत्वं लौकिकस्य प्रमातुः। लोकोत्तरस्य त्वविकलरूपसर्वाऽवधारणादप्रमितस्य वस्तुनो ऽभावान्नैराकाङ्क्ष्यमिति नाऽविशेषः। दूषयति—यदि तर्हि लौकिकं प्रमाणं नाऽविकलवस्तुविषयं, लोकोत्तरमपि भावनामयं भवानया कृतं तत्परतन्त्रम्, भावना च विकलविषयलौकिकप्रमाणपरतन्त्रेति न तदविकलं गोचरयितुमर्हति। न च भावनाऽऽहितसंस्कारं मनो बहिः स्वतन्त्रं प्रवर्तत इत्याह—स्वातन्त्र्यं तु बहिर्मनसो नेत्यावेदितमेव। एतच्च बौद्धसर्वज्ञपरीक्षायां निपुणतरमुपपादितम्। प्रकृतमुपसंहरति—तस्मात्सर्वं मनसो विषय इति प्रलापः। अपि च।

मिथ्यैव वर्तमानाभं न तु प्रत्यक्षमन्यथा।
क्रमाऽक्रमौ न कल्पेते न प्रमेयं निरूप्यते ॥

यथा लोकप्रतीतिकालत्रयपरिवृत्त्यर्थविषयाणि मानान्तराण्यनुमानादीनि वर्तमानविषयं प्रत्यक्षं तत्र सर्वज्ञस्य प्रत्यक्षेण सर्वं वर्तमानात्मना पश्यतो मिथ्याज्ञानम्। कुतः? सर्वस्याऽतीताऽनागतवर्त्तमानस्याऽतथाभावात् वर्तमानत्वाऽभावात्। यथार्थं तु पश्यतोऽतीतादित्वेन पश्यतो न तद्विषयं ज्ञानं प्रत्यक्षं स्यात्। अतीताऽनागतविषयत्वाऽभावात् तस्य प्रत्यक्षस्य। प्रत्यक्षता हि वर्तमानविषयतया व्याप्ता। वर्तमानविषयता चातीताऽनागतविषयाद्विज्ञानान्निवर्तमाना प्रत्यक्षत्वमपि निवर्तयतीत्यर्थः।

न तु प्रत्यक्षमन्यथेत्यस्याऽन्या व्याख्या। अथ वा अवश्यमनेन बहुविधस्य प्रत्यक्षस्यैकं लक्षणं वक्तव्यम् अन्यथा यद्येकं लक्षणं नोच्येत तस्य प्रत्यक्षस्याऽपरिगृहीतस्यैकस्याऽनुमानादिभ्यः प्रमाणान्तरत्वाऽभिधानमप्रत्ययकारणकं स्यात्। यदि पुनरसालक्षण्येऽपि प्रत्यक्षमेकं प्रमाणमभ्युपेयेत ततः

९

प्रत्ययं प्रमाणान्तराऽभ्युपगमो वा परिभाषाप्रयोजनाऽभावात्। भिन्नलक्षणेष्वपि केषुचिल्लौकिकाः प्रत्यक्षशब्दं प्रयुञ्जते इति मिथ्यालोकोत्तरे तदयोगात्। तत्र नाऽक्षजत्वं लक्षणं मनसोऽतिव्याप्तेः। तस्मादिन्द्रियार्थसन्निकृष्टाऽर्थजत्वं तल्लक्षणम्। यथोक्तम्। 'अर्थसामर्थ्येन समुद्भवादिन्द्रियाऽर्थसन्निकर्षोत्पन्नं सत्संप्रयोग इति'। मनसोऽक्षत्वे सुखादिज्ञानव्याप्तेः अर्थसामर्थ्यजत्वेन अनुमानादिव्यवच्छेदात्। न च सूक्ष्मविप्रकृष्टव्यवहितानां ज्ञानोत्पत्तौ सामर्थ्यमिति न सर्वविषयप्रत्यक्षस्योपपत्तिः। कल्पनाऽपोढत्वं

प्रमाणान्तराऽभ्युपगमो वा प्रत्ययः स्यात्। भिन्नलक्षणानामपि प्रत्यक्षत्वेऽनुमानादीनामपि प्रत्यक्षत्वप्रसङ्गात् न मानान्तराणि तान्यभ्युपेयेरन्नित्यर्थः। यदुच्येत भिन्नत्वाऽविशेषेऽपि द्रव्यगुणकर्म्मणामेवाऽर्थशब्दाऽभिधेयता परिभाषिता न सामान्यविशेषसमवायानाम्। एवं कासुचिदेव ज्ञानव्यक्तिषु प्रत्यक्षशब्दः परिभाषितो नाऽनुमानादिव्यक्तिष्वित्यत आह—परिभाषाप्रयोजनाऽभावात्। अप्रयोजनस्य परिभाषणेऽतिप्रसङ्गादित्यर्थः। भिन्नलक्षणेष्वपि केषुचिल्लौकिका वाचकमेव प्रत्यक्षशब्दं प्रयुज्जते। न खल्वेते पर्यनुयोज्याः। यथा जातित्रये अक्षशब्दमेकमित्यपि मिथ्या। कुतः? लोकोत्तरे भवदभिमते लोकोत्तरत्वादेव तस्य लौकिकप्रयोगस्याऽयोगात्। तदवस्थितं प्रत्यक्षलक्षणमेकं वक्तव्यमिति।

ननूच्यते अक्षजत्वं नाम प्रत्यक्षाणामेकं लक्षणं, तथा च सर्वज्ञज्ञानं मनोऽभिधानाऽक्षप्रभवमिति नाऽतिवर्तते प्रत्यक्षतामित्यत आह—तत्र नाऽक्षजत्वं लक्षणम्। कुतः? तथा हि—मनोनामाऽक्षं न वा। तत्र मनसोऽक्षत्वेऽनुमानाद्यपि मनोजन्मैवेति तस्यापि प्रत्यक्षत्वं प्रसक्तमित्यतिव्याप्तेर्न लक्षणम्। अनक्षत्वे वा सुखादिज्ञानस्य बाह्येन्द्रियाऽजनितस्याऽप्रत्यक्षत्वप्रसक्तेरव्याप्तेः। तस्मादिन्द्रियाऽर्थसामर्थ्यजत्वमेव तत्प्रत्यक्षलक्षणमास्थेयं सर्वैरेव वादिभिः॥

अत्रैव सर्वेषामनुमतिं दर्शयति—यथोक्तमर्थस्य सामर्थ्येन समुद्भवात्। अन्धादीनामनुपपत्तेरिन्द्रियस्येत्यपि शेषः। तथेन्द्रियार्थसन्निकर्षोत्पन्नं तथा सत्सम्प्रयोग इति। एवं च सति नाऽव्याप्तिः। मनसोऽक्षत्वे सति सुखादिज्ञानव्याप्तेर्नाऽतिव्याप्तिः। अर्थसामर्थ्यजत्वेनाऽनुमानादिव्यवच्छेदात्। नन्वेवमपि सर्वविषयं विज्ञानं कस्मान्न प्रत्यक्षम्? इत्यत आह—न च सूक्ष्मविप्रकृष्टव्यवहितानामर्थानां विज्ञानोत्पत्तौ सामर्थ्यमिति न सर्वविषयप्रत्यक्षतोपपत्तिः।

प्रत्यक्षलक्षणमिति चेत्। केयं कल्पना ? यदि शब्दाभासा प्रतीतिः, श्रौत्रं ज्ञानमप्रत्यक्षम् अथाऽभिलापसंसर्गयोग्यप्रतिभासा।

शङ्कते—कल्पनापोढत्वं प्रत्यक्षलक्षणमिति चेत्। इदं खल्वनुमानादिभ्यो विकल्परूपेभ्यः प्रत्यक्षतां निवर्त्तयति व्यवस्थापयति च सुखादिषु ज्ञानरूपतया स्वसंवेदनसिद्धेष्वपोढेषु कल्पनायाः प्रत्यक्षत्वं, सङ्गृह्णाति च सर्वज्ञविज्ञानमखिलं कल्पनानिर्मुक्तमित्यर्थः।

तदेतद्यथासम्भवं विकल्प्य दूषयति—केयं कल्पना यस्या अपोढत्वमुच्यते प्रत्यक्षत्वं ? यदि शब्दाऽऽभासा शब्दाऽऽकारप्रतीतिः श्रौत्रं ज्ञानं शब्दविषयं विशदाभमप्रत्यक्षं प्रसज्येत। अथाऽभिलापसंसर्गयोग्यप्रतिभासा प्रतीतिः कल्पना।

अयमर्थः। अभिलापसंसर्गयोग्यः प्रतिभास आकारो यस्याः प्रतीतेः सा कल्पना। एतदुक्तं भवति। स एवाऽभिलापसंसृष्टो[1] भवति यत्राऽयमभिलापः कृतसङ्केतः। स एव च तथा यो देशकालाऽवस्थाऽनुगतः प्रतिभासते। न च वस्तुसतः स्वलक्षणस्याऽनुगतिः सम्भाविनी। न च जात्यादयो वस्तुसन्तः सम्भवन्ति। विचाराऽसहत्वात्। अत एव तद्वन्तोपि भेदा न तात्त्विकाः। तदभावे तद्वत्ताऽनुपपत्तेः। तस्मात् स्वाऽऽभासं वा अलीकं वा बाह्यं पश्यन्ति यादृशम् एको गोविकल्पः तादृशमेव गोविकल्पान्तरमपि। न च स्व[2]विषयविकल्पान्तरविषयाद्भेदस्तेनैव गृह्यते नापि विकल्पान्तरेणेति भेदाऽग्रहादेको विकल्पविषयः। तदेकत्वाद्विकल्पानामप्येकत्वम्। तदेकविकल्पनिर्माणसामर्थ्याच्चाऽनुभवानामप्येकत्वम्। तदेकत्राऽतद्धेतूनां व्यक्तीनाप्येकता यथाऽऽह—

एकप्रत्यवमर्शस्य हेतुत्वाद्धीरभेदिनी।
एकधीहेतुभावेन व्यक्तीनाप्यभिन्नता॥ इति।

तच्चा[3]ऽऽरोप्यमाणं रूपमन्यव्यावृत्तिस्वभावं भावाऽभावसाधारणत्वाच्चाऽत्यन्तविसदृशानां सादृश्याऽऽपादाकत्वाच्चाऽबाह्यसादृश्याच्च। तथा हि। यद्भावाऽभावसाधारणं रूपं तदन्यव्यावृत्तिनिष्ठमेव यथा मूर्त्तत्वादि। तथा च गवादि विकल्पविषय इति स्वभावहेतुः। साधारणं खल्वेतद्गोत्वादि भावाऽभावयोः, अस्ति गौर्नास्ति गौरिति विकल्पास्पदत्वात्। असाधारण्ये तदनुपपत्तेः विरोधपौनरुक्त्याभ्याम्। तथा यदत्यन्तविसदृशानां सादृश्य-

१. संस्पृष्ट इति २ पु० पा०।
२. अपि स्वस्य स्वस्येति २ पु० पा०। ३. तत्रेति २ पु० पा०।

सामान्याकारस्वसंवेदनेप्यप्रत्यक्षत्वम् । अथ वस्तुनि वस्त्वन्तरयोजना, सामान्याऽऽकारप्रतीतेः प्रत्यक्षत्वम् । सामान्यस्य वस्त्वन्तरस्याऽनभ्युपगमात् ।

मापादयति तदन्यव्यावृत्तिनिष्ठमेव, यथा वराहमहिषमातङ्गादीनामत्यन्तविसदृशानामक्रमेलकत्वम्[1] । तथा च अत्यन्तविसदृशानां शावलेयादिस्वस्वलक्षणानां गोत्वमिति स्वभावो हेतुः । तथा ज्ञानप्रतिभासस्य वा अलोकस्य वा बाह्येन वा परमार्थतो वाऽत्यन्ताऽसद्रूपेण सादृश्यमन्यव्यावृत्तिकृतमेव कल्पते नाऽन्यथा । अत एव ज्ञानाऽऽभासो वाऽलीकं वा गोत्वं प्रति विकल्पं विद्यमानं[2] सदृशतयाऽनाकलितभेदमप्यश्वादि विकल्पविषयव्यावृत्तमेव वाह्यतयाऽऽरोप्यत इति नाऽन्यव्यावृत्तिरूपताऽस्य न प्रथते । न चाऽनिरूपितेनाऽगवा तद्व्यावृत्तिरूपगोनिरूपणाद् गोनिरूपणाऽधीनत्वाच्चाऽगोनिरूपणस्याऽन्योन्याश्रयमिति साम्प्रतम् । अन्यतरस्याऽन्यतः प्रसिद्धेः । गोरूपस्य विज्ञानाऽऽकारस्य वा अलीकस्य वाऽन्यतो व्यावृत्तिर्न पुनरस्य तदधीनं निरूपणम् । अन्यथा सामान्येऽपि पारमार्थिके दोषस्य साम्यात् । तस्मात् ज्ञानाकारो वा अलीकं वा वाह्यत्वेनाऽवसितं संकेतसम्भवाद्भवति शब्दसंसर्गयोग्यं तद्विषया व्युत्पन्नानां च प्रतीतिः कल्पनेति । तज्ज्ञानाकारवादिनां कल्पनां दूषयति—सामान्याकारस्वयंवेदनेऽप्यप्रत्यक्षम् ।

इदमभिसंहितम् । ज्ञानाऽतिरिक्तस्य वेदनाऽनुपपत्तेरन्यव्यावृत्तिरूपं सामान्यं ज्ञानाकार इति निरूपितं साऽऽकारवादिभिः । न च तद्वाह्यत्वं विकल्पस्य ग्राह्यमध्यवसेयं वा सम्भवतीति निवेदयिष्यते 'न निरालम्बनं ज्ञान'मित्यत्रान्तरे । तत्पारिशेष्यात् ज्ञानाऽऽकारसामान्यस्य स्वसंवेदनेऽपि विकल्पनीयतया स्यादप्रत्यक्षता प्रागेव ताद्वाह्यतायास्तस्या अग्राह्याया अनध्यवसेयाश्च सर्वथा विकल्पगोचरत्वादिति ।

सम्प्रति निराकारज्ञानवादिनां[3] मतमाशङ्कते—अथ वस्त्वन्तरस्य रजतादेः पुरोवर्तिनि शुक्तिकादौ यो जनो रजतमिदमिति विज्ञानकल्पनां निराकरोति सा सामान्याऽऽकारा प्रतीतिः सामान्यमाक्रियते व्यज्यते यया प्रतिपत्त्या सा प्रत्यक्षं स्यात् कुतः ? सामान्यरूपस्य वस्त्वन्तरस्याऽनभ्युपगमात् । यथाह—

> तस्यां यद्रूपमाभाति वाह्यमेकमिवाऽन्यतः ।
> व्यावृत्तमिव निस्तत्त्वं परीक्षाभङ्गभावतः ।। इति ।

---

१. विसदृशानां पशुत्वम् । २ पु० पा० ।
२. भिद्यमानम् २ पु० पा० । ३. बिम्बाकारज्ञानवादिनाम् २ पु० पा० ।

अथाऽभिधानयोजना, अव्युत्पन्नाऽभिधानस्य तथा स्यात् ।

अथाऽरूपस्याऽऽरोपः कल्पनापोढं रूपमात्रवेदनं प्रत्यक्षम् । न तर्ह्यजाताऽतिवृत्तेषु योगिनोऽन्यस्य वा ज्ञानं प्रत्यक्षम् । ज्ञानप्रतिभासिनो रूपस्य तेष्वभावात् । भावे वा प्रत्युत्पन्नत्वाऽऽपातात् ।

शङ्कते—अथाऽभिधानयोजना । अभिधेये कल्पनां निराकरोति—अव्युत्पन्नाऽभिधानस्य पुंसो याऽभिलापसंसर्गयोग्यप्रतिभासा प्रतीतिः शब्दयोजनारहिता सा तथा प्रत्यक्षं स्यात् । न चेष्यते । शङ्कते—अथाऽरूपस्याऽलीकस्याऽऽरोपो वाह्यत्वेन कल्पना । यथोक्तं भदन्तेन 'बुद्धचा कल्पितया विविक्तमपरैर्यद्रूपमुल्लिख्यते तद्बुद्धिर्न वहि'रिति । इयं च कल्पना व्युत्पन्नानामव्युत्पन्नानां च साधारणी । तेन तदपोढं रूपमात्रवेदनं प्रत्यक्षम् । तथा च नोक्तदोषप्रसङ्ग इति । निराकरोति—न तर्ह्यजाताऽतिवृत्तेषु योगिनोऽन्यस्य वा ज्ञानं प्रत्यक्षम् । कुतः ? ज्ञाने प्रतिभासिनो रूपस्य तेष्वजाताऽतिवृत्तेष्वभावात् । कस्मादभाव? इत्यत आह—भावे वा प्रत्युत्पन्नत्वाऽऽपातात् ।

अयमभिसन्धिः । न खलु विकल्पानामलीकप्रकाशनेऽपि समानविषयत्वसम्भवः । प्रतिविकल्पमलीकस्याऽभेदात् । ननूक्तं भेदेऽप्यलीकानां यादृशमेको गोविकल्पः कल्पयत्यलीकं तादृशमेवाऽपर इति भेदाऽग्रहादलीकानां भेदा-[1] ऽवसाय इति । सत्यमुक्तमिदं त्वालोचनीयम् । किमलीकात्मनामस्ति तत्तिरोहितं स्वरूपं यदेषु प्रथमानेष्वपि न प्रथते, नास्ति वा ? न तावदवस्तुसतां कल्पनामात्राऽधीनमूर्तीनां कल्पनाऽनुपदर्शितरूपसम्भवः । तस्याऽकल्पितत्वेन वस्तुसतोऽलीकरूपत्वाऽनुपपत्तेः । तस्मादप्रथमानं नास्तीति वेदितव्यम् । यथा च नास्तितैव पारमार्थिको तेषाम् । अस्तिता पुनः कल्पनामात्रमापतेत् । ननु भेदाऽग्रहादभेदाऽध्यवसायो विकल्पविषयाणामित्यन्य एवैषां विषय आश्रयणीयः । यः शब्दः संसर्गयोग्यः स्यात् प्रतिविकल्पं त्वलीकानां भेदात्स्वलक्षणवदशक्यसमयतया अभिलापसंसर्गयोग्यत्वाऽभावेन विकल्पगोचरत्वाऽनुपपत्तेः । न चाऽभेदस्यापि सम्भवः । न खलु कल्पनामात्राऽधीनसत्त्वस्य तद्भेदात् एकत्वमुपपद्यते । तद्धि तस्यां तदिव तज्जन्मनि जातमिव तद्विनाशे विनाशि चेति कथं तद्भेदो न भिद्येत । भेदश्चेदशक्यसमयतयाऽभिलापसंसर्गयोग्यत्वाऽभावेनाऽलीकं तद्वाह्यभावात् स्वलक्षणवन्न विकल्पगोचर इति नाऽऽत्माकारो नाऽलीकं न तद्वाह्यता न स्वलक्षणं बुद्धे-

---

१. अलीकान्यतमभेदेति २ पु० पा० ।

विषयः। सर्वेषामशक्यसमयतयाऽभिलापसंसर्गाऽनर्हत्वात्। न चाऽगोव्यावृत्तिरूपतयाऽलीकानामभेदः केषांचिदिति साम्प्रतम्। तत्स्वभावत्वे तेषामन्योन्याश्रयदोषेण ग्रहणाऽभावप्रसङ्गात्। यथाहाऽत्रभवान्वार्त्तिककारः।

सिद्धश्च गौरपोह्येत गोनिवृत्त्यात्मकश्च सः।
तत्र गौरेव वक्तव्योऽन्यतायाः प्रतिषिध्यते।
गव्यसिद्धे त्वगौर्नास्ति तदभावे न गौः कुतः॥ इति।

न चेयमन्यव्यावृत्तिरपि कल्पनानिर्मिता तद्भेदे भेदवती साधारणी भवितुमर्हति। अतएव च विधिरूपमपि विकल्पते गोत्वम्। यत्किल विजातीयमात्रव्यावृत्तं परमार्थसतः सजातीयाऽसजाती[1]यव्यावृत्तात्स्वलक्षणात् भिन्नमप्यभेदेनाऽवसितम्। यथोक्तं 'यथाऽभिनिवेशाऽऽयत्तत्वात् यथातत्त्वं च समीहितत्वा'दिति। तदपि न विकल्पास्पदम्। अस्यापि ज्ञानाऽऽकारस्याऽलीकस्य वा प्रतिविकल्पं भेदेन विकल्पनीयताऽनुपपत्तेः।

यदि मन्येत यथैवासद् रूपं सदात्मना प्रथते तथैकत्वरहितमप्येकत्वेन प्रकाशते। न चैतावताऽस्य भेदः। तस्यापि वस्त्वधिष्ठानतया कल्पितेऽनुपपत्तेः। तस्मादेतद्गोत्वादि न भिन्नं नाप्यभिन्नम्, संभिन्नं तु वाह्यतया प्रकाशते। तथा च सिद्धाऽभिलापसंसर्गयोग्यताऽस्येति। तत्किं य एवैकस्य विकल्पस्य विषयः स एव विकल्पान्तरस्यापि? ओमिति चेत्। तस्यापि विकल्पनाऽधीनदेहत्वात्। इदमेव हि कल्पितस्य कल्पनाऽधीनत्वं यत्कल्पनाभेदाऽभेदाद्यनुविधानं नाम। तदनधीनत्वे तु कल्पितत्वाऽनुपपत्तेरनलीकत्वप्रसङ्ग इत्युक्तम्। यच्चाऽलीकस्य न भाविके नाऽनलीकत्वे इति। तत्र सर्वप्रतीयमानाऽवस्थायां त्वापादयामः, न भिन्नकल्पनाऽनुशयि शक्यमेकत्वेन प्रतिपत्तुम्। तदनुपातित्वाऽनुपपत्तेः। कल्पनायां प्रथनान्तरेण तस्य तत्त्वाऽसम्भवात्।

स्यादेतत्। कल्पनैव स्वहेतोस्तथाभूतोपजाता यया स्वविषयः केषुचिदेक इति केभ्यश्चिद्व्यावर्तत इव प्रदृश्यते। नन्वेवंविधोऽपि किं विकल्पान्तरविषयो न? न चेद् नाऽभिलापसंसर्गयोग्यः। तस्याऽदृष्टपूर्वस्याऽशक्य-[2]समयत्वात् विकल्पान्तरविषयत्वे वा तदधीनत्वाऽनुपपत्तिरित्युक्तम्। अपि चाऽत्यन्ताऽसतो गोत्वादेः स्वभावभेदभाजो न प्रकाशसम्भवः। गगननलिननरविषाणादीनामपि नात्यन्ताऽसत्ता। संसर्गभेदमात्रस्याऽसत्त्वात्। संसर्गिणां तु गगनादीनां नलिनादीनां च तत्र तत्र सद्भावात्। संसर्गमात्रस्य च क्वचित्सद्भावात् तत्रापि च कथंचिदुपपत्तेः। अत्यन्ताऽसतां

१. विजातीय २ पु० पा०। २. तस्याशक्य० पु० पा०।

आरोपितरूपाऽनुकारित्वात्तत्र कल्पनात्वप्राप्तेः। न ह्यविद्यमानरूपानुकारादन्यो ज्ञानस्याऽऽव्यारोपः। ननु निरधिष्ठान आरोपोऽतो वस्तुनोऽन्यरूपप्रतीतिः कल्पना। निरधिष्ठानं तर्हि तैमिरकस्य केशादिज्ञानं

संसर्गभेदानां सद्रूपसंसर्गिभेदाऽधीननिरूपणतया परस्परव्यावृत्तरूपाऽवभाससम्भवात्। इह तु स्वलक्षणज्ञानाऽधीननिरूपणानां गोत्वादीनां स्वलक्षणं, तद्विज्ञानव्यक्तीनामत्यन्तव्यावृत्तेः। भेदे सत्यभिन्नत्वाऽनवभासनात् अर्थक्रियायाश्चैकत्वाऽनुपपत्तेः। अतद्व्यावृत्तेश्च परस्तादाश्रयप्रसङ्गेनाऽनवकल्पनात्। न च कल्पितस्य गोत्वस्य विधिरूपस्याऽन्यव्यावृत्तिरूपस्य वाऽभिलापसंसर्गयोग्यता। ननु परमार्थसत्सामान्याऽभिधानेऽपि भावाऽभावसाधारण्यं न कल्पते। तदाश्रयाणां व्यक्तीनां तल्लक्षितानां देशकालविप्रकीर्णतया शब्दार्थस्य भावाऽभावसाधारण्यसंम्भवात्। न चाऽत्यन्तवैधर्म्यं व्यक्तीनां, येनाऽन्यव्यावृत्तिरेव साधर्म्यममूषामाश्रीयेत। सामान्यस्यैव वस्तुसत आश्रयभूताऽवसितस्य समानस्य धर्मस्योपपत्तेः। तद्बाधानिरासश्च निवेदयिष्यते संसर्गपरीक्षायाम्। तत्सिद्धमेतन्नाऽभिलापसंसर्गयोग्यता ज्ञानाऽऽकाराऽलीकबाह्यत्वयोरभिलापेनाऽशक्यसमयत्वात्। यदभिलापेनाऽशक्यसमयं न तत्तत्संसर्गयोग्यं, यथा सुखादीनामात्मेति। यथोक्तम्—

अशक्यसमयो ह्यात्मा सुखादीनामनन्यभाक्।
तेषामतः स्वसंवित्तिर्नाऽभिजल्पाऽनुषङ्गिणी ।। इति।

शक्यसमयतया खल्वभिलापसंसर्गयोग्यता व्याप्ता। अन्यथाऽतिप्रसङ्गात्। सा ज्ञानाऽऽकाराऽलीकबाह्यताभ्यां निवर्तमानाऽभिलापसंसर्गयोग्यतामपि निवर्त्तयतीति प्रतिबन्धसिद्धिः। तदिदं प्रसिद्धतरतया दूषणमनुद्भाव्य प्रकृतस्यापि सिद्धिरुद्भाविताऽऽचार्येण दूषणतयेति।

नन्वारोपितरूपाऽनुकारिणी कल्पना। न चाऽतीताऽनागतेषु विज्ञानं योगिनस्तथेति न तत्कल्पनेत्यत आह—आरोपितरूपाऽनुकारित्वात् तत्राऽजाताऽतिवृत्तज्ञाने कल्पनात्वप्राप्तेः। नन्वारोपितरूपाऽनुकारित्वमेवाऽस्याऽसिद्धमित्यत आह—न ह्यविद्यमानरूपाऽनुकारादन्यो ज्ञानस्याऽध्यारोपः। न चेदं विद्यमानम्। उक्तं हि भावे वा प्रत्युत्पन्नत्वाऽऽपातादिति।

चोदयति—ननु निरधिष्ठान आरोपः। यथोक्तम् 'आरोपविषयारोपे वा ज्ञानं रजतभ्रम'मिति। ततः किम्? इत्यत आह। अतो वस्तुनः स्वलक्षणस्य परमार्थसतोऽन्यरूपेण सामान्यरूपेण प्रतीतिः कल्पना। तथा च नाऽजाताऽतिवृत्तः साक्षात्कारो योगिनः कल्पना। न हि तत्राऽजाताऽतिवृत्ते सामान्यरूपतया चकास्त इति। अत्रैकदेशी परिहरति—निरधिष्ठानं तर्हि तैमिरि-

**प्रत्यक्षम् । अथ तत्र किंचिदधिष्ठानमुच्यते । खपुष्पमिति तु ज्ञानमकल्पना प्रत्यक्षं स्यात् । सामन्ये च सामान्याऽऽकारा प्रतीतिः स्वसंवित्ताविव तत्राऽनारोपरूपत्वात् । अथ रूपमात्रकल्पना, अतीताऽजातादिषु ज्ञानं न कल्पनापोढम् । अथ सामान्याकारप्रतीतिर्वस्तुनि कल्पना तत्प्रत्यक्षं सामान्ये तु भ्रान्तत्वात् ।**

कस्य केशादिज्ञानं प्रत्यक्षं प्रसज्येत । चोदकमुत्थाप्य दूषयति—अथ तत्र किञ्चिदालोकांशाद्यधिष्ठानमुच्यते । परमार्थदूषणमाह—खपुष्पमिति तु ज्ञानमविकल्पना यतः प्रत्यक्षं स्यात् । न हि तत्र किंचिदधिष्ठानं सम्भवति । न खलु बौद्धानां मूर्ताऽभावादन्यदस्ति गगनं नाम । अभावश्च सर्वोपाख्याविरहलक्षणो नाऽधिष्ठानं कस्यचिदिति । अपि च सामान्ये सामान्याऽऽकारा प्रतीतिः प्रत्यक्षं स्यात् । नन्वियं ज्ञानाऽऽकारमलीकं वा बाह्य[1]मध्यवस्यन्ती समानाऽऽरोप एवेति कथं न कल्पने ? त्यत आह—स्वसंवित्ताविव तत्र सामान्ये अनारोपरूपत्वात् । यथा हि विकल्पविज्ञानं विकल्पनीयप्रवणमपि स्वसंवित्तावकल्पना एवं सामान्यमलीकं वा ज्ञानाऽऽकारं बाह्यमध्यवस्यदेव कल्पना । न तद्रूपमात्रे नाऽऽरोपमपहाय तत्सामान्यरूपमात्राऽऽवेदनं कदाचिदपीति चेत् । अथ विकल्पनीयमपहाय संविद्रूपतावेदनमपि किं कदाचिद्विकल्पनीयं, समानसमयतया तु तद्वेदनं बाह्यसमारोपसमयसामान्यवेदनेऽपि समानं तत् । तस्मात् स्वसंवित्ताविव सामान्यरूपमात्र[2]विकल्पतया प्रत्यक्षं प्रसज्येतेत्यर्थः ।

शङ्कते—अथाऽविद्यमानस्वरूपसामान्यादेः रूपमात्रकल्पनापि भवति कल्पना । न चैवं सति स्वसंवित्तौ कल्पनात्वप्रसङ्गः । विकल्पविज्ञानस्वरूपस्य विद्यमानत्वादिति भावः । निराकरोति—अतीताऽजातादिविज्ञानं कल्पनापोढं तत्प्रतिभासिनो रूपस्य जात्यादेरिवाऽविद्यमानत्वात् ।

शङ्कते—अथ सामान्याऽऽकारा प्रतीतिर्वस्तुनि कल्पना समाऽऽरोपरूपत्वात् न प्रत्यक्षम् । अथ मा भूद्वस्तुनि, सामान्ये तु स्यादित्युक्तं, तत्राह—सामान्ये तु भ्रान्तत्वात् । असत्खल्वेतत्सामान्यं विचाराऽसहत्वात्[3] । तत्तद्विषया प्रतीतिरसदर्थतया विभ्रमः । न खलु 'प्रत्यक्षं कल्पनापोढमन्यनिर्दिष्टलक्षण'मिति प्रणयतो दिङ्नागस्यैव कल्पनापोढमात्रं प्रत्यक्षलक्षणमपि तु तदेवाऽभ्रान्तत्वसहितं प्रत्यक्षलक्षणमिति मन्यते स्म कीर्त्तिः[4] । यथाह —'प्रत्यक्षं

---

१. ज्ञानाकारं बाह्यम्. २ पु० पा० । २. सामान्यमात्रके. २ पु० पा० ।
३. विचारास्पादत्वात् २ पु० पा० । ४. अकीर्तिः २ पु० पा० ।

का पुनरियं भ्रान्तता? यद्यसदर्थता तुल्येयं सर्वज्ञ[1]वेदने अथाऽत्यन्ताऽसदर्थता, तैमिरिकस्वप्नादिज्ञानं प्रत्यक्षम्। अथार्थक्रियासंवादित्वमभ्रान्तत्वं, यद्यर्थनिबन्धनौ सुखदुःखप्राप्तिपरिहारौ उपादानपरित्यागाऽयोग्यवेदनस्य

कल्पनापोढमभ्रान्त'मिति। एतेनाभ्रान्तविशेषणोपादानेन निरधिष्ठाने केशादिज्ञाने भ्रान्तत्व[1]मप्रत्यक्षतया व्याख्यातम्। तदेतद्विकल्प्य दूषयति—का पुनरियं भ्रान्तता ? यद्यसदर्थता तुल्येयं सर्वज्ञ[3]वेदने। अजाताऽतिवृत्तयोरसत्त्वात्।' अथाऽत्यन्ताऽसदर्थता तैमिरिकस्वप्नादिज्ञानं प्रत्यक्षं प्रसज्येत। तस्याऽर्थस्याऽत्यन्तासत्त्वाऽभावात्। अथाऽर्थक्रियासंवादित्वमभ्रान्तत्वम्। यथाह—'प्रमाणमविसंवादि ज्ञानमर्थक्रियास्थितिरविसंवादन'मिति, तद्विकल्प्य दूषयति—यद्यर्थनिबन्धनौ ज्ञानविषयनिबन्धनौ यथाक्रमं सुखदुःखप्राप्तिपरिहारौ अर्थक्रियासंवादित्वमिष्यते तत उपादानपरित्यागाऽयोग्यविषयं यद्वेदनं तस्य चन्द्रतारकारादिविषयस्य विज्ञानस्य भ्रान्तत्वप्रसङ्गः। अथोत्तरोत्तरज्ञाननिर्वृत्तिरेकस्मिन्नर्थे संवादः, स चास्ति चन्द्रतारकादिविषयस्यापि विज्ञानस्येति तदप्यभ्रान्तं प्रत्यक्षं चेति न व्यभिचारः। दूषयति—क्षणिक विषयस्य विज्ञानस्य भवतामस्माकमाशुतरविनाशिविद्युदादिविषयस्य विज्ञानस्य तथात्वं भ्रान्तत्वं प्रसज्येत। न हि तत्रैकस्मिन् विषये उत्तरोत्तरज्ञानोत्पत्तिसम्भवः।

यदि मन्येत उपदर्शिताऽर्थप्रापणसामर्थ्यमेव प्रापकत्वमविसंवादकत्वं, प्रवर्तकत्वमेव च प्रापणसामर्थ्यमुपदर्शकत्वमेव प्रवर्तकत्वम्। न हि अर्थक्रियासमर्थवस्तूपदर्शनादन्यद् विज्ञानस्य प्रवर्त्तकत्वं प्रापकत्वं वा सम्भवति। न च देशकालाऽऽकारनियतं चन्द्रतारकाऽन्यसामर्थ्यमर्थक्रियासु स्वोचितासु च न तादृशमुपदर्शितं विज्ञानेन। न च न तादृशं प्राप्येत यदि न देशतो विप्रकृष्येत विद्युदादि वा न कालत इति। तदयुक्तम्। विकल्पाऽसहत्वात्। किमर्थमात्रप्राप्तिः संवाद आहो यथोपदर्शिताऽर्थप्राप्ति.? न तावत्पूर्वः कल्पः। विज्ञानमात्रादर्थमात्रप्राप्तेरविसंवादसम्भवेन तन्मात्रस्याऽभ्रान्तत्वप्रसक्तेः। नाप्युत्तरः। साऽऽकारनिराकारविज्ञानयोर्विच्छिन्नस्थूलाऽवभासस्य प्रत्यक्षतया नियतस्याऽभ्रान्तत्वेन तत्त्वाऽनवक्लृप्तेः। न खलु स्थौल्यं नाम परमार्थसद्विज्ञाने वा बाह्ये वा सम्भवति। अनेकविधविरुद्धधर्मसंसर्गप्ततयोभयत्राप्यपास्तत्वात्। यथाह—

> तस्मान्नाऽर्थे न विज्ञाने स्थूलाऽऽभासस्तदात्मनः।
> एकत्र प्रतिषिद्धत्वाद् बहुष्वपि न सम्भवः॥ इति।

१. ज्ञानं ध्वान्तम् पु० पा०। २. सर्ववेदने पु० पा०। ३. सर्ववेदने पु० पा०।

भ्रान्तत्वप्रसङ्गः । अथोत्तरोत्तरज्ञाननिर्वृत्तिः, क्षणिकविज्ञानस्य तथात्वम् । तस्मादतदात्मनि तादात्म्यप्रतीतिर्भ्रान्तिः । तथा च सर्वज्ञज्ञानं न कल्पनापोढमभ्रान्तमिति न प्रत्यक्षलक्षणमन्वेति । अथाऽनुभवाऽऽकारप्रवृत्तं ज्ञानमतोऽन्वेत्येव । यथोक्तं 'मानसमप्यनुभवाकारप्रवृत्तं प्रत्यक्ष'मिति । अथ केयमनुभवाकारता ? यदि बोधात्मकता, सर्वं तथा ज्ञानम् । अथ व्यक्त्यन्तराऽवभासता, प्रथमोपनिपात्यपि दूरत्वादिनाऽव्यक्तपीतादिपरिच्छेदं न प्रत्यक्षं स्यात् । अथाऽदूरान्तराऽतिरोहितवेदना, सामान्यवेदनस्य प्रत्यक्षत्वप्रसङ्गः ।

न च निराकारविज्ञाननये वह्वो रूपपरमाणवो निरन्तरोत्पादवन्तः समर्था एकविज्ञानोपारोहिणः स्थूलाऽऽभासभाजः । यथाह—'अप्रतिभासधर्मोऽस्ति स्थौल्य'मिति । प्रतिभासनकालधर्म्मः प्रतिभासधर्म्म इति । न च न ते रूपपरमाणवः, न च न निरन्तरमुत्पन्नाः, न च नैकविज्ञानोपारोहिणः, न च न तादृशस्थूलव्यपदेशभ्राज इति कस्मात् भ्रान्ततेति साम्प्रतम् ? नैरन्तर्याऽनुपपत्तेः । तद्ग्रहस्य भ्रान्तत्वापातादन्तरालाऽग्रहे नितान्तविच्छिन्नेषु तरुष्वेकघनवनप्रत्ययवत् । न हि न ते तरवः । न च नैकस्मिन्विज्ञाने भासन्ते । निरन्तराऽनुत्पादश्च तुल्यः । न खलु तरव इव रूपपरमाणवो निरन्तरमुत्पन्नाः, विजातीयैर्गन्धरसस्पर्शपरमाणुभिरन्तरितत्वात् तादृशस्यापि चाऽभ्रान्तत्वे द्विचन्द्राऽलातचक्रचलद्वृक्षादिदर्शनानामप्यभ्रान्तत्वप्रसङ्गः । तदियमभ्रान्तता भवत्स्वेव प्रहरतीत्युपेक्षिता आचार्येण ।

उपसंहरति—तस्मात्परिशेष्यादतदात्मनि तादात्म्यप्रतीतिर्भ्रान्तिः । भवत्वेतद् भ्रान्तिलक्षणं, तथापि का नः पीडे ? त्यत आह—तथा च भ्रान्तिकल्पनयोः समारोपरूपेणैक्ये सति सर्वज्ञज्ञानं न कल्पनापोढम् । अविद्यमानरूपयोरतीताऽनागतयोः रूपवत्वेनाऽऽरोपात् । तदवेदने प्रत्यक्षत्वाऽनुपपत्तेरसाक्षात्कारत्वप्रसङ्गात् । नाप्यभ्रान्तमरूपाऽऽरोपादेवेति न प्रत्यक्षलक्षमन्वेति ।

लक्षणान्तरं प्रत्यक्षस्य शङ्कते—अथाऽनुभवाऽऽकारप्रवृत्तं प्रत्यक्षम्, अतोऽन्वेत्येवाऽतीताऽनागतविषयं सर्वज्ञज्ञानम् । यथोक्तं 'मानसमप्यनुभवाऽऽकारप्रवृत्त'मिति । तद्विकल्प्य दूषयति—केयमनुभवाकारता ? यदि बोधात्मकता ततः सर्वं तथाबोधात्मकं ज्ञानमिति सर्वमेव प्रत्यक्षं प्रसक्तम् । अथ व्यक्तयन्तराऽवभासता प्रथमोपनिपात्यपि निर्विकल्पकं दूरत्वादिना दोषेणाऽव्यक्तपीतादिपरिच्छेदं न प्रत्यक्षं स्यात् । अथाऽदूरान्तरस्याऽतिरोहितस्य च वेदनाऽनुभवाऽऽकारप्रवृत्तिरस्ति चाऽव्यक्तपरिच्छेदस्याप्यदूरान्तराऽतिरो-

यदि मन्येत सन्निहितवर्त्तमानाऽवभासाऽनुभवाऽऽकारप्रवृत्तिः, तथाभूतं च सर्वार्थेषु योगिनां तथागतानां च दर्शनमिति। तदसत्। पूर्वदोषाऽनतिवृत्तेः। अपि च तथाभूतेऽतथादर्शनाद् वर्तमानं मिथ्याज्ञानमेव, तैमिरिकदर्शनवत्। न तु प्रत्यक्षमन्यथा भवति, तदिन्द्रियार्थसामर्थ्य[1]जन्यलक्षणमितरथा तिमिराद्युपप्लवजकेशादिदर्शनं कस्य हेतोरवाकीर्य्यंत ? सर्वमेव प्रत्यक्षमसंनिहिताऽवभासम्। अर्थज्ञानयोः कार्य्यकारणभावेन कालभेदात्। किं तर्हीदं

हितगोचरत्वं दूरान्तरत्वेऽतिरोहितत्वे च[2] तद्गोचरस्याऽवेदनाप्रसङ्गादिति दूषयति च। तद्गोसामान्यस्याऽवस्तुसतो न दूरान्तरत्वं नापि तिरोहितत्वम्। उभयोर्वस्तुधर्म्मत्वात्। ततस्तद्वेदनं प्रत्यक्षं स्यात्।

यदि मन्येत संनिहितवर्तमानाऽवभासा खल्वनुभवाकारप्रवृत्तिः। न च सामान्यमलीकं संनिहितं च वर्त्तमानं च। तथाभूतं च सर्वार्थेषु योगिनां कतिपयभूमिसमारूढानां तथागतानां च दशभूमिगतानां च[3] दर्शनमिति। दूषयति—तदसत्। कुतः ? पूर्वदोषाऽनतिवृत्तेः। यद्यपि सामान्यमपरमार्थकतयाऽसंनिहितमवर्त्तमानं च तथापि तथाऽवभासत इत्यनुभवाऽऽकारप्रवृत्त्या तत्प्रतिपत्तिः प्रत्यक्षं प्रसज्येतेति पूर्वदोषाऽऽपत्तिरित्यर्थः। अत्रैव कारिकायाः पूर्वार्द्धेन दूषणान्तरमाह—अपि च तथाभूते वर्तमानेऽतीतेऽनागते च तथाभूतदर्शनात्। तथाभूतत्वमाह—वर्तमानं मिथ्याज्ञानमेव, तैमिरिकदर्शनवत्। कस्मात्पुनर्न प्रत्यक्षम् ? इत्यत आह—न तु प्रत्यक्षमन्यथा भवति। कुतः ? तदिन्द्रियार्थसामर्थ्यजन्यलक्षणं प्रत्यक्षं यत्खलु तत्राऽर्थ्यमानं तस्य चेन्द्रियस्य च सामर्थ्याज्जायमानं प्रत्यक्षं विज्ञानमिति तस्य लक्षणं, न पुनरनुभवाऽऽकारप्रवृत्तिस्त्वदभिमता लक्षणमित्यर्थः। कस्मात्पुनरिदं न लक्षणम् ? इत्यत आह—अन्यथा हि तिमिराद्युपप्लवजकेशादिदर्शनं कस्य हेतोः प्रत्यक्षताया अवाऽकीर्यत ? न हि भवतामनुभवाऽऽकारप्रवृत्तित्वं प्रत्यक्षलक्षणमिच्छतां तैमिरिकज्ञानस्य प्रत्यक्षत्वमभिमतमित्यर्थः।

सम्प्रति साऽऽकारज्ञानवादी प्रत्यवतिष्ठते—सर्वमेव प्रत्यक्षमसंनिहिताऽवभासं तत्सर्वत एव मा निवर्तिष्ट प्रत्यक्षतेति नाऽयमन्यथाग्रहोऽप्रत्यक्षतामावहतीत्यर्थः। कस्मादसंनिहिताऽवभासं सर्वज्ञानम् ? इत्यत आह—अर्थज्ञानयोः कार्यकारणभावेन कालभेदात्। यथासङ्ख्यमत्र नेष्यते। दूषणवादी तु गूढाऽभिसन्धि पृच्छति—किं तर्हीदं नीलादि[4]संनिहितदेशकालं

१. र्थ्याऽजन्य पु० पा०। २. दूरान्तरस्याऽतिरोहितत्वे च २ पु० पा०।
३. अतीताऽनागतां च २ पु० पा०। ४. नीलादिसन्निहितदेशकालं पु० पा०।

प्रकाशते ? ज्ञानाऽऽकारम् । न हीदानीं सर्वैकदेशस्यापि प्रत्यक्षदर्शी । ज्ञानाकारेऽर्थे वेदनाऽध्यवसायेनैव व्यवहारदर्शनान्नाऽर्थदर्शनहानिः । कथमन्यवेदनेऽन्याऽध्यवसायः ? निरूढत्वादनादेरर्थग्रहाऽभिनिवेशाऽपस्मारलक्षणाया अविद्यायाः । स्वस्ति तर्हि सर्वज्ञत्वाय भूयिष्ठाऽविद्याऽपस्माराय, वरं कनीयोऽविद्यमेकदेशदर्शित्वमेव । अपि च परिभाषयापि तावदेकदेश एव प्रत्यक्षं स्यात् । ग्राह्यत्वं हेतुत्वमेव ज्ञानाकाराऽर्पणक्षममिति न पुनः सर्वः । तस्याऽहेतुत्वाद्देशतः कालतो वाऽसंनिधानात् । अन्यथा सर्वस्य सर्वदर्शित्व-

प्रकाशते ? चोदक आह—ज्ञानाकारम् । प्रष्टा सोपहासं स्वाऽभिप्रायमाविष्करोति—न हीदानीं सर्वैकदेशस्याप्यर्थरूपस्य प्रत्यक्षदर्शी विद्यत इति । साधु समर्थितः सर्वार्थप्रत्यक्षदर्शी चोदयति—ज्ञानाकारेऽर्थवेदनाऽध्यवसायेनैव व्यवहारान्नाऽर्थदर्शनहानिः । द्विविधो हि विषयः प्रमाणानां ग्राह्यश्चाऽध्यवसेयश्च । तत्र स्वाऽऽकारो ग्राह्यः । तस्य तु बाह्यत्वमध्यवसेयम् । यथाह—'स्वप्रतिभासे[1]ऽनर्थेऽर्थाध्यवसायेन प्रवृत्ति'रिति । न ह्यस्मिन्दर्शने प्रकारान्तरेण ग्रहणमुपपद्यते । तेन ज्ञानाऽऽकारस्य बाह्यत्वेनाऽध्यवसाय एव सर्ववेदनम् । न चैतावता भ्रान्तः । न खलु चित्तेन ग्रहणव्यापारेण गृह्णन् भ्रान्तो भवति कदाचिदन्यथा गृह्णन् कदाचिदुचितादुपायात् उपायान्तरेणाऽऽभिमुख्येन प्रवृत्तो भ्रान्तः । न त्वेतदुभयमपि सर्वविदि समस्तीति कथं भ्रान्तः ? दूषयति—कथमन्यवेदने स्वाऽऽकारवेदने अन्यवेदनस्य बाह्यवेदनस्याऽध्यवसायः ? चोदक आह—निरूढत्वादनादेरर्थग्रहाऽभिनिवेशाऽपस्मारलक्षणाया अविद्यायाः । सोपहासं दूषयति—स्वस्ति तर्हि सर्वज्ञत्वाय भूयिष्ठाऽविद्याऽपस्माराय, वरं कनीयोऽविद्यमेकदेशदर्शित्वमेव । न हि स्वाऽऽकारमनर्थमप्यध्यवस्यन्ननन्योपायतयाऽपि भवत्यभ्रान्तः । न च भ्रान्तत्वं न्यायसिद्धं समस्तप्रत्यक्षभ्रान्तत्वप्रसङ्गभिया शक्यमपह्नोतुं, प्रमाणसिद्धस्य प्रयोजननिरोधेनाऽशक्यनिह्नवत्वादिति भावः । अध्यवसायकत्वनिराकरणं च दर्शयिष्यते 'न निरालम्बनं ज्ञान'मित्यत्र । अपि च परिभाषयाऽपि तावदेकदेश एव प्रत्यक्षं स्यात् । परिभाषामाह—ग्राह्यत्वं हेतुत्वमेव ज्ञानाऽऽकारार्पणक्षममिति । यथाह सौत्रान्तिकनये ।

भिन्नकालं कथं ग्राह्यमिति चेद् ग्राह्यतां विदुः ।
हेतुत्वमेव तद् युक्तं ज्ञानाऽऽकारार्पणक्षणम् ।। इति ।

तच्चेतद्ग्राह्यत्वमलौकिकतया पारिभाषिकम् । तेन चैकदेश एव प्रत्यक्षो न पुनः सर्वः । कुतः ? तस्य सर्वस्याऽहेतुत्वात् । तदेव कुतः ?

१. भासेऽर्थे पु० पा० ।

प्रसङ्गात्। अथवा प्रत्युत्पन्नाकारमेव ज्ञानमतीताऽनागताऽऽकारमपि वा। पूर्वत्र सर्वस्याऽतथाभावान्मिथ्या। उत्तरत्राऽतीतादिरूपकल्पनाप्रवृत्तत्वान्न प्रत्यक्षम्। सर्वं वा ज्ञानकाले प्रत्युत्पन्नात्मना ज्ञायेत, तथावस्थं वा। पूर्वस्मिन्मिथ्यात्वम्। उत्तरत्र न सर्वं प्रत्यक्षमवस्थान्तराऽप्रत्यक्षीकरणात्। अपि च सर्वं न क्रमेण शक्याऽवगममानन्त्यात्। न हि पूर्वाऽपरकोटिविर-

देशतः कालतो वा तस्याऽसन्निधानात्। अतो हि ते भावने ये देशतः कालतो वा विप्रकृष्येते न तु तथा सर्वमित्यर्थः। अथाऽसन्निहितः कस्मान्न हेतुः? इत्यत आह—अन्यथा संनिधिविरहिणोऽपि हेतुत्वे सर्वस्याऽस्मदादेरपि सर्वदर्शित्वप्रसङ्गः। योगस्य च सामर्थ्यमत्र निरस्तमेव यथा पूर्वार्द्धे।

अस्याऽन्या व्याख्या। अथ वा प्रत्युत्पन्नाऽऽकारं वर्तमानाऽऽकारमेव वा सर्वस्मिंस्त्रैकाल्यभाजि वस्तुविस्तारे विज्ञानमतीताऽनागताकारमपि वा। तत्र पूर्वस्मिन् कल्पे सर्वस्याऽतथाभावान्मिथ्या सर्वज्ञविज्ञानं स्यात्। उत्तरत्र त्वतीताऽनागतादिरूपकल्पनाप्रतीतत्वा[1]न्न प्रत्यक्षम्। कल्पनारहितस्य तत्त्वात्। न तावदतीताऽनागते रूपमात्रेण प्रमेये निर्विकल्पकप्रमेयस्य रूपमात्रस्य तयोर्वर्त्तमानादविशेषात्। न हि वर्तमानमपि वर्तमानताविशिष्टं निर्विकल्पके प्रथते, अपि तु रूपमात्रेण। तस्मादतीतत्वादिना विशिष्टत्वमनयोर्ज्ञातव्यम्। तथा च कल्पनात्वं विशेषणविशेष्यभावेन ग्रहणमेव हि तत्त्वं कल्पनानाम्। तथैवाऽभिलापसंसर्गार्हत्वात्। न तु शब्दार्थयोरेकविज्ञानोपारोहे, निर्विकल्पकेऽपि तथा संभवात्। तस्मादतीतादिविशिष्टालम्बनस्य ज्ञानस्य कल्पनात्वादप्रत्यक्षतेत्युपपन्नम्।

यस्तु मन्यते अस्तु वर्त्तमानविषयमेव प्रत्यक्षं, तथापि सर्वविषयमतीताऽनागतयोरप्यतीताऽनागतत्वाभ्यां वर्तमानत्वादिति तन्निरासायाऽस्यैव व्याख्यान्तरमाह—सर्वं वा ज्ञानकाले प्रत्युपन्नात्मना ज्ञायेत तथाऽवस्थं वा। यो यदवस्थः स तथेत्यर्थः। तत्र पूर्वस्मिन्मिथ्यात्वम्, अन्यावस्थस्याऽन्यथाग्रहणात्। उत्तरत्र न सर्वं प्रत्यक्षम्। कुतः? अवस्थान्तराऽप्रत्यक्षीकरणात्। एतदुक्तं भवति। यस्तु[2]ज्ञानकालेऽतीतः प्रत्युत्पन्नोऽनागतो वा स तथैव प्रत्यक्षीकर्त्तव्यः। स च स्वज्ञानकालेऽतीत आसीदनागतो वर्तमानश्च तथा स्वज्ञानकाले वर्त्तमानोऽभूदनागतः भविता चाऽतीतः। एवं स्वहीनकालेऽनागतस्य भवितारौ वर्त्तमानत्वाऽतीतत्वे इति स्वज्ञानसमयवर्त्यवस्थाभेदवद्वस्तुग्रहणेऽवस्थान्तरमस्यामगृहीतमिति न सर्वज्ञः स्यात्।

---

१. प्रवृत्तत्वात् १ पु० पा०। २. यस्त्वज्ञा पु० पा०।

हिणो ज्ञेयस्योत्पादवतः परिनिष्ठाऽस्ति । न यौगपद्येन, आनन्त्यादेव । इयत्ताऽनवधारणे सर्वैकदेशप्रतिपत्त्योरविशेषात् । नन्वनवधारयन्नपीयत्तां रूपतो यौगपद्येन सर्वमवैति । नैतत्सारम् । न हीयत्ताऽनवधारणे सर्वमवधारितं भवत्येकदेशो वा । अन्यतराऽव्यवच्छेदात् । बहुद्रव्यसमवाये इयत्तावधारणादेव सर्वप्रतिपत्तिः, सा च परिमिते सम्भवति नाऽपरिमिते । ज्ञानाऽऽकाराऽधीनश्च ज्ञेयाऽधिगमः । न चैकविज्ञानवर्त्तिनामाकाराणां युगपद्भुवामा-

पश्चार्द्धं विवृणोति—अपि च । सर्वं न तावत्क्रमेण शक्याऽवगमम् । कस्मात् ? आनन्त्यात् । तदेव दर्शयति—न हि पूर्वाऽपरकोटिविरहिणो ज्ञेयस्योत्पादवतः परिनिष्ठाऽस्ति । नित्यस्यापि तावत्परमाण्वादेर्व्यवस्थित-रूपस्यापि नेयत्ता किमङ्ग पुनरव्यवस्थितरूपस्योत्पादवत इत्यर्थः । न यौग-पद्येन । कुतः ? पूर्वोक्तादानन्त्यादेव इयत्ताऽनवधारणात् । साकल्यवचनो ह्यं सर्वशब्दः, साकल्यं चेयत्तानिःशेषतायामापतेत्, सा चेन्नाऽवधारिता नाऽवधारितं सर्वमित्यर्थः । अथेयत्ताऽवधारणाऽधीनं सर्वाऽवधारणमित्येतदेव कुत ? इत्यत आह—तदियत्ताऽनवधारणे सर्वैकदेशप्रतिपत्त्योरविशेषात् । एतदुक्तं भवति । वहूनामेकदेशप्रतिपत्तौ हि न सर्वप्रतिपत्तिरिति लोक-प्रसिद्धं व्रवन्ति वक्तारः, एकदेशमेषां जानीमो न सर्वमिति । यदि रूप-मात्रमेव सर्वं भवेत् ततस्तस्योभयत्राऽविशेषात् सर्वैकदेशप्रतिपत्त्योरभेदप्रसङ्ग इति ।

चोदयति—नन्वनवधारयन्नपीयत्तां रूपतो यौगपद्येन सर्वमवैति । अनियतमेव च सर्वमिति कथं तदपरिमाणरूपाऽवधारणे सम्भवतीयत्ता प्रमेयस्याऽपराध्यते । यदनियतं न पुनस्तद्विषयं विज्ञानं तस्य यथाप्रमेयम-वस्थानात्, अनवस्थाने वा प्रामाण्याऽनुपपत्तेरित्यर्थः । निराकरोति—नैतत्सारम् । न हीयत्ताऽनवधारणे सर्वमवधारितमेकदेशो वा । कस्मात् ? अन्यतरस्यैकदेशस्य परिमितरूपमात्राऽग्रहणे अव्यवच्छेदात् । अन्यतराऽव्य-वच्छेदेन चाऽन्यतरप्रतिपत्तेः । व्यतिरेकं दर्शयित्वाऽन्वयमाह—वहुद्रव्य-समवाये इयत्ताऽवधारणादेव सर्वप्रतिपत्तिः नैकस्मिन्नसंवद्धेषु वा परस्परं वहुष्वपि सर्वत्वमेकदेशत्वं वा सम्भवतीति वहुद्रव्यसमवाय इयुक्तम् । सा चेयत्तानिःशेषता परिमिते सम्भवति नाऽपरिमिते, तत्सिद्धमानन्त्यादनिः-शेषता । तथा च न सर्वाऽवभासकृत् । सर्वग्रहणमेव यौगपद्यग्रहणमिति तस्याप्यभाव इति । इतश्च नाऽनन्तस्य सर्वस्य युगपद्ग्रहो यत्सौत्रान्तिकनये ज्ञानाकाराऽधीनश्च ज्ञेयाऽधिगमः । न चैकविज्ञानवर्त्तिनामाकारणां युगपद्भु-वामानन्त्यं समस्ति । कुतः सर्वेषां प्रत्युपन्नत्वात् ।

नन्त्यं समस्ति । सर्वेषां प्रत्युत्पन्नत्वात् । अव्यवच्छिन्नदेशकाला ह्यजाताऽतिवृत्तप्रत्युत्पन्ना अनन्ताः सहाऽपेक्षमाणा अतीताश्च, पूर्वकालकोटेः अनवच्छेदात्, अवच्छेदेऽपि पुरस्तात् । प्रत्युत्पन्नास्तूभयकोटिव्यवच्छिन्ना यावन्त उत्पन्नास्तावन्त एवेति कथमानन्त्यम् ? अतो नाऽनन्ताऽऽकारमेकं ज्ञानमनन्तानि वा युगपद् ज्ञानानि । किं चेदं सर्वं यद्विद्वान् सर्ववित्? न तावत्प्रत्येकमर्थाः, नाप्यन्यसहिताः केनचित्सामान्येन वशीकृताः कियन्तोऽपि । न चेत्थंभावोऽनन्तेषु सम्भवति । मुख्यमनन्तमेव सर्वमिति चेत् । न । अन्यतर-

अथ प्रत्युत्पन्नानामपि कस्मान्नानन्त्यम् ? इत्यत आह—अव्यवच्छिन्नदेशकाला ह्यजाताऽतिवृत्तप्रत्युत्पन्ना अनन्ताः । ननु प्रत्येकं भावानां नात्मावच्छिन्नदेशकालत्वमपीत्यत आह—सहाऽपेक्षमाणाः समुच्चीयमानाः न केवलं त्रयः, किं तु अतीताश्चाऽनन्ताः । नन्वेकयैव कालकलया तस्याः पुरस्तात्तनाः सर्वे एवाऽतीताऽवच्छिन्ना इति कथमतीता अनन्ता ? इत्यत आह—पूर्वकालकोटेरनवच्छेदात् अवच्छेदेऽपि पुरस्तात् । न चेयं विधा एकाऽनेकविज्ञानोपारोहिणामाकाराणामस्ति, येनाऽऽनन्त्यमेव तेषां भवेदित्याह—प्रत्युत्पन्नास्तूभयकोटिव्यवच्छिन्ना यावन्त उत्पन्नास्तावन्त एवेति , कथमानन्त्यम् ? उपसंहरति—अतो नाऽनन्ताकारमेकं ज्ञानमनन्तानि वा युगपत् ज्ञानानि, उभयत्राप्युभयकोटिव्यवच्छेदात् ।

न प्रमेयं निरूप्यते इति कारिकार्द्धार्थं विवृणोति—किं चेदं सर्वं यद्विद्वान् सर्ववित् ? न तावत्प्रत्येकमर्थाः प्रत्येकमन्यनिरपेक्षेषु सर्वशब्दाऽप्रयोगात् । नाप्यसम्बद्धाऽन्यसहिताः । मा भूदेकस्मिन्नपि देवदत्तपुत्रे यं कं चिदन्यमपेक्ष्य सर्वशब्दप्रयोगः, अपि तु केनचित्सामान्येन वशीकृताः कियन्तोऽपि । यथा सर्वे ब्राह्मणाः सर्वे गाव इति । भवत्वेवं को दोषः ? अत आह—न चेत्थंभावोऽनन्तेषु सम्भवति ।

शङ्कते—मुख्यमनन्तमेव सर्वमिति चेत् । तथा हि । प्रकरणादावसति नियामके अयं कथमसंकुचितवृत्तिः सर्वशब्दोऽनन्तेषु वर्तत इत्यनन्त एवास्य मुख्योऽर्थं इत्यर्थः । निराकरोति—नाऽन्यतरकालकोटिभाजामतीतानामनागतानां वाऽऽनन्त्येऽप्यतीतया तावत्यैवैकयाऽप्युपहितानामसर्वत्वात् । पूर्वाऽपराऽव्यवच्छिन्नानां च प्रत्युत्पन्नानां प्रत्युत्पन्नतोपहितानां सर्वत्वात् । अपि चाऽऽनन्त्यमेव सर्वत्वे तदवधारणं न सम्भवति । तथा हि । सर्वा व्यक्तयोऽवधारिता न वा ? अवधृताश्चेत् तावत्य एव नाऽनन्ताः । अनवधारणे ह्यनन्तता तासाम् । तथा चाऽनवधारणेत्याह—अनवधारणं चाऽनन्तमिति कथम् ? तस्य सर्वस्याऽवधारणात् । न चाऽनवधार्यमाणं प्रमेयमिति भावः ।

**कालकोटिभाजामानन्त्येऽप्यसर्वत्वात् पूर्वाऽपराऽव्यवच्छिन्नानां च सर्वत्वात्। अपि चानन्त्यमेव सर्वत्वे तदवधारणं न सम्भवति। तथा हि। सर्वा व्यक्तयोऽवधारिताश्चेत्तावत्य एव नाऽनन्ताः। अनवधारणे ह्यनन्तत्वं तासां तदनवधारणं चाऽनन्तमिति कथं तदवधारणम्? कालत्रयाऽवच्छिन्नास्तर्ह्यर्थाः सर्वे, न, तेष्ववच्छेदाऽभावादेकदेशाऽविशेषात्। तस्मात्क्रमाऽक्रमाऽतिरिच्यमानविधाऽभावात्ताभ्यां व्याप्तेर्ज्ञानस्य तदनुपपत्तावनुपपत्तिः। प्रमेयाऽभावाच्च। प्रत्यक्षपूर्वत्वाच्चाऽनुमानादीनामपि सर्वस्मिन्न कारणत्वम्। प्रत्यक्षेण साक्षात्पारम्पर्येण वा सम्बन्धग्रहणाऽभावान्नाऽनुमानम्। न शब्दोऽत एव। पदार्थान्तरोपहितविशेषपदार्थस्यैव वाक्यार्थत्वात्। नाऽऽर्थापत्तिः। तदभावेऽनवकल्पमानदर्शनाऽनुपपत्तेः। नोपमानम्। सादृश्यविषयत्वात्।**

शङ्कते—कालत्रयाऽवच्छिन्नास्तर्ह्यर्थाः सर्वे। वयमनन्ततामेव सर्वतां ब्रूमः, किं त्वेकेनैव कालेनोपाधिवशलब्धाऽतीताद्यर्थव्यवस्थाभेदेनाऽवच्छिन्नाऽभावात्सर्वमित्यर्थः। निराकरोति—न तेष्ववच्छेदाऽभावात्। हेतोरेकदेशाऽविशेषात् सर्वप्रतिपत्तेरनुपपत्तेः। न ह्येकेनोपसंगृहीता इत्येतावन्तः किं तु एतावता। न च यावदयमेको दोषग्रहणाऽनवच्छिन्नो नित्यः कालोऽन्तवानिति कथं तदवच्छिन्नोप्येतावान्। न चाऽतीताऽनागतप्रत्युत्पन्नत्वान्यप्यस्य समुच्चितान्यन्तवन्तीत्यर्थः। कारिकायाः पश्चार्धं प्रमाणयन्नुपसंहरति—तस्मात् क्रमाऽक्रमाऽतिरिच्यमानविधाऽभावाद्धेतोस्ताभ्यां व्याप्तेः ज्ञानस्य तदनुपपत्तावनुपपत्तिः। प्रमेयाऽभावाच्च प्रमेयं च न निरूप्यते। प्रमेयाऽनिरूपणादेव च सर्वग्रहणसामर्थ्यमात्रेण सर्वज्ञता प्रत्युक्ता वेदितव्या। ननु मा नाम सर्वं प्रत्यक्षेण ज्ञासीत्, अनुमानादिभिस्तु ज्ञास्यतीत्यत्राह—प्रत्यक्षपूर्वकत्वाच्चाऽनुमानादीनामपि सर्वस्मिन् अकारणत्वम् प्रमाणत्वम्।

प्रत्यक्षपूर्वकत्वं प्रमाणानां प्रत्येकमादर्शयति—प्रत्यक्षेण साक्षात्पारम्पर्येण वा सम्बन्धस्यं पक्षधर्मतानियमलक्षणस्याऽग्रहणं हेतुस्तस्य च सर्वस्मिन्नभावन्नाऽनुमानम्। न शब्दोऽत एव प्रत्यक्षेण सम्बन्धग्रहणलब्धजन्मत्वात्। नन्वगृहीतसम्बन्धं सर्वं मा भूत्पदार्थो वाक्यार्थस्तु भविष्यतीत्यत आह—पदार्थान्तरोपहितविशेषस्य पदार्थस्यैव वाक्यार्थत्वात्। कृतोपपादनमेतन्नियोगपरीक्षायाम्। नाऽर्थापत्तिः। कुतः? तस्य सर्वस्याऽभावेऽनवकल्पमानस्याऽघटमानस्य कस्यचित् दर्शनाऽनुपपत्तेः। नोपमानम्। दृष्टस्य[1] स्मृत्यारूढस्य गवादेर्दृश्यमानेन गवयादिनोपमेयत्वात्। सर्वस्य क्वचिददर्शनात्। सादृश्यविषयत्वाच्च। सर्वस्य चाऽसादृश्यरूपत्वात्। न प्रमाणाऽभावस्तस्य प्रमेयाऽभाव-

१. सदृशस्य। २ पु०पा०।

नाऽभावः। अभावविषयत्वात्। प्रत्यक्षस्येव चेतरेषामपि प्रमाणानां क्रमाऽक्रमौ न कल्पेते प्रमेयं न च निरूप्यते। एवं तावदनुपपत्तिः। ज्ञानमपि।

सर्वादृशामन्यवित्तमिन्द्रियाणां न गोचरः।
अत एव न सर्वज्ञज्ञानकार्य्यं प्रसिद्ध्यति॥

न तावदनतीन्द्रियदृशः सदपि परवर्त्ति संवेदनं प्रत्यक्षम्। अत एव नाऽनुमेयम्। तदसिद्धौ तत्कार्याऽसिद्धेः। नन्वतिशयानां काष्ठाप्राप्तिः

विषयत्वात्। सर्वस्य च सदसद्रूपतया तदनुपपत्तेः। प्रत्यक्षस्येव चेतरेषामपि प्रमाणानां क्रमाऽक्रमौ न कल्पेते न घटेते। प्रमेयं च न निरूप्यते।

एवं तावदनुपपत्तिप्रमाणादारु परिशोधितम्। ज्ञानमपि परिशोध्यते। तथा हि—

सर्वादृशामन्यवित्तमिन्द्रियाणां न गोचरः।
अत एव न सर्वज्ञज्ञानकार्यं प्रसिद्धयति॥

न तावदनतीन्द्रियदृशोऽस्मदादेः सदपि परवर्त्ति सर्वसंवेदनं प्रत्यक्षगम्यम्। ननु यथा जातमात्रस्य वालस्य स्मितरुदितादिकार्यदर्शनादप्रत्यक्षा अपि हर्षविषादादयः प्राग्भवीयश्चाऽनुभवोऽनुमीयते तथोपदेशादिलक्षणकार्यदर्शनात्परवृत्तिसर्वविषयं विज्ञानमनुमास्यत इत्यत आह—अत एव चात्यन्ताऽप्रत्यक्षत्वादेव नाऽनुमेयम्। ननूक्तं कार्यदर्शनादनुमेयमित्यत आह—तत्सर्वज्ञज्ञानाऽसिद्धौ प्रत्यक्षेण तत्कार्याऽसिद्धेः। न जात्वपरिदृष्टधूमकेतनो धूमं तत्कार्यमवैति। स्मितरुदितादयस्तु मानसप्रत्यक्षसमधिगमनीयशोकादिकार्यतया स्वात्मनि प्रतीता इति वैषम्यम्। उपदेशस्तु मन्वादीनां चरकादीनां वा वेदात् उपदेशान्तरप्रभवप्रवृत्तिप्रसूतादन्वयव्यतिरेकाऽवगमाद्वा। न च वैद्यचरको[1]पदेशानामादिरस्ति। न खलु सर्वासामौषधीनां तत्संयोगानां च सहस्रेणापि [2]पुरुषायुषैरागमा[3]नधीनः शक्तः कर्तुं कश्चिदन्वयव्यतिरेकौ। चैत्यवन्दनाद्युपदेशस्तु व्यामोहाद्विप्रलम्भाद्वेति निरवद्यम्। परोक्तास्तु हेतवोऽधस्तादेव निरस्ता इति नाऽत्र तिरोहितमिव किंचित्।

सम्प्रति स्वायम्भुवाऽभिमतं सार्वज्ञं निरसितुमुपन्यस्यति—ननु साऽतिशयानां काष्ठाप्राप्तिः परिमाणानामुपलब्धा, तद्यथा कुवलाऽऽमलकविल्वेषु महत्त्वस्य साऽतिशयस्याऽऽकाशे काष्ठाप्राप्तिः। यत आकाशं परममहद्रू-

१. न चरक २ पु० पा० । २. पुरुषै पु० पा० ।
३. रागमाधीनः पु० पा० ।

परिमाणानामुपलब्धा, साऽतिशयं च ज्ञानम्, अतः क्वचित्काष्ठाप्राप्तं सर्वविषयमिति । उच्यते—

काष्ठा यद्यवधिः कामं परं यस्मादसम्भवि ।
कार्य्यद्रव्यैरनेकान्तो गुणैश्च गरिमादिभिः ॥

यदि यतः परं नास्ति सा काष्ठा, भवतु तत्प्राप्तिः । न च तया सर्वविषयत्वसिद्धिः । भूयिष्ठविषयत्वं तु भवेत् । पार्थिवस्येव गोलकस्य पार्थिवान्तराऽपेक्षं बहुतराऽऽकाशाऽवकाशव्यापित्वं न सर्वव्यापिता । अथ यतः परं न सम्भाव्यते, कार्य्यद्रव्यैर्व्यभिचारः । न हि साऽतिशया अपि घटादयः परिमाणतः पराऽसम्भवनीयाऽतिशायिनः । अन्याऽनवकाशप्रसङ्गात् । एकेन सर्वव्याप्तेः । न च गुणधर्म्मोऽयमिति साम्प्रतम् । तद्गतानां गरिमादीनां[1]

वति । साऽतिशयं चेदं विज्ञानमुपलभ्यते । तत्तदेकद्विबहुविषयादिव्याप्त्या तदिदमपि क्वचित्काष्ठाप्राप्तं युक्तम् । इयमेव चाऽस्य काष्ठाऽऽप्तिः यद्विदितसमस्तवेदितव्यस्य तदभावेऽव्यवस्थानमिति । यथाह भगवान् पतञ्जलिः 'तत्र निरतिशयं सर्वज्ञविज्ञानमि'ति । अत्रोत्तरमाह । उच्यते—

काष्ठा यद्यवधिः कामं परं यस्मादसम्भवि ।
कार्यद्रव्यैरनेकान्तो गुणैश्च गरिमादिभिः ॥

तामिमां काष्ठां विकल्प्य दूषयति—यदि यतः परं नास्ति स काष्ठा, भवतु तत्प्राप्तिर्न तया सर्वविषयत्वसिद्धिः । सर्वमेव विज्ञानं स्वहेतुसमासादितजन्मभेदं स्वगोचराऽवधि नाऽतिवर्त्तते इत्यत्र न विप्रतिपद्यामहे । नो खल्वेतावता सर्वविषयविज्ञानसिद्धिरित्यर्थः । भूयिष्ठविषयत्वं तु भवेत् प्राज्ञानां षट्प्रमाणीनिपुणानां विज्ञानस्य पार्थिवस्येव गोलकस्य सकलजीवलोकाऽधिष्ठानस्य गण्डशैलशिलादिपार्थिवान्तराऽपेक्षं बहुतराऽऽकाशाऽवकाशव्यापित्वं, न पुनः सर्वव्यापिता ।

कल्पान्तरमाशङ्कते—अथ यतः परं न सम्भाव्यते सा काष्ठा, यथा व्योम्नः परममहत्परिमाणं परमाणूनां पारिमाण्डल्यम् । न ह्याभ्यां परं महीयः क्षोदीयो वा सम्भवति । तद्दूषयति—कार्यद्रव्यैर्व्यभिचारः । तं दर्शयति—न हि साऽतिशया अपि कुटकुम्भमणिकादयः परिमाणतः पराऽसम्भवनीयरूपदेशाऽतिशायिनः । कस्मात्? अन्याऽनवकाशप्रसङ्गात् । स्पर्शवता गगनपरिमाणेन एकेनैव द्रव्येण सर्वव्याप्तेः स्पर्शवतामन्येषामनवकाशः स्यात् । प्रथमं गुणत्वे सतीति विशेषणान्न कार्यद्रव्यैर्व्यभिचार इति

१. परिमाणादीनाम्० मू० पु० पा० ।

तदवस्थाऽसम्भवात् । सर्वैर्गुरुत्ववद्भिरेककार्य्यारम्भाऽभावात् । प्रयत्न-विशेषाच्चाऽन्तिकदूरप्राप्तिर्मनुष्यवातहरिणहरिपतत्रिणाम् । न च तस्याऽसम्भवनीयपरावस्थोऽतिशयः । अनन्तत्वान्नभसः । केषांचिन्निरतिशय-प्राप्तानां[1] पातप्रसङ्गात् । निरवशेषगन्तव्य[2]देशप्राप्त्या हि प्रयत्नो निर-तिशयः स्यात् । तदनन्ततया कुतोऽस्य निरतिशयता ? तस्मात्प्रयत्नेनैवाऽसा-धारणगुणेन बुद्धिगुणेन वा व्यभिचारः । ऐश्वर्य्यफलस्य धर्मस्य न सा काष्ठा । तद्वदैश्वर्य्यजननाद्धर्मस्यापि । ईश्वरैश्वर्य्यस्य धर्म्मफलत्वाऽभावात् । क्लेशकर्म्मविपाकाऽऽशयाऽपरामर्शादनेकैश्वर्य्यप्रसङ्गादैश्वर्य्यव्याघातात् । अपि च—

तत्राह—न च गुणधर्मोऽयमिति साम्प्रतम् । कुतः ? तत्कार्यद्रव्यगतानां गरिमादीनां तदवस्थायाः काष्ठाया असम्भवात् । एवं हि गरिमा नाऽवस्थो-दयं पश्येद्यदि सर्वैरेव गरिमगुणशालिभिः सम्भूय परमगरिमगुणमेकं कार्यमारभ्यते । न त्वेतत्सम्भवतीत्याह—सर्वैर्गुरुत्ववद्भिरेककार्यारम्भा-ऽभावात् । अथाऽसाधारण्ये गुणत्वे सतीति विशेषणान्न व्यभिचारः । तत्राह—प्रयत्नविशेषाच्चाऽन्तिकदूरप्राप्तिर्मनुष्यवातहरिणहरिपतत्त्रिणाम् । न च तस्य विशेषस्याऽसम्भावनीयपराऽवस्थोऽतिशयः । कस्माद् ? अनन्तत्वाद्गन्त-व्यस्य नभसः । केषांचिन्निरतिशयप्रयत्नानां पात[3]प्रसङ्गात् । निरवशेष-गन्तव्यदेशप्राप्त्या हि प्राप्तप्रापणीयतया गतिहेतुः प्रयत्नो निरतिशयः स्यात् । तदनन्ततया कुतोऽस्य निरतिशयता ? तस्मात्प्रयत्नेनैवाऽसाधारण-गुणेन बुद्धिगुणेन वा व्यभिचारस्तदवस्थ इत्यर्थः ।

यद्युच्येत धर्मात् खल्वशुक्लादकृष्णात् ज्ञानवैराग्यैश्वर्याणि जायन्ते,[4] तत्र यथा धर्मविशेषजन्मनी वैराग्यैश्वर्ये निरतिशयमेव तज्जन्मविज्ञानमति तत्र व्यभिचार इति, तत्राह—ऐश्वर्यफलस्य धर्मस्य न साऽस्ति काष्ठा तद्वदैश्वर्या-दिजननाद्धर्म्मस्यापि तद्वत्तया व्यपदेश इति । कुतः पुनरशुक्लकृष्णस्य न सा काष्ठे ? त्यत आह—ईश्वरैश्वर्यस्य धर्मफलत्वाऽऽपातात्[5] । अशुक्लाऽकृष्णौ धर्मौ योगिनां भाक्तस्यैश्वर्यस्य न पुनर्निरतिशयस्य । तत् खल्वनुपचरितं भगवति परमेश्वरे एव । न च तद्धर्म एवं तज्ज्ञानमपि । तदयमसिद्धो हेतुः । दृष्टान्तश्च साधनहीनः । कुतः पुनरैश्वर्यं परमेश्वरस्य न धर्मजनितम् ?

---

१. प्रयत्नानामिति २ पु० पा० । २. निःशेषगन्तव्य मू० पु० पा० ।
३. निरतिशयप्राप्तानां पात २ पु० पा० ।
४. कार्यन्ते पु० पा० । ५. अभावात् पु० पा० ।

नाऽसम्भाव्यपराऽवस्थं नभः परिमितं यदि ।
अथाऽनन्ततया तत्त्वं न त्वेषां परिमाणता ॥

इत्यत आह—क्लेशकर्मविपाकाऽऽशयाऽपरामर्शात् । यथाहाऽत्रभगवान् पतञ्जलिः 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर' इति । अविद्याऽस्मितारागद्वेषाऽभिनिवेशाः क्लेशाः । कुशलाऽकुशलानि कर्माणि । तद्विपाका जात्यायुर्भोगाः । आशेरते इत्याशयाः कर्मवासनाः धर्मधर्म्म-विषयत्वात् । तथापि मुक्तात्मभ्यश्च प्रकृतिलयवैदेह्यप्राप्तेभ्यश्च क्लेशादि-भिरपरामृष्टेभ्योऽस्य भग[1]वतो न भेद इत्याशङ्कचोक्तं पुरुषविशेष इति । मुक्तात्मनां खलु पूर्वा बन्धकोटिः, उत्तरा च विदेहप्रकृतिलयानां सनत्कुमार-प्रभृतीनां समस्ति । तस्य तु भगवतोऽयमेव विशेषस्तेभ्यो यतः क्लेशादीना-मिह वैकल्पिकता इति तत्र कुतोऽस्य धर्म्मविशेषजनितमैश्वर्यम् ? इत्यर्थः ।

यस्तु वैघात्यात् वृद्धवचनमतिक्रम्य परमेश्वरैश्वर्यस्यापि धर्मजनित्वम-भ्युपैति तं प्रत्याह—अनेकेश्वरप्रसङ्गाद्धेतोः सर्वेषामैश्वर्यव्याघातात् । अयमर्थः । धर्मजनितत्वे हीश्वरत्वस्य य एव तद्वान् स एवेश्वरो वहवश्च तद्वन्त इति तद्वशाद् वहव ईश्वराः प्रसज्येरन् । तत्रैकस्यैश्वर्येण सर्वेषां समं न्यूनं वा ऐश्वर्यम् । न्यूनत्वे च यदेवाऽतिशायि तदेव तत्स्यादिति भाक्तमैश्वर्य-मितरेषाम् । तच्च स्वाभाविकत्वादुपपद्यते । स्वभावस्याऽव्यवस्थानात् । ननु धर्मजत्वे तस्याऽव्यवस्थितेः साम्येऽपि वा अविरोधेन संभूयेशते परिषद्वत् प्रत्येकं वा ? पूर्वस्मिन्कल्पे परिषदिव न कश्चिदीश्वरः स्यात्, संभूयेशत्वात् । उत्तरत्र त्वेकेनैवेशनायाः कृतत्वादन्यः किं कुर्वन्नीशः स्यात् ? न हीशनाम-कुर्वन्नीशः, न च स्वतन्त्राणामेकाऽभिप्रायसंभवः । ततश्च विरुद्धाऽभिप्रायत्वे सति न कस्यचित्कार्यस्योत्पादः । उत्पादे वा परस्परविरुद्धस्वभावसमलिङ्गि-तमपर्यायेण जगदुपलभ्येत । कर्म्मवदैश्वर्यं कर्मजनितमित्यप्यागमविरुद्धम् । धर्मजस्याप्यपर्यायेण श्रुतेरिति । यच्च काष्ठाप्राप्तिरुपलभ्यते परिमाणा-नामित्युक्तं, तद्विकल्प्य दूषयति—अपि च—

नाऽसंभाव्यपरावस्थं नभः परिमितं यदि ।
अथाऽनन्ततया तत्त्वं न त्वेषां परिमाणता ॥

परिमितं चेदाकाशमिति ततोऽधिकं किमिति न संभाव्येत । साऽ-तिशयपरिमाणदर्शनादेव कुवलाऽऽमलकविल्वादिषु संभावनीयमेतत् । इयतोऽपि नभसो भविष्यति किंचिदधिकपरिमाणमिति शङ्कते—अनन्तत्वान्नभसोऽसम्भा-

१. भूतवतो पु० पा० ।

अनन्तत्वादिति चेत् । किमिदमानन्त्यम् ? अपरिच्छिन्नता । नन्वेष परिमाणाऽभावः । एतावत्तर्हि परिमाणम् । ईदृशीं च काष्ठाप्राप्तिमीश्वरज्ञानस्य वदन्नज्ञानमाविर्भावयति । सोऽयं शान्तिकर्म्मणि वेतालोदयः । सर्वकार्य्याणां कर्तृत्वादेव तर्हि सर्वज्ञत्वम् । उपादानोपकरणसम्प्रदानप्रयोजनाभिज्ञा हि कुलालादयः कर्त्तारः । सर्वेषां च का[1]र्याणामीश्वरः कर्तेति समस्तकार्य्योपादानाद्यभिज्ञः । तथा च सर्वज्ञ इति । किमेते स्वकार्यस्य निरवशेषोपकरणवेदिनः कतिपयोपकरणवेदिनो वा ? न तावदशेषोपकरण-

वनीयमेतत् । शङ्कां निराचिकीर्षुः पृच्छति—किमिदमानन्त्यम् ? शङ्किता ब्रूते । अपरिच्छिन्नतैवाऽऽनन्त्यम् । नैतस्या अन्यदानन्त्यं नाम किंचित् । उत्तरम्—नन्वेष परिमाणाऽभाव एव वचनव्यक्त्यन्तरेणाऽऽश्रितः । तदेव स्फुटयति—एतावत्तर्हि परिमाणं तद्विपरीतता तु तदभावः । अस्तु तर्हि व्योमवदनन्तमीश्वरज्ञानं सैवाऽस्य काष्ठाप्राप्तिः किं नः परिमाणग्रहणेने ? त्यत आह ईदृशीं च काष्ठाप्राप्तिमीश्वरज्ञानस्य वदन्नज्ञानमीश्वरस्याऽऽविर्भावयति । आत्मीयस्यैव विज्ञानस्य साकल्येनाऽपरिज्ञानात् । ज्ञाने वा कुतोऽस्याऽऽनन्त्यं साकल्ये परिच्छेदनान्तरीयकेण इयत्ताऽवधारणेनाऽपास्तत्वात् । सोऽयं शान्तिकर्मणि ईश्वरज्ञानस्याऽऽनन्त्येन विज्ञत्वसमर्थनलक्षणे ईश्वरस्यैव वस्त्वज्ञानलक्षणोपेतो वेतालोदयः ।

संप्रति नैयायिकाः प्रत्यवतिष्ठन्ते—सर्वकार्याणां कर्तृत्वादेव तर्हि सर्वज्ञत्वम् । सर्वकार्याणां तनुभुवादीनामुपलब्धिमान् कर्ता प्रतीयमानोऽन्तर्भावितसर्वज्ञत्व एव प्रतीयते प्रदीप इवाऽन्तर्भावितप्रभावितानः, स्वप्रमाणादित्यर्थः । ननु भवतु कर्तृता, सर्वज्ञता तु कस्मादि?त्यत आह—उपादानोपकरणसंप्रदानप्रयोजनाऽभिज्ञा हि कुलालादयः कर्त्तारः । उपादानमिह परमाणुजातिचतुष्टयम् । उपकरणं समस्तक्षेत्रज्ञसमवायिनौ धर्माऽधर्मौ । संप्रदानं क्षेत्रज्ञाः, यानयं भगवान् स्वकर्मभिरभिप्रैति । प्रयोजनं सुखदुःखोपभोगः[2] क्षेत्रज्ञानां । कुलालादिकर्तृव्यापारविषयस्तूपादानादिः प्रसिद्ध एव । एतदुक्तं भवति । ये यत्कर्तारः ते तदुपादानाद्यभिज्ञाः कुलालादयः । सर्वेषां च कार्याणामीश्वरः कर्त्तेति समस्तकार्योपादानाद्यभिज्ञः । तथा च सर्वज्ञ इति ।

तमेतं परतन्त्रसिद्धान्तं सनिदर्शनमुपन्यस्य दूषयितुमुपक्रमते—किमेते कुलालादयः स्वकार्यस्य निरवशेषोपकरणादिवेदिनः कतिपयोपकरणादिवेदिनो

१. कार्य्याणा पु० पा० । २. पभोगः । क्षेत्रज्ञानाम् पु० पा० ।
३. दूषयितु ।

वेदिनस्ते। अदृष्टस्याऽज्ञानात्। नापि सम्प्रदानप्रयोजनविशेषवेदिनः। तस्याऽनेकस्यापि सम्भवात् तन्मात्रज्ञाने न सर्वज्ञतासिद्धिः। बालोन्मत्ताद-यश्च सर्वकार्य्याणां न प्रयोजनादिवेदिनः। साध्यं चेत्कर्तृत्वं तत्कथमनन्त-र्भावितसर्वज्ञत्वं हेतुमन्तरेण सेद्धुमर्हति।

**ननु सिद्धमेव, सन्निवेशादिमतां बुद्धिमत्पूर्वकत्वात्।**

वा ? न तावदशेषोपकरणादिवेदिनस्ते। कुतः ? अदृष्टस्य सर्वोत्पत्तिमतां निमित्तहेतोरपरिज्ञानात्। नापि संप्रदानप्रयोजनविशेषवेदिनः। तस्य संप्रदानभेदस्य देवदत्तादेः प्रयोजनभेदस्य मधूदकादिधारणादेरनेकस्यापि संभवात्। अथोपकरणादिमात्रविज्ञानं न समस्तोपकरणादिज्ञानं कुललादीनां तर्हि तेनैव निदर्शनेनेश्वरस्यापि तदुपकरणादिमात्रज्ञानं तन्मात्रज्ञाने च न सर्वज्ञतासिद्धिः। कतिपयज्ञो हि तथा सति स्यादिति।

न च तन्मात्रज्ञानपि ईश्वरस्य वालादिवदित्याह—वालोन्मत्तादयश्च स्वकार्याणां न प्रयोजनादिवेदिनो, निरभिप्रायाणां तत्र प्रवृत्तिदर्शनात्। न च कुलालादयो निदर्शनं न वालादय इत्यत्र नियमहेतुरस्ति। साध्यं चेत्तत्कर्तृत्वं तत्कथमन्तर्भावितसर्वज्ञत्वं हेतुमन्तरेण सेद्धुमर्हति ?

अत्र चोदयति—ननु सिद्धमेव। कुतः ? संनिवेशादिमतां बुद्धिमत्पूर्व-कत्वात्। त्रयो हि खलु जगति भावा भवन्ति। प्रसिद्धचेतनकर्त्तृकाश्च यथा प्रासादाऽट्टालगोपुरतोरणादयः। प्रसिद्धतद्विपर्ययाश्च यथा परमाण्वा-काशादयः। संदिग्धतत्कर्तृकाश्च यथा तनुतरुमहीमहीधरादयः। तत्र विवादाध्यासिता उपलब्धिमत्कर्तृकाः कार्यत्वादचेतनोपादानत्वाद्वा, यत्कार्य-मचेतनोपादानं वा तत्सर्वमुपलब्धिमत्कर्तृकं यथा प्रासादादि, तथा च तनु-भुवनादयः, तस्मात्तेऽप्युपलब्धिमत्पूर्वका इति। उक्तहेतुद्वयोपलक्षणार्थं संनिवेशादिमत्त्वग्रहणम्। इतरथा गुणकर्मणोरव्यापनेन हेतोरेकदेशाऽसिद्धत्व-प्रसङ्गात्। न च पृथिव्यादीनां कार्यत्वमसिद्धं महत्त्वे सति क्रियावत्त्वेन वा साऽवयवत्वेन वा वस्त्रादिवत्तत्सिद्धेः। यदि [1]मन्येतबुद्धिमत्त्वमात्रे साध्ये सिद्धसाधनम्, अभिमतं हि परेषामपि कर्मजत्वात्कार्यजातस्य कर्म्मणश्चेतन-हेतुत्वात्तत्कारणत्वं जगतः। सर्वज्ञपूर्वकत्वे तु न तेन हेतोर्व्याप्तिर्दृष्टचरी। दृष्टान्तश्च साध्यहीनः। कुलालादीनामसर्वज्ञत्वात्। विरुद्धता च हेतोः। असर्वज्ञपूर्वकत्वेनैव कुम्भादावुत्पत्तिमत्त्वस्य वाऽचेतनोपादानत्वस्य वा व्याप्ते-रुपलब्धेः। न चोपलब्धिमत्पूर्वकत्वमात्रं साधनविषयः। तद्विशेषस्य तु

---

१. ताऽबुद्धिमत् पु० पा०।

सर्वज्ञपूर्वकत्वस्याऽतद्विषयस्यापि ततः सिद्धिरिति साम्प्रतम्। तथा हि। यद्यसौ विशेषो न साधनव्याप्तः कथमतस्तत्सिद्धिः, सिद्धत्वात्कथमविषयः, विषयश्चेत्कथं न स्वाश्रयात्तद्दोषगतिं स्पृशे दि ?ति। तदयुक्तम्। सामान्यमात्रव्याप्तावप्यन्तर्भावितविशेषस्यैव सामान्यस्य पक्षधर्मतावशेन साध्यधर्मिण्यनुमानात्। इतरथा सर्वाऽनुमानोच्छेदप्रसङ्गात्। तथा हि वह्न्यनुमानमपि न वह्निसामान्यमात्रविषयं, तस्य प्रागेव सिद्धत्वात्। नापि तद्विशिष्टगिरिगोचरो, वह्नित्वसामान्यस्य तत्सम्बन्धाऽभावेन तद्विशेषत्वाऽनुपपत्तेः। इतरथा गोत्वसमवायादिव गावः शाबलेयादयः पर्वतोऽपि वह्नित्वसमवायाद्वह्निः प्रसज्येत। अस्ति च वह्नित्वेन गिरेः संयुक्तसमवायः सम्बन्ध इति चेत्, तर्हि नाऽप्रतिपद्य पर्वतसंयुक्तं वह्निविशेषमसौ शक्यप्रतिपत्तिरिति वह्निविशेषास्याप्यनुमानम्। तथा[1] न पूर्वोक्तदोषप्रसङ्गः।

एवमिन्द्रियाऽनुमानेऽपि स एव दर्शनीयः। तथा हि। तत्रापि नेन्द्रियकरणिका काचित् क्रियोपलब्धा। न खलु च्छिदादयः क्रिया इन्द्रियसाधनाः, व्रश्चनादीनामनिन्द्रियत्वात्। न च व्रश्चनादिसाधनाः सम्भवन्ति रूपादिपरिच्छित्तिलक्षणाः क्रियाः। तस्माद्यथैव क्रियात्वसामान्यस्य सत्यपि करणमात्राऽधीनत्वाव्याप्तत्वे पक्षधर्म्मतावशादिन्द्रियलक्षणकरणविशेषसिद्धिः तथेहापि सत्यप्युत्पत्तिमत्त्वस्याऽचेतनोपादानत्वस्य चोपादानोपकरणसंप्रदानप्रयोजनज्ञकर्तृमात्रव्याप्तत्वे विवादाध्यसितेषु पक्षधर्म्मतावलाद्विशिष्टस्य तस्य सिद्धिः। अन्यथा सामान्यस्यापि व्यापकाऽभिमतस्याऽसिद्धिः स्यात्, निर्विशेषस्याऽसम्भवात्, विशेषस्य चाऽन्यस्याऽनुपपत्तेः। असर्वज्ञस्य चाऽत्रादृष्टादिभेदविज्ञानरहितस्याऽधिष्ठातृभावाऽसम्भवात्। तेन यद्यप्युपलब्धिमत्कर्तृकत्वं व्याप्तिविषयस्तथापि तद्विशेषस्य पक्षधर्म्मतावलात् प्रतिलम्भ इति विशेषविषयमनुमानम्। न चोक्तदोषप्रसङ्गः। तस्य साध्यदृष्टान्तयोर्द्धर्म्मविकल्पादुत्कर्षाऽपकर्षाऽनुयोगस्य सर्वाऽनुमानसाधारण्येनाऽनुमानमात्रप्रामाण्यप्रतिक्षेपहेतुत्वात्। तत्सिद्धं विवादाऽध्यासिता उपलब्धिमत्कर्तृका इति।

अत्रेप्सितप्रसिद्ध्यायत्तसाधनं शब्दोक्तं तदायत्तोपादानादिविषयत्वात् यस्य यदायत्तमुपादानादिविषयत्वं तत्तत्प्रसिद्ध्यायत्तसाधनं यथा धूमो वह्न्यादेर्द्देशविशेषसिद्ध्यधीनोपादानादिविषयत्वन्तदधीनसिद्धिरिति। न चाऽस्य सकलक्षेत्रज्ञसमवायिधर्म्माऽधर्मज्ञानकारणाऽभावेन तदज्ञानम्। तत्समवेतानां ज्ञानचिकीर्षाप्रयत्नानां नित्यत्वात्। न च बुद्धितन्नित्यत्वयोः कश्चिद्विरोधः।

---

१. तथा च पूर्वोक्तदोषप्रसंगः पु० पा०।

बुद्धेरनित्यायास्तत्र तत्रोपलब्धेर्विरोध इति चेत् ? तर्हि तोयादिपरमाणवोपि न रूपादिमन्तः प्रसज्येरन् । पार्थिवानां रूपादीनां कार्याणामुपलब्धेः, इह च तेषामकार्यत्वात् । हिमकरकादौ रूपादिदर्शनात् कार्यद्रव्यगतानां च तेषां कारणगुणप्रक्रमेण भावात् । पाथसीयानामपि रूपादिमत्ता । सद[1]कारणतया च तद्गतानि रूपादीनि नित्यानीति चेत् । इहापि कार्यत्वेनाऽचेतनोपादानत्वेन वा समस्तविषयज्ञानाऽनुमानात् तस्य च सद[2] कारणतया नित्यत्वसिद्धेः समानत्वात् परपुरुषसमवेतावपि धर्म्माऽधर्मावधिष्ठातुं शक्नोति सम्बन्धात् । न हि साक्षात्संयोगसमवायावेव सम्बन्धौ, संयुक्तसंयोगिसमवायस्यापि तद्भावात् । प्रयुक्ताः खल्वीश्वरेण परमाणवः तैरेव[3] क्षेत्रज्ञाः तत्समवेतौ धर्माधर्माविति, संयुक्तसमवायो वा क्षेत्रज्ञैरीश्वरस्य संयोगात् । अनुमानात् संयोगसिद्धेः। ईश्वरः क्षेत्रज्ञसंयुक्तो मूर्त्तद्रव्यसंयोगित्वात् यो मूर्त्तद्रव्यसंयोगी स क्षेत्रज्ञसंयुक्तः यथा घटादिः । स चास्य संयोगोऽन्यतरोभयकर्मसंयोगानां तत्कारणानामभावादजन्यः । कार्यारम्भाऽऽभिमुख्यमेव धर्म्माऽधर्मयोः प्रवृत्तिः । सा च देशकालादिवदीश्वरप्रत्नमप्यपेक्षते । न चैवं वाच्यं धर्म्माऽधर्म्मौ परमाणून्वा स्वधर्मा[4]नुपगृहीतान् कथमीश्वरः प्रयत्नेन प्रेरयतीति । विषविद्याविदा तदीयधर्म्माऽनुपगृहीतस्य विषशकलस्य प्रेरणदर्शनात् । ज्ञानेच्छाप्रयत्नानां च तद्वर्तिनां नित्यत्वसिद्धौ कृतमस्य शरीरग्रहणेन । तन्मात्रादेव परमाणूनामदृष्टादीनां च प्रवृत्तौ शरीरपृथिव्यादिलक्षणस्य कार्यस्योत्पत्तेरुपपत्तेः, न चैतद्वाच्यं नेश्वरः कर्त्ता पृथिव्यादीनां, प्रयोजनाऽभावादनित्यं चेश्वरविज्ञानं विज्ञानत्वादिति । ईश्वरस्य तज्जानस्य च धर्म्मिणोऽप्रसिद्धौ हेतोराश्रयाऽसिद्धत्वात् । तत्सिद्धौ वा कर्तुर्नित्यज्ञानस्येश्वरस्याऽनुमानादेव धर्म्मिग्राहिणः सिद्धेस्तद्विरोधान्न तदाश्रयमनुमानम् आत्मानमापादयितुमर्हति । तत्किमीश्वरज्ञानाऽनित्यत्वग्राहिणोऽनुमानस्य विशेषविषयतया वलीयस्त्वप्रसाधनप्रयत्नेन ? मूल एवास्य विहितः कुठारः । न चाऽज्ञातरूपाणामिन्द्रियमनसां विज्ञानोत्पत्तिं प्रति साधनभावस्य च वत्सविवृद्धिनिमित्तस्याऽचेतनस्य क्षीरस्य स्वातन्त्र्येण प्रवृत्तेश्च । वनविटपिनां च विना प्रयत्नमुत्पादस्य च दर्शनाद्व्यभिचार इति साम्प्रतम् । सर्वेषामेव तेषां विवादास्पदत्वेन पक्षपक्षे निक्षेपात् । न च शशशृङ्गाऽस्तिता, तदनुपलब्धिविरोधात् । अपरोक्षदर्शना[5]नर्हतया भगवतस्तद्विरोधाऽनुपपत्तेः । अन्यथा सर्वाऽनुमानोच्छेदप्रसङ्गात् । शृङ्गस्य तु शशशिरोवर्त्तिनो गवादिगतस्येव दर्शनार्हस्याऽनुपलब्धिनिराकृतस्य साधनार्ह-

१. सदाकारणतया च पु० पा० ।
२. सदाकारणतया ।
३. तेवक्षेत्रज्ञाः पु० पा० ।
४. स्वधर्मागृहीतान् पु० पा० ।
५. नार्हतया पु० पा०

वार्त्तमेतत् ।

त्वात् । न च पक्षेण व्यभिचारः । सर्वत्र तस्य सुलभतया सर्वानुमानोच्छेद-प्रसङ्गात् । व्यतिरेको वा हेतुः कार्यमात्रं पक्षीकृत्य प्रयोक्तव्यः । स चैवं प्रयोगमारोहति । नित्येतरत्समस्तसर्वज्ञपूर्वकमुत्पत्तिमत्त्वादचेतनोपादान-त्वाद्वा । यत्पुनर्न सर्वज्ञपूर्वकं न तदुत्पत्तिमत् अचेतनोपादानं वा । यथा परमाण्वादि । न चेदं तथा तस्मात्सर्वज्ञपूर्वकमिति । सर्वज्ञपूर्वकत्वेन च परं प्रत्यसिद्धेन कार्यमात्रमेव पठ्यत इति भवति पक्षः । यदि पुनश्चेतनाऽनधिष्ठि-तानि स्वं कार्यं कुर्युः ततो यत्र क्वचनाऽवच्छिन्नानि कार्यं जनयेयुरिति न देशकालप्रतिनियतप्रसवं कार्यमुपलभ्येत । हेतुसमवधानजननतया कार्यं न प्रत्येकं कारणैर्जन्यत इति चेत्सत्यं, समवधानमेव तु कारणानामन्योन्यम्[1] कुतः ? कादाचित्कपरिपाकाददृष्टविशेषादिति चेत्, स खल्वयमप्यचेतनः कथं यथावत्कारणानि संनिधापयेत् । नो खलु यत्र क्वचनाऽवस्थितानि दण्डादीनि विना कुम्भकारप्रयत्नमदृष्टविशेषादेव परस्परं संनिधीयन्ते, सन्नि-हितानि वा कार्यस्येशते । तस्मात् कारणसमवधानव्याप्तत्वात् कार्योत्पाद-नस्य तस्य चोपलब्धिमत्पूर्वकत्वाऽभावेऽनुपपत्तेः व्यापकनिवृत्त्या विपक्षात्का-र्योत्पादे निवर्तमाने उपलब्धिमत्त्वेन व्याप्यत इति प्रतिबन्धसिद्धिः । न चेश्वरज्ञानमप्रत्यक्षमिन्द्रियार्थसंनिकर्षाऽनुत्पादादिति साम्प्रतम् । लोकस्य हि प्रत्यक्षस्य तल्लक्षणम् । अस्य हि निखिलाऽर्थसाक्षात्कारित्वं लक्षणं वेदि-तव्यम् । अत्र चाऽऽम्नायो भवति "एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिवी विधृते तिष्ठतः", "द्यावाभूमी जनयन् देव एक" इति । स्मृतिश्च भवति ।

"अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा" ।।

न चेश्वरज्ञानस्य शरीरेन्द्रियाऽपेक्षयोत्पादः । अस्ति हि श्रुतिः 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः । स वेत्ति विश्वं न हि तस्याऽस्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम्' इत्यादिका । तदनुमाना-ऽऽगमाभ्यां सिद्धमीश्वरस्य कर्तृत्वं सर्वज्ञत्वं चेति ।

तदेतद्दूषयति—वार्त्तमेतत् । इदमत्राऽऽकूतम् । न तावत्पक्षधर्मताव-शात्तदधिष्ठानविशेषो युगपदसंख्येयस्थावरादिलक्षणकार्यदर्शनादखिलविषय-नित्यविज्ञानमात्रशाली षड्गुण ईश्वरः सेद्धुमर्हति, न ह्येतावता विश्वं कार्य-

---

१. मन्योन्यं कुतः

मुपजायते। न जातूपादानादिज्ञोऽपि कुम्भकारः कुम्भमचिकीर्षुश्चिकीर्षुर्वा तदुपादानादिष्वलसतयाऽप्रयतमानः कुम्भाऽऽरम्भाय कल्पते। तस्मात् ज्ञान-चिकीर्षाप्रयत्नसमुदायजन्मा कार्योपादो न ज्ञानमात्राद् भवितुमर्हति।

मा भूदार्द्रेन्धनदहनजन्मा धूमः केवलाऽऽर्द्रेन्धनाद्वह्नेर्वा पृथग्जनज्ञान-विलक्षणमीश्वरज्ञानमसहायमेव विश्वस्मिन् कार्ये पर्याप्तमिति चेत्? हन्त भोः किमस्य ज्ञानेनापि स्वरूपाऽतिशय एवाऽस्याः सहायस्तत्र तत्र कार्ये वर्त्स्यतीति न किंचित्कार्यमसहायादेकस्मादिति चेत्। ननु तस्यैव स्त एव क्षेत्रज्ञगतौ धर्माऽधर्मौ, सन्ति च परमाणवः संहाया इति किमस्य ज्ञानेन? अविज्ञातास्ते न प्रवर्त्तन्त इति ज्ञानमेषि व्यमिति चेत्। अथाऽविज्ञातास्ते कस्मान्न प्रवर्त्तन्ते? तथाऽनुपलम्भात् कुम्भाद्युपायेष्विति चेत्। तर्हि ज्ञानवच्चिकीर्षाप्रयत्नावप्यास्थेयौ तत्रापि च ज्ञानं चिकीर्षाविशेषे उपयुज्येत। स च प्रयत्नभेद इति प्रयत्नहेतुभेद एव साक्षात्कारोदये हेतुरिति कथं तमन्त-रेण तत्सम्भवः? न हि वह्निमन्तरेण तुषप्रक्षेपफूत्कारमात्रादेवौदनं सिद्ध्यति।

यदि मन्येत स्त एव चिकीर्षाप्रयत्नावपि भगवतीश्वरे इति? अथ किमेतौ नित्यावनित्यौ वा? नित्यौ चेत्कृतमीश्वरस्य ज्ञानेन चिकीर्षा-प्रयत्नोत्पादाऽनुपयोगिना। तयोर्नित्यतया स्वोत्पादोपयोगाऽनपेक्षणात्। न च प्रयत्नवत् ज्ञानमपि साक्षात्कार्योत्पादनाङ्गम्। प्रयत्नभेदेन खल्वयम-धितिष्ठत्युपादानादि, न तत्समये ज्ञानस्य कश्चिदुपयोगश्चिकीर्षाया वा निष्पादितक्रिये कर्म्मण्यविशेषाधायिनः साधनस्य साधनन्यायाऽतिपातादिति दत्तजलञ्जालिरीश्वरस्य[1] सर्वज्ञता। अथाऽनित्यौ; ततस्तयोरुत्पत्तिकारणं वक्तव्यम्। ननु नित्यज्ञानमेवोत्पत्तिमूलकारणमस्ति। ततः किमपरेण कारणेन? अहो वत प्रमादो यदयमात्ममनःसंयोगविशेषाऽसमवायिकारणौ इच्छाप्रयत्नौ तमन्तरेण ज्ञानमात्रादेव भवत इत्यपि वक्तुमध्यवसितः। तथा सत्ययमतण्डुलमपि मण्डं साधयेदेव।

सन्त्येवाऽस्य मुक्तात्ममनोभिः संयोगास्तेन तत्सहायस्तत्र चिकीर्षा-प्रयत्नप्रचयं युगपत्प्रसूते तत्कार्योपजननायेति चेत्? ननु मनांसि तत्संयो-गाश्च किमनधिष्ठितानि चिकीर्षाप्रयत्नौ प्रसुवते अधिष्ठितानि वा? यद्य-नधिष्ठितानि[2] ततस्तैरेव व्यभिचारः। अधिष्ठानं तु प्रयत्नमन्तरेणाऽयुक्त-मेव। प्रयत्नान्तरेण चिकीर्षान्तरजन्मना तदधिष्ठानम्। अनादित्वाच्चिच-कीर्षाप्रयत्न-प्रवाहस्येति चेत्? यथाऽयमुत्पन्नसंजिहीर्षुः ईश्वरः क्षेत्रज्ञेषु

१. जलञ्जलिरीश्वरस्य पु० पा०। २. अधिष्ठितान्यनधिष्ठितानि २ पु० पा०।

सन्निवेशादिमत्सर्वं बुद्धिमद्धेतु यद्यपि ।
प्रसिद्धेः सन्निवेशादेरेककारणता कुतः ॥

प्रतिवन्धवृत्तिधर्म्माधर्मनिचयेषु जगति च परमाण्ववस्थामापन्ने निर्व्यापारः कियन्तमपि कालं स्थित्वा यदा चिकीर्षति प्रयतते वा तदा तस्य चिकीर्षा-प्रयत्नयोर्जनयितव्ययोर्न स्थितं चिकीर्षान्तरं वा प्रयत्नान्तरं समस्तीति कुतो मनसां तत्संयोगानां वाऽधिष्ठानमि?त्यनधिष्ठितेभ्यो मनस्तत्संयोगेभ्यो न प्रयत्नचिकीर्षे उत्पद्येयाताम् । उत्पद्यमाने वा कथं कार्यत्वमचेतनोपादानत्वं वा न हेतुं व्यभिचारयतः । न च सवितृप्रकाशवदीश्वरस्य ज्ञानमात्र-मिच्छामात्रं प्रयत्नमात्रं तत्तद्भावभेदोपधानात्तद्विषयं भवतीत्यपि साम्प्रतम् । परस्पराश्रयदोषप्रसङ्गात् । तत्तद्भावोपधाने तत्तद्विषयत्वे च तत्तदुपधानम् । उपधीयमानाऽनधिष्ठाने तदुपधानस्य कार्यस्याऽनुत्पादात् । तस्य चाऽधिष्ठा-नादुत्पत्तेरिति । ज्ञानानित्यत्वपक्षे च दूषणमुपरिष्टात्प्रवेदयिष्यते ।

सोऽयमीदृशो विशेषो विचाराऽसहः कथं पक्षधर्म्मताबलादपि साध्य-धर्मिण्युपसंह्रियते ? न हि स्वयमनुपपद्यमानमन्यस्योपपादनायाऽलम् । का तर्हि सामान्यस्याऽऽनुमानिकस्याऽसति विशेषे गतिः ? किमवश्यंभवितव्यमस्य गत्या ? ननु प्रमाणसिद्धमुपपादनीयं यस्याऽनुमोपपद्यते यत् नामाऽनुपपद्य-मानम् अस्तु तस्य परमनुपपत्तिरेव । ननु प्रमाणसिद्धमनुपपन्नमिति विप्रति-षिद्धम् । एवं तर्हि प्रमाणसिद्धिप्रतिघात एवास्त्वविप्रतिषेधाय, न पुनरनुपपन्न-स्योपपत्तिः । कतमत्तर्हि साधनस्येदं दूषणम् ? न दूषणम् साधनस्य तस्य नाम वादिनः यः ससहायनिःसहायनित्याऽनित्यत्वादिविशेषपरिहाराय गगनकुसुमाय-माने क्षित्यादिवर्त्तिनि बुद्धिमत्पूर्वकत्वसामान्ये साधनाऽनर्हं साधनं प्रयोजयति । न च सम्भवति तादृशो विशेषो यमास्थाय क्षित्यादौ बुद्धिमत्पूर्वकत्वसामान्यं व्यवतिष्ठेत । न चैवं सर्वाऽनुमानोच्छेदप्रसङ्गः । सम्भवद्विशेषविषयत्वादि-तरेषामनुमानानाम् । न हि न सम्भवति पर्वतनितम्ववर्त्तिवह्निविशेषोऽ-नुद्भूतरूपस्पर्शो वा तैजसश्चक्षुरवयवो रूपोपलब्धिसाधनम् । कारणानां च चित्ररूपसंस्थानसामर्थ्यानां तत्र तत्रोपलब्धेः । तस्माद्यथा कश्चिन्निशा-तमसिमच्छेद्यमाकाशं प्रति व्यापारयन्पुरुषो निगृह्यते न पुनरसिमाकाशं वा तद्वत्कार्यत्वमचेतनोपादानत्वं वा तर्कसहायं लब्धपरिपाकाऽदृष्टवत्क्षेत्रज्ञ-परमाण्वादिसंयोगकारणमात्रविषयमीश्वरे सर्वज्ञे इति तदिदमुक्तं वार्त्तमेतदिति ।

यत्तु वृद्धैर्दूषितं तदतिप्रसिद्धतयोपेक्ष्य दूषणान्तरमाह—

संनिवेशादिमत्सर्वं बुद्धिमद्धेतु यद्यपि ।
प्रसिद्धेः संनिवेशादेरेककारणता कुतः ॥

तत्र वृद्धा दूषयांबभूवुः। किमुत्पत्तिमत्त्वमात्रमत्र हेतुः क्रियते किं वा तद्विशेषः? यद्दृष्टेरक्रियादर्शिनोऽपि कृतबुद्धिरुपजायते। एतदुक्तं भवति। त एव खलूत्पत्तिमन्तोऽचेतनोपादानबुद्धिमत्पूर्वका ये बुद्धिमदन्वयव्यतिरेकाऽनुविधायिभावाऽभावाः प्रमाणेनोपलब्धाः, प्रासादाऽट्टालकगोपुरतोरणादयश्च तथा, न तु तनुभुवनादयः। न खलु तद्भावाऽभावयोर्बुद्धिमद्भावाऽभावाऽनुविधानं कदाचिदप्युपलब्धम्। घटादेरुत्पत्तिमतस्तथोपलम्भादनुत्पत्तिमतश्च गगनादेरनुपलम्भादुत्पत्तिमत्त्वस्य च तनुभुवनादावप्यभेदात् तथाभाव इति चेत्? तत्किमिदानीं मृद्विकारस्य घटादेर्मनुष्यकार्यत्वमुपलब्धमिति शक्रमूर्धाऽपि तत्कार्यः। न च मृद्विकारत्वं संस्थानं वा भिद्यते। तद्विधसंस्थानस्यापि मृद्विकारस्य 'मनुष्यनिर्माणदर्शनात्। तादृशत्वेऽपि तस्य तदन्वयव्यतिरेकाऽनुविधानाऽदर्शनात् न तत्कार्यत्वमिति चेत्। न। इहापि साम्यात्। अत्रापि हि यस्य यस्य बुद्धिमद्भावाऽभावाऽनुविधानमस्ति तस्य तस्य सर्वस्याऽस्तु नाम तत्पूर्वता प्रासादादेः, न पुनस्तद्विधस्यापि भुवनादेर्भवितुमर्हति। तस्य तदन्वयव्यतिरेकाऽनुविधानाऽभावात्। नन्वयं योऽसौ धूमविशेषो वह्निभावाऽभावाऽनुविधायिभावाऽभाव उपलब्धः स सर्वो वह्निपूर्वोऽस्तु न तु पर्वतनितम्बवर्ती तथेति कथं ततो वह्निरनुमीयते। सामान्यवद्विषयत्वेऽपि तु कार्यकारणभावाऽवधारणस्येहापि साम्यम्।

तत्किमिदानीं मनुष्यकार्याः कुड्यादय उपलब्धा इति शक्रमूर्द्धापि[1] तथास्तु? कस्यचिद्विशेषस्य कुड्यादिभ्यः शक्रमूर्द्धादेः सम्भवान्नैवमिति चेत्। स तर्हि प्रासादादिभ्य[2] संभ[3]वति तनुभुवनादावपीति न विशेषः। न त्वयमेवंविधो धूमविशेषाणां वह्न्यन्वयव्यतिरेकाऽनुविधायिनामस्ति पर्वतगतधूमात्स्वरूपेण विशेषः। अत एव न पाण्डुद्रव्यमात्रात्कुमुदकपोतादेरनुमानम्। धूमत्वसामान्यस्यैव तेभ्यो भेदाऽऽपादकत्वात्। न च हेतुसमवधानं चेतनमन्तरेणाऽसम्भवि। अदृष्ट[4]परिपाकादेव कादाचित्काद्देशकालभेदसमासादितजन्मनस्तदुपपत्तेः। ततश्च कार्यनियमसिद्धेः। न खलु नियतप्रकारसामर्थ्येभ्यः कारणेभ्यः कार्यमनियमेनोत्पत्तुमर्हति। अन्यथा कर्तृचैतन्येऽप्ययं दुर्वारः प्रसङ्गः। तस्यापि कारणसामर्थ्याऽनुरोधेन नियोजकत्वात्। न च चेतनमन्तरेण कुम्भादिकारणानि न प्रवर्त्तन्ते इति पृथिव्यादिकारणैरपि न प्रवर्त्तितव्यम्। यथा हि देहवत्प्रयत्नमन्तरेण कुम्भादिकारणेष्वप्रवर्तमाने-

---

१. राजमूर्धा २ पु० पा०। २. छविनानुमानं २ पु० पा०।
३. संवति पु० पा०। ४. अदृष्टपरिका पु० पा०।

दृष्टा प्रेक्षापूर्वप्रासादादिसन्निवेशवैलक्षण्येऽपि चेतरेषां तरुगिरिसागरादीनां यद्यपि सन्निवेशमात्रसामान्यात्, तथा सति विभक्तेशतया स्वार्थे पराऽनुग्रहे वा दुःखोत्तरसर्गदर्शनात् प्रयोजनाऽभावनिराकृताऽपि चैतन्यमात्रसिद्धिः स्यात् एकत्वं तु तस्य कुतस्त्यम् ? न हि घटरथादय एकबुद्धिमत्पू-

ष्वपि पृथिव्यादिकारणानि न देहवतः प्रयत्नमपेक्षन्ते स्वप्रवृत्तिं प्रति तथा चेतनमात्रप्रयत्नमपि नाऽपेक्षिष्यन्ते, किं त्वदृष्टपरिपाकवत्क्षेत्रज्ञसंयोगा[1]देव प्रवर्त्स्यन्तीति किं तदभिज्ञेन कल्पितेन ? तस्माद्विशिष्टमुत्पत्तिमत्त्वमसिद्धम् ।

पृथिव्यादिषु उत्पत्तिमत्त्वमात्रं त्वप्रयोजकं विशेषप्रयुक्तव्याप्त्युपजीवित्वेन स्वाभाविकप्रतिबन्धवैकल्यात् । स्वाभाविकप्रतिबन्धवतश्च हेतोरनुमानाऽङ्गत्वात् । इतरथोपाध्यायदर्शनादेरपि शिष्याद्यनुमापकत्वप्रसङ्गात् । अपि च प्रेक्षावतां प्रवृत्तिः प्रयोजनवत्तया व्याप्ता । न चेश्वरस्य प्रेक्षावतो जगन्निर्माणे प्रयोजनं पश्यामः । प्राप्तनिखिलप्राणीयस्य प्राप्तव्याऽभावात् । अन्ततः क्रीडासाध्यस्यापि सुखस्याऽवाप्तत्वात् । नापि कारुण्येन परार्थं प्रवर्तते । सुखमयजीवलोकसर्जनप्रसङ्गात् । दुःखमयी तु सृष्टिर्बहुल-[2]मुपलभ्यते । न च धर्म्माऽधर्म्मसहायस्य निर्माणवैचित्र्यमिति साम्प्रतम् । अधर्मस्य जगद्दुःखाऽहेतोः कारुणिकाऽनधिष्ठानाऽनुपपत्तेः । अनधिष्ठितस्य वा कार्यकरणे हेतोर्व्यभिचारप्रसङ्गात् । न च दुःखाऽनुभवनं वैराग्योत्पादनद्वारेणाऽपवर्गोपयोगीति परहितकाम्यया तदीयमधर्ममधितिष्ठतीति साम्प्रतम् । ईश्वराऽधीनत्वाद् दुःखोत्पादनस्य तस्य च तत्र वैमुख्येन[3] तदनुत्पादे तदत्यन्तविमोक्षलक्षणस्याऽपवर्गस्य फलतः प्राप्तेः । न चाऽप्रयोजनमपि स्वभावादेव भावयतीति युक्तं, प्रेक्षावत्त्वव्याघातात् । तथा च तत्प्रणीतेष्वागमेष्वनाश्वास इति तत्रोपेक्षां दर्शयित्वा दूषणान्तरमाह—

दृष्टा प्रेक्षापूर्वप्रसादादिसंनिवेशवैलक्षण्येऽपि चेतरेषां तरुगिरिसागरादीनां यद्यपि संनिवेशमात्रसामान्याच्चैतन्यमात्रसिद्धिः स्यादिति परेण सम्बन्धः । तथा सति विभवतेशतया स्वार्थे पराऽनुग्रहे वाऽसति कस्मान्न परार्थाऽनुग्रह ? इत्यत आह—दुःखोत्तरसर्गदर्शनात् । प्रयोजनाऽभावनिराकृतापि चैतन्यमात्रसिद्धिः स्याद् यद्यपि एकत्वं तु तस्येश्वरस्य कुतस्त्यं घटरथादीनां कर्तुस्तथा दर्शनादिति चेत् तत्राह—न हि घटरथादय एकबुद्धिमत्पूर्वकाः ।

---

१. परिपाकवदेवज्ञसंयोगात् २ पु० पा० ।
२. बहुला २ पु० पा० ।
३. वैगुण्येन २ पु० पा० ।

र्वकाः। ईश्वरपूर्वकत्वेन तथेति चेत् साध्यं तच्चेतनमात्रनान्तरीयकत्वात्सन्निवेशस्य केषांचित्तथा दर्शनात् अन्यत्रापि तथाभाव इति चेत्। दृष्टान्तसाध्याभ्यामनेकान्तः। सर्वसाध्यत्वे दृष्टान्ताऽभावः। द्विकर्तृकत्वे च घटादेर्भुवनाद्यपि तथेति ईश्वरेश्वरप्रसङ्गादनवस्था। अत एव न द्वितीयाऽनुमानम्। एकाऽनुमानमपि तर्हि मा भूत्, तथाप्यनवस्थायास्तुल्यत्वात्। अथ न द्वयधिष्ठातृका घटादयः सर्वमेकाधिष्ठातृकमिति। न सर्वज्ञत्वसिद्धिः।

शङ्कते—ईश्वरकर्तृकत्वेन सर्वस्य कार्यजातस्य तथैककर्तृकत्वमिति चेत् साध्यमीश्वरपूर्वकत्वं सर्वस्य कार्यजातस्य तत्कथं तदेव साधनतयोपादीयत इत्यर्थः। पुनः शङ्कते—तच्चेतनपूर्वकत्वमात्रनान्तरीयकत्वात् संनिवेशस्य केषांचिद् घटरथादीनां तथा दर्शनादन्यत्रापि क्षित्यादौ तथाभाव इति सिद्धमीश्वरपूर्वकत्वम्। तथा चैककर्तृकत्वमिति चेत्। निराचष्टे—दृष्टान्तसाध्याभ्यामनेकान्तः। दृष्टान्ते हि घटादावेकः कर्त्ता कुलालादिः, साध्ये च क्षित्यादौ ईश्वर इति व्यभिचारान्नोत्पत्तिमत्त्वमचेतनोपादानत्वं वा चेतनात्मानं कर्त्तारं तनुभुवनादीनां साधयितुमर्हति। अनेककर्तृकस्य दृष्टान्तसाध्ययोर्दर्शनादित्यर्थः।

यदि तु सर्वमेवेश्वरपूर्वकत्वेन साध्येत ततो घटादीनामीश्वरपूर्वकत्वेन पक्षविनिक्षेपात् दृष्टान्ताऽभाव इत्याह—सर्वसाध्यत्वे दृष्टान्ताऽभावः। न च व्यतिरेकी हेतुः सम्भवति। कादाचित्काऽदृष्टपरिपाकादेव देशकालादिप्रतिनियतकार्योत्पादोपपत्त्या व्यतिरेकाऽव्यभिचारस्याऽनिश्चयादिति भावः। यथा चैतत्तथोपपादितमधस्तात्।

अपि चाऽस्त्वीश्वरः कर्त्ता घटादीनां तथापि प्रत्यक्षपरिदृष्टकुलालादिरपि कर्त्तेति द्विकर्त्तृकत्वे च घटादेर्भुवनाद्यपि तथा तेनैव निदर्शनेन द्विकर्तृकत्वमितीश्वरस्येश्वरप्रसङ्गादनवस्था।

एतदुक्तं भवति। यथा प्रत्यक्षपरिदृष्टकुलालादिकर्तृकेऽपि घटादौ तावतैवोपपद्यमानोत्पादे चेतनान्तरमीश्वरस्तत्कर्त्तारं कुलालमधिष्ठातुं कल्पते तथेश्वरमधिष्ठातुमीश्वरान्तरम्, एवं तमित्यनवस्थेति। अत एव चोदयति—अनवस्थाप्रसङ्गादेव न द्वितीयेश्वरस्याऽनुमानम्। ततो न द्विकर्तृकतेति चेत्। परिहरति—एकाऽनुमानमपि तर्हि मा भूत्। कस्मात्? तथा एकानुमानेऽप्यनवस्थायास्तुल्यत्वात्। लब्धपरिपाकाऽदृष्टवत्क्षेत्रज्ञसंयोगादेव क्षित्यादिलक्षणकार्योत्पत्तावेकस्यापीश्वरस्याऽनुमाने तुल्यैवाऽनवस्थेत्यर्थः।

शङ्कते—अथ न द्वयधिष्ठातृका घटादयः किं त्वेकैककुलालाद्यधिष्ठातृकाः सर्वे। ततश्च नेश्वरान्तराऽनुमानं न चाऽनवस्थेति। निराकरोति—न

रथाङ्गाद्यवयवा नानातक्षनिर्मिता अपि दृश्यन्ते जगति प्राय उपकार्योपकारकाः, एवं च रथाङ्गाद्येकतक्षपूर्वकं दृष्टम्। तस्माज्जगदप्येककर्तृपूर्वकमिति। तदेतद् व्यभिचारि। नानातक्षपूर्वकस्यापि दर्शनात्।

हेत्वभावप्रतिक्षिप्तं न कार्य्यमनुमीयते।
हेतुर्न चेतनामात्रं प्रेक्षा त्वनुपपत्तिका॥

न हि कर्म्माशयाऽभावे तस्य शरीरेन्द्रिययोगो बुद्धिरैश्वर्य्यं वा सम्भवतीति प्रमाणविरुद्धस्तदुपगमः। हेत्वभावे कार्य्याऽनुपपत्तेः। उपपत्तौ वा न संनिवेशात्तदनुमानम्। कर्म्माशयपूर्वकत्वे वा तज्ज्ञानमन्यतः स्यात्।

सर्वज्ञत्व[१]सिद्धिः। यदि हि सर्वकार्याणामेकः कर्त्ता स्यात्ततोऽज्ञस्य तत्त्वाऽनुपपत्तेः सर्वज्ञता स्यात्। अथ पुनरेकैककार्यमेकैकेन कर्त्ता जन्यत इति यो यज्जनयति स तत्कारणमात्रज्ञ एवेति न सर्वज्ञ इत्यर्थः।

यदपि कश्चित् प्रमाणयेत् यत्परस्परोपकार्योपकारकत्वेन व्यवस्थितं तदेककर्तृकं दृष्टं, यथा रथाऽवयवा एकतक्षपूर्वका दृष्टाः, तथा च तनुभुवनानि।

अत्रापि समस्ति कथंचित् परस्परोपकार्योपकारकभाव इत्यत्राह रथाद्यवयवा नानातक्षनिर्मापिता अपि दृश्यन्ते जगति प्राय उपकार्योपकारकाः। सर्वं जगत् परस्परोपकार्योपकारकं दृष्टं, ततः किमेवंविधं रथाङ्गाद्येकतक्षपूर्वकं दृष्टम्? तस्माज्जगदप्येककर्तृपूर्वकं तथा च जगत्कर्त्ता सर्वज्ञ इति।

दूषयति—तदेतद् व्यभिचारि। कुतः? नानातक्षपूर्वकत्वस्यापि दर्शनात्।

हेत्वभावप्रतिक्षिप्तं न कार्यमनुमीयते।
हेतुर्न चेतनामात्रं प्रेक्षा त्वनुपपत्तिका॥

ईश्वरस्य क्लेशकर्मविपाकाशयाऽपरामर्शाऽभ्युपगमात्। न हि कर्माऽऽशयाऽभावे तस्य शरीरेन्द्रियादियोगो बुद्धिरैश्वर्यं वा सम्भवतीति प्रमाणविरुद्धस्तदुपगमः। प्रमाणविरोधमाह—हेत्वभावे कार्याऽनुपपत्तेः। न ह्यस्ति सम्भवो वह्निर्नास्ति समस्ति च धूम इति। कर्माशयहेतवश्च शरीरादयस्तदभावे न भवितुमीशते इत्यर्थः। उपपत्तौ वा हेत्वभावे कार्योत्पादस्य भवत्पक्षेऽपि न संनिवेशात् तस्य बुद्धिमतोऽनुमानं, कारणमन्तरेणापि कार्योत्पत्तेः। यस्तु कश्चिद्वैयात्यादीश्वरेऽपि कर्माऽऽशयपरामर्शमभ्युपगच्छेत्

---

१. सर्ववित्त्व २ पु० पा०।

नन्वत एव हेत्वभावे कार्य्याऽभावात् तदनुमानम्? अन्यथा दूषणमपि न स्यात्। वक्तव्यो वा विशेषो यतो दूषणं न साधनमिति। उच्यते। प्रत्यक्षेण विलक्षणा[1] ह्यप्रत्ययपूर्वाः सन्निवेशा अतद्धेतवः स्युः। न चैवं बुद्धिरनुमेया, दृष्टसालक्षण्येनाऽनुमानात्। अपि च तुल्यत्वेऽपि प्रतिबन्धमात्राद् दूषणं साधनमपि, साधनं तु निरस्तप्रतिपक्षं साध्यसिद्धाविति। न च बुद्धिमात्रं

तं प्रत्याह—कर्माशयपूर्वकत्वे वा तज्ज्ञानमन्यतः स्यात् येन कर्म्माशयेनाऽस्य शरीरादयो जनयितव्याः स तावदविज्ञातोऽनधिष्ठितश्च चक्षुराद्युपजननाय न पर्याप्त इति ज्ञातव्यः। न च तज्जन्येन शरीरादिना, इतरेतराऽश्रयप्रसङ्गात् न च प्राग्भवीयेन शरीरान्तरादिना। जन्मसमये तस्याऽतिवृत्तत्वात्। न चेश्वरान्तरमभ्युपेयते परैः। तदुपगमे वा तत्रापि दुर्वारः प्रसङ्गः। चोदयति—नन्वत एव हेत्वभावे कार्याऽभावादेव तस्य बुद्धिमतस्तनुभुवनादिहेतोरनुमानम्। अन्यथा यदि हेत्वभावेऽपि भवेत्कार्यं ततो दूषणमपि 'हेत्वभावप्रतिक्षिप्तं न कार्यमनुमीयते' इत्येतत् न स्यात्। वक्तव्यो वा विशेषस्तादृशः, यतो दूषणं न तु साधनमिति। उभावपि हि साधनदूषणवादिनौ कारणाऽभावे न कार्यमिति वक्तुं प्रवृत्तौ। तत् कथमनेनैकः पर्यनुयुज्यते? वदन्ति हि वृद्धाः 'यश्चोभयोः पक्षयोर्दोषो न तत्रैकश्चोद्यो भवती'ति।

स्वपक्षे विशेषमादर्शयन् परिहरति—उच्यते। प्रत्यक्षविलक्षणा ह्यप्रत्ययपूर्वकाः क्षित्यादिसंनिवेशाः अतद्धेतवोऽप्रत्ययवद्धेतवः स्युः। अथ यथा प्रासादादीनां संनिवेशाः प्रत्यक्षेण विलक्षणाः क्षित्यादिसन्निवेशेभ्य उपलभ्यन्ते तथा बुद्धिरलौकिकेभ्यो विलक्षणा अनुमानादुपलभ्यत इत्यत आह—न चैवं बुद्धिरनुमेया। कुतः? दृष्टसालक्षण्येनाऽनुमानात्। एतदुक्तं भवति। प्रत्यक्षमिन्द्रियजन्मनिदर्शननिरपेक्षमुपजायमानमदृष्टचरमपि त्रैलोक्यविलक्षणमप्यर्थं स्वलक्षणं गोचरयितुं पारयत्येव। अनुमानं व्युत्पत्त्यपेक्षितया व्युत्पत्तेश्च पूर्वदर्शनाऽधीनतया दृष्टसलक्षणमेव गोचरयेन्न तु विलक्षणम्। अदृष्टलिङ्गसम्वन्धं हि तत्। तदिह बुद्धिरनुमीयमाना यथादर्शनमनुमीयेत। सा चाऽनित्या शरीरात्ममनःसंयोगहेतुः। असर्वविषयोपलब्धाऽस्मदादाविति तद्विधैवाऽनुमातव्या। तथा च नित्यत्वसर्वविषयत्वादिव्याहतिरिति। न चैवं दहनाद्यनुमानेषु प्रसङ्गः। न खलु तत्र महानसादिदृष्टदहनविलक्षणः पर्वतनितम्ववर्ती दहनेऽनुमीयते। न च देशभेदस्त-

१. प्रत्यक्षविलक्षणाः १ पु० पा०।

सन्निवेशहेतुर्विन्यासप्रयोजनविचारनिर्णयात्मिका प्रेक्षा। न च सा तत्र सम्भवति, स्वार्थपरार्थाऽभावादिति। ननु मा भूत्सर्वज्ञो नियोक्ता, धर्म्मज्ञस्त्ववष्यताम्। न हि रूपतश्चक्षुरादीनां विषयनियमो निरूप्यत इत्युक्तम्। कालतस्तु नियमे यदा वर्त्तमानत्वं तदाऽतिशयवच्चक्षुरादिविषयभावो न[1] विरुद्धः। आत्यन्तिके चा[2]ऽवर्त्तमानत्वेऽत्यन्ताऽसत्त्वं खपुष्पादिवदित्युक्तम्।

द्वैलक्षण्याय पर्याप्तः, अन्यत्वात्। कथं तर्हि रूपाद्युपलब्धेरिन्द्रियाऽनुमानम्? न हि तत्र दण्डादिकरणसालक्षण्यं, रूपादिपरिच्छित्तिकरणानामिन्द्रियाणामनुमानाऽगोचरत्वात्। रूपादिपरिच्छित्त्यन्यथानुपपत्तिप्रभवा खल्वियमर्थापत्तिरिन्द्रियगोचरा, सा च सम्वन्धदर्शननिरपेक्षया न दृष्टसालक्षण्यमपेक्षते। न चैवं बुद्धिमत्पूर्वकत्वेऽप्यर्थापत्ति, रन्यथाऽनुपपद्यमानस्य कस्यचिदप्यदर्शनात्। तनुभुवनादेश्चाऽदृष्टवत्क्षेत्रज्ञपरमाणुसंयोगादुत्पत्तेरित्यसकृदावेदितम्। तदेवमस्ति साधनदूषणस्य विशेषः।

अपि चाऽविशेषेऽपि न वैतण्डिकः शक्यो निराकर्त्तुं यः स्वपक्षस्थापनाहीनं परपक्षमाहन्तीत्याह—अपि च तुल्यत्वे प्रतिवन्धमात्राद् दूषणं साधनमपि सप्रतिपक्षमपि। साधनं तु निरस्तप्रतिपक्षं साध्यसिद्धौ साधनतायामवतिष्ठते न तु सप्रतिपक्षं प्रतिवन्धमात्रादिति।

तदेवं पूर्वार्द्धं कारिकाया व्याख्याय पश्चार्धं व्याचष्टे—न च बुद्धिमात्रं सन्निवेशहेतुः, अपि तु विन्यासप्रयोजनयोर्यौ विचारनिर्णयौ तदात्मिका प्रेक्षाबुद्धिविशेष इति यावत्। प्रेक्षैव तर्हि भवतु भगवतीश्वरे, इत्यत आह—न च सा च सम्भवति, स्वार्थपरार्थाऽभावात् दर्शितश्च तदभावः पुरस्तात्।

सम्प्रत्यन्यथा प्रत्यवतिष्ठते परः—ननु मा भूत्सर्वज्ञो नियोक्ता प्रत्यक्षेण, धर्मज्ञस्त्विष्यतां, यथाह—

हेयोपादेयतत्त्वस्य साभ्युपायस्य वेदकः।  
यः प्रमाणमसाविष्टो न तु सर्वस्य वेदकः॥  
कीटसङ्ख्यापरिज्ञानं तस्य नः क्वोपयुज्यते।  
दूरं पश्यतु वा मा तत्त्वमिष्टं तु पश्यति॥  
प्रमाणं दूरदर्शी चेद् व[3]यं गृध्रानुपास्महे॥ इत्यादि।

नन्वयं धर्मो रूपपिशेषाऽभावात् कथं प्रत्ययपूर्वं? इत्यत आह—न हि रूपवतश्चक्षुरादीनां विषयनियमो निरूप्यत इत्युक्तम्। नन्वेतदप्युक्तं

---

१. नेति नास्ति मू० पु० पा०। २. वा—१ पु० पा०।  
३. एहि, इति पाठान्तरम्।

तत्र कुर्वित्यर्थो[1] धर्म्मः, यागादेर्विषयस्य धर्म्मत्वेनोपगमात्[2]। उत्पाद्यत्वात्तस्याऽप्रत्यक्षत्वमिति चेत्। उत्पन्नस्याऽस्तु। ननूत्पन्नमपि स्वरूपेण धर्मः, श्रेयः साधनत्वेन तु तच्चाऽतीन्द्रियम्। किं पुनरिदं श्रेयः साधनत्वम्? यदि तावच्छक्तिः सा चाऽतीन्द्रियेति। उक्तमत्र नेन्द्रियाणां परिमाणतो वा[3] विषयनियमः सुनिरूपितः। अथ तदाऽसत्त्वात्। कालान्तरभावित्वात् श्रेयसः। भवतु, अन्यथा धर्मत्वहानेः। श्रेयःसाधनं तु वर्त्तमानमिति

वर्तमानकालविषयमेव चक्षुरादीति। न च धर्मो वर्तमान इत्यत आह—कालतस्तु नियमे यदा धर्म्मस्य वर्त्तमानत्वं तदाऽतिशयवच्चक्षुरादिविषयभावो न विरुद्धः। यद्युच्येत न कदाचिदप्ययं वर्तमान इति, तत्राह—आत्यन्तिके चाऽवर्त्तमानत्वे अत्यन्ताऽसत्त्वं खपुष्पादिवत् इत्युक्तम्।

ननु कुर्विति नियोगो धर्मः, न चैष वर्तमानः। करोषीत्यविशेषप्रसङ्गात्। वर्तमानाऽवस्थस्तु न नियोग इति न धर्म इत्यत आह—तत्र कुर्वित्यर्थो धर्म्मः। कस्मात्? यागादेर्नियोगविषयस्य धर्म्मत्वोपगमात्तत्रैव धर्म्मत्वप्रसिद्धेः। शङ्कते—उत्पाद्यत्वादवर्तमानत्वात्तस्याप्यप्रत्यक्षत्वमिति चेत्। निराकरोति—उत्पन्नस्यास्तु। पुनः शङ्कते—उत्पन्नमपि यागादि न स्वरूपेण धर्म्मः, श्रेयःसाधनत्वेन तु तच्चातीन्द्रियम्। तदेतद् दूषयितुं विकल्पयति—किं पुनरिदं श्रेयः साधनत्वं? यदि तावच्छक्तिः सा चाऽतीन्द्रियेति। दूषयति—उक्तमत्र नेन्द्रियाणां परिमाणतो वा विषयनियमस्तु निरूपित इति। अथ साधनस्य श्रेयसा संवन्धः श्रेयःसाधनत्वं, कृत्तद्धितसमासेषु संवन्धाभिधानं त्वतल्भ्यामिति वार्त्तिककारवचनात्। संवन्धश्च संवन्धिद्वयाऽधीननिरूपणो नाऽन्तरेण संवन्धिना शक्यो निरूपयितुमित्यसति श्रेयसि कालान्तरभाविनि कथं तत्सवन्धो यागादीनाम्प्रत्यक्षमीक्ष्येतेति शङ्कते – अथ तदा यागादिसमयेऽसत्त्वात्। कुतोऽसत्त्वमि?त्यत आह—कालान्तरभावित्वादामुष्मिकस्य स्वर्गादेः श्रेयसः। उत्तरम्—भवतु कालान्तरभावि श्रेयः, तत्साधनत्वं त्वतिशयो यागादिसमवेतो यः स तत्कालो यो यागादिकालः। न खलु भिन्नकालयोराधाराऽऽधेयभावः सम्भवति। तत्सम्भवे तत्त्वमेव कुतः? इत्यत आह – अन्यथाऽसमवायादतिशयस्य यागादीनाम-श्रेयः साधनत्वाद्धर्म्मत्वहानेः। तस्माद्यदा तदा भवतु, श्रेयः साधनत्वं तु वर्तमानमिति नाऽक्षाणामविषयो धर्म्मः श्रेयःसाधनरूपः।

---

१. कुर्वेतित्यर्थः मू० पु० पा०। २. तदुत्पाद्यत्वात् १ पु० पा०।
३. परिमाणतो वा स्वरूपतो वा० मू० पु० पा०।

नाऽक्षाणामविषयः । ननु प्रागनुष्ठानाद्धर्मज्ञानमिष्यतेऽनुष्ठातृभिः । तथा च भविष्यद्वा[1]ऽक्षाणामविषयः । नैवाऽधिष्ठातृणां[2] प्रत्यक्षं धर्मं ब्रूमः, अपि तूपदेष्टुरतिशयवतः । स चाऽतिशयः स्वाभाविको महत्त्वमिव व्योम्न उपदेशान्तरजः क्रियानिबन्धनो वेत्यदोषः ।

उच्यते—

अतुल्यकालं सामर्थ्यं कर्म्मणः क्षणभङ्गिनः ।
चिरकालफलायाऽऽहुर्न तदध्यक्षमीक्षते ।।

प्रलीयमानकर्म्मलब्धोपजनः । पूर्वाऽपराङ्गोपपादिताऽवस्थान्तरो देश-

एतदुक्तं भवति । भवतु नाम श्रेयःसाधनत्वशब्दः संबन्धवचनो न पुनर्द्धर्म्मशब्दोऽपि श्रेयःसाधन एव । तस्य लौकिकपरीक्षकैरविवादं प्रयोगात् । अतिशयवच्च यागाद्येव तत्साधनमिति त एव धर्म्मपदास्पदम् । ते च तद्भाजो वर्तमाना इति तेषां तद्वतां प्रत्यक्षतेति ।

चोदयति—ननु प्रागनुष्ठानात् धर्म्मज्ञानमिष्यतेऽनुष्ठातृभिस्तज्ज्ञानस्याऽनुष्ठानाऽङ्गत्वात् । तथा च भविष्यद्वाऽक्षाणामविषयः । परिहरति— नैवाऽनुष्ठातृणामस्मदादीनां प्रत्यक्षं धर्मं ब्रूमः, किं तूपदेष्टुरतिशयवतः । यः खलु परेणाऽनुष्ठीयमानं यागादिप्रत्यक्षेण श्रेयःसाधनं पश्यति । कुतः पुनरस्याऽयमतिशय ? इत्यत आह—स चाऽस्यातिशयः स्वाभाविको महत्त्वमिव व्योम्न उपदेशान्तरजः क्रियानिवन्धनो वा कस्यचिदाप्तोपदेशादष्टाङ्गयोगमवगम्य तदनुष्ठानात्तत्परिपाके सति तां तां योगभूमिमधिरूढस्य संप्रज्ञातसमाधिप्रभावादेवाऽयमतिशयो जायते । तस्याऽचिन्तनीयसामर्थ्यत्वात् । यथाह—को हि योगप्रभावादृते अगस्त्य इव समुद्रं पिवतु, स इव दण्डकाऽरण्यं सृजतीति । सोऽयमुभयविधोऽतिशय उपायप्रत्यय उपेयप्रत्ययश्चेत्याख्यायते योगाचार्यैरिति । तस्माददोषः ।

तदेवं प्रत्यवस्थितं परं निराकरोति—उच्यते ।
अतुल्यकालं सामर्थ्यं कर्म्मणः क्षणभङ्गिनः ।।
चिरकालफलायाहु[3]र्न तदध्यक्षमीक्षते[4] ।

तदेतद् व्याचष्टे—आशुतरविनाशित्वात् कर्मणः प्रलीयमानकर्म्मलब्धोपजनः । कर्माऽऽनन्तर्यमपि तस्य नास्ति, किमङ्ग पुनस्तत्कालतेत्याह[5]—

---

१. भविष्यत्त्वात् मू० पु० । २. अधिकर्तृणां मू० पु० पा० ।
३. फलायातम् २ पु० पा० । ४. इष्यते १ पु० पा० ।
५. तत्काल इत्याह २ पु० पा० ।

कालाद्यासादितपरिणतिभेद आनन्तर्यमपि कर्म्मणोऽतिवर्तमानः कोऽप्यतिशयः कर्त्तरि कर्म्मणश्चिरभाविनः फलस्य साधनं कथ्यते। तदसौ न कर्म्मकाले वर्तमानः। स्वकाले वर्तमानोऽपि कर्म्मणोऽतिवृत्तत्वान्न कर्मसम्बन्धितयाऽध्यक्षमीक्षते। तदुक्तं "फलसाधनरूपेण तदानीं येन नास्त्यसावि"ति। कर्म्मकाले तस्य भावित्वं तत्काले च कर्म्मणोऽभावः। कथं तर्हि कर्म्मणः साधनत्वं तदन्यसमवायि? तदाहितत्वात्। न हि स्वसमवाय्येव साधनं भवतीति कश्चिन्नियमः। कार्य्याऽनुमेयं तद्यत्र कार्य्यायाऽलं तत्रैव युक्तं तदाहितत्वात्तस्य शक्तिः। न चौपचारिकः कर्म्मणः साधन-

पूर्वपराङ्गाऽन्यन्वाधानब्रह्मणतर्प्पणादिना पूर्वोपपादिताऽवस्थान्तरः। एतावताऽप्यसौ नाऽतिशयः, अपि तु देशकालाद्यवस्थाद्यपेक्षाऽऽसादितपरिणतिभेदः। सोऽयमुक्तकारणक्रम आनन्तर्यकर्मणोऽतिवर्त्तमानः किं पुनः समानकालतां कोऽपि कर्म्मणोऽतिशयः[1]। ननु निराधारस्य कार्यस्याऽनुपपत्तेरुत्पत्तिधर्म्मा किमाधारोऽयमतिशय? इत्यत आह—कर्तरि नित्यात्मनि। तत् किं[2] कर्तृस्थः कर्त्तुरेव न किं तु कर्म्मणः ननु कर्मैव फलाय चोदितं तत्साधयतु किमन्तर्गर्भिणाऽपूर्वेणे? त्यत आह—चिरभाविनः फलस्य साधनं कथ्यते वृद्धैः। न हि चिरविनष्टं कर्माऽनुपजनिताऽतिशयभेदं चिरभाविने फलाय कल्पते इत्यर्थः भवत्वेवं प्रकृते किमायातमि?त्यत आह—तदसौ न कर्म्मकाले वर्त्तमानः। अथ सर्वदैव किमवर्त्तमानः? तथा च गगनकमलिनीकल्पः प्रसज्येतेत्यत आह—स्वकाले वर्त्तमानोऽपि। अथ मा भूदसौ कर्मकाले, तत्काले, तु कर्म्मं कस्मात्? इत्यत आह—आशुतरविनाशितया तत्काले कर्मणोऽतिवृत्तत्वात्। तस्मात्कर्मतदतिशययोरसमानकालतयाऽतिशयवतोऽत्यन्ताऽवर्त्तमानतया वर्तमानविषयनियतं प्रत्यक्षं न तद्गोचरयियितुमर्हतीत्याह—न कर्मसंवन्धितयाऽध्यक्षमीक्षते। तदुक्तं 'फलसाधनरूपेण तदानीं येन नास्त्यसावि'ति। तदेव स्फुटयति-कर्म्मकाले तस्याऽतिशयस्य उक्तकालक्रमस्य भावित्वं तत्काले च कर्मणोऽभावः।

चोदयति—कथं तर्हि कर्म्मणः साधनत्वं तदपूर्वमन्यसमवायि? परिहरति—तदाहितत्वात्। न हि स्वसमवाय्येव साधनमिति कश्चिन्नियमः। ननु तथाप्यात्मसमवायित्वादात्मन एव कस्मान्न भवतो? त्याह—कार्याऽनुमेयं तदपूर्वं यत्र च कार्यायाऽलं तत्रैव युक्तम्। अयमर्थः। यदि हि तद्रूपमन्यनिरपेक्षमेव गम्यते ततो यत्प्रत्यासन्नमवगम्यते तस्य स्यात् यथा घटस्य शौक्ल्यं, न त्वेतत्तथा, अपि तु कर्म्मणि करणत्वेन फलाय चोदिते

१. विरामः २ पु० पा०। २. आत्मनि किम् २ पु० पा०।

भावः । काष्ठादिषु तथैव सिद्धेः । ननु न तदस्तीति मन्यन्ते । प्रमाणाऽभावात् । न च श्रुताऽर्थापत्तिः प्रमाणम् । फलसम्बन्धे चोदनाप्रामाण्यविघातात् । असिद्धो हि स तदा चोदनातोऽर्थापत्तितः सिद्धिं समासादयतीत्यर्थापत्तिकारणः स्यात् । अन्यथा कर्म्मफलसम्बन्धसिद्धेरर्थापत्तिप्रसङ्गः । सिद्धे तस्मिन्किमन्यदपेक्ष्य तदुपकल्प्यते ? न हि निरपेक्षा । अपेक्षयामपि यागफलसम्बन्धप्रतीतावर्थान्तरं चेदपेक्षेत कथं तदप्रतिपत्तौ तत्प्रतिपत्तिः ?

तदुपपत्त्यैतत्कल्प्यमानं प्रतिपत्तिदशायां कर्म्मसंवद्धमेवाऽवगतम् । न ह्यन्यसंवद्धमेतत्फलसंवन्धमुपपादयति कर्म्मणः । तथाप्रतीयमानमपि चेत्कर्म्माऽपहायाऽन्येन संवध्येत स्वरूपादेव हीयेतेति कर्म्मण्येव तत् । ननु प्रथमं प्रतीयतां नाम कर्म्मसंवन्धः, वास्तवस्तस्य तेन संवन्धो वक्तव्यः । इतरथा तत्प्रतीतेर्मिथ्यात्वप्रसङ्गादित्यत आह—तेन कर्म्मणाऽऽहितत्वात्तस्य कर्म्मणः शक्तिः ।

अपरः कल्पः—कस्मादन्यसमवायि तदपूर्वं न तु कर्म्मसमवायि कल्प्यते ? इत्यत आह—कार्याऽनुमेयं तत्तद्यत्र कार्यायाऽलं तत्रैव युक्तं, न खलु तदाशुतरविनाशि कर्म्माधारं तद्विनाशे विनष्टमामुष्मिकाय फलाय कल्पते । तस्मान्नित्यात्मसमवायीत्यर्थः । यद्यात्मसमवायि तत्तस्यैव शक्तिः न कर्म्मण इत्यत आह—तदाहितत्वात्तस्यैव शक्तिः । न चेत्थमौपचारिकः कर्म्मणः साधनभावः, काष्ठादिषु तथैव सिद्धेः । न खलु काष्ठादीनामपि साक्षाद्व्यक्तिसाधनता, किं त्वौष्ण्याऽपेक्षस्य वह्निसंयोगप्रचयभेदस्य । अथ च काष्ठैः पचन्तीति मुख्यैव साधनता काष्ठानामग्नितन्डुलसमवाय्यपि वह्निसंयोगस्तत्पूर्वं इति तथा यागादीनामपि । कृतोपपादनं चैतद् नियोगपरीक्षायाम् ।

ननु न तदपूर्वमस्तीति मन्यन्ते देवानां प्रियाः । कुतः ? प्रमाणाऽभावात् । न च श्रुताऽर्थापत्तिरेवाऽत्र प्रमाणमिति कथं प्रमाणाऽभावः ? इत्यत आह—न च श्रुताऽर्थापत्तिः प्रमाणम् । कस्मात् ? कर्म्मणः फलसंवन्धे चोदनाप्रामाण्यविघातात् । असिद्धो हि स तदाऽपूर्वकल्पनायाः प्राक्कर्म्मफलसंम्वधश्चोदनातोऽर्थापत्तितोऽपूर्वकल्पनायां सत्यां सिद्धिमासादयतीति तद्भावभावादर्थापत्तिकारणोऽर्थापत्तिप्रमाणकः स्यात् । अन्यथाऽनपेक्षाच्छब्दात् कर्मफलसंवन्धसिद्धेरेव हेतोरर्थापत्तिप्रसङ्गः । उत्तरम् सिद्धे सति कर्मफलसंवन्धे तत्प्रतीत्या किमन्यदपूर्वं विनाऽनुपपद्यमानमपेक्ष्य तदपूर्वमुपकल्प्यते ? न ह्यन्यथाऽनुपपद्यमाने निरपेक्षा प्रतीतिः कल्पनायै प्रभवति । यद्युच्येत यागफलसम्वन्धप्रतीतिरेव नोपपद्यते किमन्येनाऽनुपपद्यमानेनेति ?

नाऽप्रतिपन्नपदार्थो वाक्यार्थो यतः प्रमाणान्तरं चेत् अपेक्षते अनपेक्षत्वं व्याहन्येत। अपि च। श्रुतं वाक्यमनुपपन्नं साऽपेक्षत्वात् 'विश्वजिता यजेते' तिवत् अध्याहार्य्यनिर्देशात्। अर्थो वाऽनुपपन्नः। पूर्वत्र वाक्यशेषकल्पना। न 'चाऽनुपपत्तिः। स्वर्गकामो यजेते' ति परिसमाप्तेर्वाक्यशेषाऽनुपपत्तेश्चाऽपूर्वं कृत्वेति प्राग्यागादपूर्वोत्पत्तिप्रसङ्गः। यागेनाऽपूर्वं कृत्वेति द्विरुच्चारणं यजेः, पूर्वश्च दोषः। उत्तरत्रापि श्रुततया चेदनुपपन्नः, पूर्व एव विकल्पः। स्वभावान्तरेणाऽनुपपत्तौ श्रुतसिद्ध्यर्थमपूर्वकल्पनेत्यसमीचीनम्।

तत्राह—अपेक्षायामपि यागफलसंबन्धप्रतीतौ अर्थान्तरं चेत्स्वोत्पत्तावपक्षेत, तदनुपपन्नम्, कथं हि तस्याऽर्थान्तरस्याऽप्रतिपत्तौ तत्कर्मफलसंबन्धसिद्धेः प्रतीतिः। नाऽप्रतिपन्नपदार्थो वाक्यार्थो यतः प्रमाणान्तरं चेदपेक्षते न त्वर्थान्तरं तत्राह—अनपेक्षत्वं व्याहन्येत। अपि चाऽनुपपत्तिरपि किं वाक्यस्याऽथ तदर्थस्य? इति विकल्पयति—अपि च श्रुतं वाक्यमनुपपन्नं साऽपेक्षत्वात्।

कुतः साऽपेक्षत्वम्? इत्यत आह—विश्वजिता यजेतेतिवदध्याहार्यनिक्षेपात् स्वर्गकामदस्य वाक्यैकदेशस्याऽध्याहार्यत्वं तत्समुदाये वा वाक्ये उपचरितमध्याहारो वाऽस्यास्तीति अध्याहारि स्वर्गकामदं, तस्याऽनिर्देशात्सापेक्षत्वमिति द्वितीयपक्षमाह—अर्थो वाऽनुपपन्नः। एवं विकल्प्य दूषयति—पूर्वत्र वाक्यशेषपरिकल्पना स्यात्। न हि वाक्यमपरिपूर्णमतज्जातोयेनाऽर्थेन पूरयितुं शक्यमपि तु शब्देनैवेति लौकिकी स्थितिः। तदेतद्वाक्यं नोपपद्यत इत्यङ्गीकृत्योक्तम्। परमार्थतस्तु—चाऽनुपपत्तिः। कुतः? दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति पदैः स्वार्थाऽभिधानद्वारेण वाक्यार्थप्रतीतेः परिसमाप्तेः। यश्च वृद्धैर्वाक्यशेषः परिकल्प्यतेऽपूर्वं कृत्वेति सोऽप्यनुपपन्न इत्याह—वाक्यशेषाऽनुपपत्तेश्चाऽपूर्वं कृत्वेत्यपूर्वकत्वात्। स्वर्गकामो यजेतेति हि वाक्यादयमर्थः प्रतीयते येन केनचिदपूर्वं कृत्वा यजेत स्वर्गकाम इति। तथा सति प्राग्यागादपूर्वोत्पत्तिप्रसङ्गः। यदि पुनरपूर्वकरणेऽपि यागेनेति सम्बध्येत ततः फलेऽपि तत्संबन्धनीयमिति द्विरुच्चारणं यजेः पूर्वश्च दोषः। न तावद्येनैव यागेनाऽपूर्वं क्रियते तेनैव पश्चात्फलमपि, कर्म्मणो विरम्य व्यापाराऽनुपपत्तेः। अर्थाद्यागान्तरेण। तथा च प्राग्यागात्फलसाधनादपूर्वोत्पत्तिप्रसङ्ग इति पूर्वोक्तदोषः। उत्तरत्रापि च श्रुततया चेदनुपपन्नो वाक्यार्थः पूर्व एव विकल्पः। तेन सह तुल्यदोषत्वात्। तेनात्रापि च शाब्दतयैवार्थान्तरकल्पनीयं यतः। यदि तु तत्त्वं परित्यज्य स्वभावान्तरेणा-

१. पदार्थकः मू० पु पा०।

ऽनुपपत्तिरास्थीयेत तत्राह—स्वभावान्तरेणाऽनुपपत्तौ श्रुतसिद्धयर्थमपूर्वस्य कल्पनेति वृद्धवचनमसमीचीनं स्यात्। सोऽयं देवानांप्रियैः प्रणीतो दूषणगणो देवचूडामणिभिरेव परिहरणीय इत्याचार्येणापि नोदधारि, तत्र के वयं ते तव ममेति तत्रोपक्षीणमतिविभवा इति।

अपि च पौरुषेयत्वे सति वेदानां सर्वज्ञप्रणीततया तदनुविधायिनां तेभ्यः प्रतिपत्तिर्भवेदपि, न पुनरस्ति पौरुषेयता। ननु वाक्यमात्रं पुरुषाऽधीनवचनम्। तथा हि दुर्भणत्वेन वर्णाऽनुपूर्व्यभेदसंवन्धेन विशिष्टेन वा विषयाऽऽनयनादिकार्येण समानात्मानः पौरुषेया अपि पदक्रमास्तेषु तेषु वौद्धाद्यागमेष्वपि प्रतिपन्नपौरुषेयत्वेषु दृश्यन्ते। यच्च यस्मादभिन्नस्वभावं न तत्ततो भिन्नहेतुकं यथैकस्मात्कलमाऽङ्कुरादभिन्नस्वभावं कलमाङ्कुरान्तरं तत्समानहेतुकं, तथा लौकिकीभ्यः पदानुपूर्वीभ्योऽभिद्यमानस्वभावा वैदिकाः पदसंनिवेशा इति स्वभावहेतुः। भिन्नकरणत्वाद्धि स्वविरुद्धभिन्नस्वभावत्वव्याप्तात्स्वभावविरुद्धोपलब्धान्निःस्वभावत्वं व्यावर्त्तमानं कारणाऽभेदेन व्याप्यत इति प्रतिवन्धसिद्धिः।

अत्रोच्यते। किं वेदवाक्यानां पुरुषप्रणीतत्वमात्रं साध्यते आहोस्वित् स्वतन्त्रपुरुषप्रणीतत्वमि?ति। पूर्वस्मिन् सिद्धसाधनम्। न खलु वयमपि नित्यत्वेऽपि वर्णानामानुपूर्वीविशेषोपहितसीमपदमभेदवाक्यानामपौरुषेयता[1]माऽऽचक्ष्महे। तथा हि। वर्णानां नित्यतया विभुतया च देशतः कालतो वा न संभवत्यानुपूर्व्यमित्यभिव्यक्त्याश्रयं तद्वक्तव्यम्। सा च पुरुषप्रयत्नयोनिरिति कथं तद्भेदोपहितमर्यादानां गवादिपदानां वेदवाक्यानां च पौरुषेयते? ति। अथ स्वतन्त्रपुरुषप्रणीतत्वं 'मा निषादा'दिवाक्यवत्। प्राचेतसः खल्वत्रभवानादिकविः स्वतन्त्रः, तद्वद्वेदवाक्येष्वपि कश्चिदीश्वरादिरिति साम्प्रतम्। अनैकान्तिकत्वात्। स्वतन्त्रप्राचेतस[2]पुरुषप्रणीतत्वाऽभावात्।

स्यादेतत्। न स्वतन्त्रपुरुषप्रणीतत्वं वेदवाक्यानां साधयामः, अपि तु स्वतन्त्रपुरुषपूर्वकत्वम्। अस्ति चाऽस्मदादिपुरुषप्रणीतेष्वपि 'मानिषादा'दिपदसंनिवेशेषु पारम्पर्येण पुराणस्य कवेः स्वातन्त्र्यमिति नानेकान्त इति। तदनुपपन्नम्। पुरुषप्रणीततामात्रेण कारणाऽभेदेन लौकिकात्पदसंनिवेशाद्वैदिकानामभेदोपपत्तावप्रतीतस्य वेदेषु पुरुषस्वातन्त्र्यस्याऽप्रयोजनकस्य

१. तया पु० पा०।

२. प्राचेतसादिप्रणीतान्मानिषादादिवाक्यात्तत्परतश्चास्मदादिप्रणीतस्य मा निषादादिवाक्यस्याभेददर्शनेपि च स्वतन्त्रताभावात्।

कल्पनानुपपत्तेः (तत्समानसन्निवेशत्वस्य पुरुषपारतन्त्र्येणाऽऽत्यन्तिके नास्ति कश्चिद्विरोधः। येन तद्विपक्षादात्यन्तिकपारतन्त्र्याद्व्यावर्त्तमानं पुरुषस्वातन्त्र्याऽप्रयोजनकस्य कल्पनाऽनुपपत्तेः)। तत्समानसन्निवेशे च पुरुषपारतन्त्र्येणाऽऽत्यन्तिकेन नास्ति कश्चिद्विरोधः। येन तद्विपक्षादात्यन्तिकपारतन्त्र्याद्व्यावर्तमानं पुरुषस्वातन्त्र्येण व्याप्येत। तेन यथा समानमैत्रीजन्मस्वपि मैत्रीतनयेष्वन्नपानविशेषोपयोगनिमित्ता श्यामता केषांचिदेव न सर्वेषामिति तत्तनयतया न श्यामताऽनुमानमेवं विलक्षणप्रयत्नस्थानाऽभिघातादिजन्मवाक्यनिष्पत्तेस्तद्भेदाऽभेदाऽनुविधायिभेदाऽभेदो युज्यते न पुनः पुरुषपारतन्त्र्ये तन्त्रीकर्तुमुत्सहते। सोऽयं सन्दिग्धव्यतिरेकतयाऽनैकान्तिको हेत्वाभासः।

यस्तु दर्शनकथन्तासंवोधरहितो यथादर्शनपूजकः प्रमाणयेत् दृष्टानि हि भारतादिवाक्यानि स्वतन्त्रपुरुषप्रणीतानीति वेदवाक्यान्यपि वाक्यत्वात्तथाविधानीति, स वक्तव्यः, विवादाध्यासितं वेदाऽध्ययनमध्यनान्तरपूर्वकं वेदाध्ययनत्वादस्मदादिवेदाध्ययनवत्। नैवं भारतादिषु अस्याऽनुमानम्। तत्र दृढतरेण कृष्णद्वैपायनादिस्मरणेनाऽनुमानस्य वाधेन विधेयत्वादनुत्पादात्। वेदे तु कर्तृस्मृतिद्रढिमाऽसम्भवात्काठकादिसमाख्यातस्य प्रवचनमिति वचनोपपत्तेरबाधितविषयस्याऽनुमानस्याऽप्रत्यूहमुत्पत्तेः। न च भवदनुमानमस्य विषयवाधे प्रभवति। तस्य सामान्यतोदृष्टसंवन्धात्सामान्यशास्त्रस्यैव विशेषशास्त्राद् दुर्बलत्वात्। तथाह—

प्रसिद्धाऽवयवं यत्स्याद्विशेषे वा प्रतिष्ठितम्।
तत्साध्याङ्गकसामान्यदृष्टात्तु वलवत्तरम्॥ इति।

स्यादेतत्। शब्दानामर्थप्रत्यायनस्य पुरुषसङ्केताऽधीनजन्मत्वात्तत्सम्वन्धा केनचिल्लौकिकसंव्यवहारार्थं शब्दानामर्थैः सम्बन्धान् कृत्वा[१] वेदः प्रणीतः। न चाऽर्थप्रत्यायनं प्रति शब्दानां स्वाभाविकी शक्तिः सङ्केतेन व्यज्यत इति साम्प्रतम्। यदि हि सत्यपि सङ्केते कश्चिद् ध्वनिः कंचनाऽर्थं नाऽवभासयेत् ततः कस्यचित् सङ्केताऽभिव्यक्तसामर्थ्यस्य स्वाभाविकमुपपद्येत वाचकत्वं, न त्वेतदस्ति। सङ्केतमन्तरेण ध्वनेरर्थरूपस्याऽप्रतिपादकत्वात्। सति तु सङ्केते सर्वस्मादपि सर्वार्थप्रत्ययोत्पत्तिदर्शनात्। तदयुक्तम्। अन्तरेणापि सङ्केतमनादिवृद्धव्यवहारदर्शनादभिव्यक्तसामर्थ्येभ्यः शब्देभ्योऽर्थप्रतिपत्तेरुपपत्तेः। सम्वन्धकल्पनायामर्थापत्तिपरिक्षयात्। न च व्यवहारदर्शनमेव सङ्कोच इति साम्प्रतम्। न खल्वेतदनेन शब्देनाऽयमर्थः

१. संबन्धाद्वेदः-२ पू० पा०।

उच्यते—

उपदेशो नियोज्यार्थकर्म्माप्रस्थितचोदना ।
प्रथितो गुरुवैद्यादौ नित्येऽपि न न कल्पते ।।

यद्यप्याज्ञाऽभ्यर्थना वेदेऽनुपपन्नाः, उपदेशस्तु युज्यते। सोऽपि तद्वदेव प्रेरणात्मकश्चतुर्थो लोके प्रज्ञायते.। तथा हि—आज्ञाऽभ्यर्थने हि प्रत्येतव्य इत्येवमाकारम्, अपि तु शब्दोच्चारणसमनन्तरप्रवृत्तिनिवृत्ति-हर्षाद्याभासम् । तच्च स्वप्रवृत्त्यादिनिवन्धनाऽर्थभेदविषयप्रख्याऽनुमान-[1]द्वारेण शब्दस्य तत्र कारणतायां प्रमाणम् । न च व्युत्पद्यमानास्तदा सङ्केतं सङ्केतस्य कर्त्तारं वा प्रतियन्ति । न चेह सङ्केतं तस्य च कर्त्तारमन्तरेण कस्य-चित्परिदृश्यमानस्याऽनुपपत्तिः । ततो नूनं स्वभावतः शब्द एवाऽर्थभेदप्रत्ययस्य-हेतुरित्यध्यवस्यति । न च गवादिशब्दानामश्वादौ देवदत्तादिशब्दानां च तत्र तत्र सङ्केताऽधीनतया प्रवृत्तेर्गोत्वादावपि गवादिशब्दाः सङ्केताऽऽयत्त-प्रवृत्तय इति शक्याऽनुमानम् । अनादिवृद्धव्यवहारपरम्पराऽभिव्यक्तस्वाभावि-काऽर्थप्रत्ययहेतुभावानां स्वार्थवृत्तेः सङ्केताऽभावेन सह सम्भवादविरोधात् । यथादर्शनपूजकं प्रति तु शक्यमेवं प्रत्यवस्थातुम् । विवादाऽध्यासिताः पुमांसो गवादिपदेभ्यो गोत्वादिषु सङ्केताऽनायत्तप्रतिपत्तयो गवादिपदेभ्यो गोत्वादि-प्रतिपत्तिमत्त्वादस्मदादिवदिति । विपञ्चितं चैतद्वृद्धैरिति दिङ्मात्रमत्र सूचितं, क्षन्तव्यं च किञ्चिदुद्ग्रन्थाऽभिधानं सूरिभित्युपरम्यते ।

।। इति पूर्वकणिका समाप्ता ।।

सिद्धान्तमुपक्रमते—उच्यते ।
उपदेशो नियोज्यार्थकर्माऽप्रस्थितचोदना ।
प्रथितो गुरुवैद्यादौ नित्येऽपि च न कल्पते ।।

तत्र यत्तावदुक्तम् 'अपौरुषेये प्रैषादिर्नृधर्मो नाऽवकल्पत इति । तेन यद्याज्ञाऽभ्यर्थनाऽनुज्ञाः प्रतिषिध्यन्ते तदनुजानीमहे एव, उपदेशप्रतिषेधं तु न मृष्यामह इत्याह—यद्यप्याज्ञाऽभ्यर्थनानुज्ञा। वेदेऽनुपपन्नास्तस्याऽपौरुषेयत्वेन चेतनस्य नियोक्तुरभावात् । उपदेशस्तु युज्यते । तस्याऽपौरुषेयेऽपि सम्भ-वात् । न ह्यसौ नियोजकार्थकर्म्मेति वक्ष्यति, येन चेतनकर्तृकः स्यात् । न चासौ न लौकिकोऽप्रेरणात्मको वा, येनाऽविधिः स्यादित्याह—सोऽपि तद्वदेवाऽऽज्ञावदेव प्रेरणात्मकश्चतुर्थो लोके प्रज्ञायते । ननु च यदि प्रेरणात्मकः कथमाज्ञादिभ्यो भिद्यते ? भिद्यते चेत्कथं प्रेरणात्मकः ? इत्यत आह—तथा हि । आज्ञाऽभ्यर्थने हि नियोक्त्रर्थमनादृतनियोज्यफलं कर्म गोचरयतः,

१. प्रस्थानुमान । २ पु० पा० ।

नियोक्त्रर्थमनादृतनियोज्यफलं कर्म्मगोचरयतः। नियोज्यार्थं तूपदेशः। अनुज्ञा तु यद्यप्येवं क्वचित्तथापि प्रवृत्तपुरुषविषयत्वान्नोपदेशः। नियोज्यार्थकर्म्मगोचरमप्रवृत्तप्रवर्तनमुपदेशमाचक्षते धीराः। न हि गामभ्याज, माणवकमध्यापय, कुरु यथाऽभिमतमित्युपदेशप्रतीतिः। नापि भैक्ष्यं चरेत्, ज्वरितः पथ्यमश्नीयादित्याज्ञादि[1] प्रतीतिः। भूयसा चैष पौरुषेयेषु कामार्थशास्त्रादिष्वाज्ञादिभिरनारूषितो लोके प्रज्ञायते। गोपालादिवचःसु च मार्गाऽऽख्यानपरेषु अनेन पथा गच्छेति। न हि हीनस्याज्ञानात्मा[2]र्थे कर्मण्यनियोज्यार्थं तु कर्मोपदेशो गोचरयति। तदनेनैवोपदेशो नियोज्याऽर्थकर्मेति कारिकार्थो विवृतः।

एतदुक्तं भवति। आज्ञाऽभ्यर्थनोपदेशाः कर्मणि प्रवृत्तिजननेन तद्गोचरयन्तो भवन्ति प्रेरणात्मतया समानास्तेषामाज्ञाऽभ्यर्थनाभ्यां गोचरीक्रियमाणं कर्माऽनादृतनियोज्यप्रयोजनमाज्ञापयितुरभ्यर्थयमानस्य वा प्रयोजनायाऽवकल्पते। उपदेशगोचरस्तु कर्माऽनादृतोपदेशकप्रयोजनमुपदेष्टव्यार्थमेवेत्ययमाज्ञाऽभ्यर्थनाभ्यामुपदेशस्य भेदः प्रेरणात्मकत्वं चेति नियोज्यार्थं कर्म यस्योपदेशस्य न तु नियोक्त्रर्थं स तथोक्त इत्यक्षरयोजना।

ननु यदि नियोज्यार्थकर्मोपदेशः हन्ताऽनुज्ञाऽप्युपदेशः प्रसज्येत। सोऽपि हि क्वचिन्नियोज्याऽर्थकर्मेत्यत आह—अनुज्ञा तु यद्यप्येवं क्वचित्तथापि प्रवृत्तपुरुषविषयत्वान्नोपदेशः। नियोक्त्रर्थकर्मापि अनुज्ञा भवत्येव। तथा हि। भृत्यस्य प्रभवे हितं चिकीर्षोरप्यस्ति हितकामितया सहसा कुर्वतः प्रभोरभ्यनुज्ञेति क्वचिद्ग्रहणम्। अनेनाऽप्रस्थितचोदनेति विवृतम्। अप्रस्थितस्याऽप्रवृत्तस्य पुंसः प्रस्थापना चोदनेत्यक्षरयोजना। लोकप्रसिद्धोऽयमीदृश उपदेश इति कुत ? इत्यत आह—नियोज्याऽर्थकर्मगोचरमप्रवृत्तप्रवर्त्तनमुपदेशमाचक्षते धीराः। न चाऽऽख्यानमात्रमवगतिरप्याज्ञादिविलक्षणोपदेशालम्वनाऽस्तीत्याह—न हि गामानयेत्याज्ञायां माणवकमध्यापयेत्यभ्यर्थनायां कुरु यथेहितमित्यनुज्ञायामुपदेशप्रतीतिः। नापि भैक्ष्यं चरेज्ज्वरितः पथ्यमश्नीयादित्याज्ञादिप्रतीतिः। न चाऽस्योपदेशस्य क्वचित्कथंचिदवगतिः, भूयसा प्रकारेण सर्वत्राऽवगतेरित्याह—भूयसा चैव पौरुषेयेषु कामाऽर्थशास्त्रादिष्वाज्ञादिभिरनारूषितो लोके प्रज्ञायते। शास्त्रकारा हि नैसर्गिकवैनयिकबुद्ध्यतिशयसंपन्ना लौकिकाः न केवलं शास्त्रेषु निकृष्टबुद्धिवचनेष्वपीति प्रसिद्धतरत्वमाह—गोपालादिवचस्सु च मार्गाऽऽख्यानपरेष्वनेन पथा गच्छेति। अथैतदाज्ञादीनामन्यतमत्कस्मान्न भवति ? इत्यत आह—न हि

१. दितिप्रतीतिः मू० पु० पा०। २. त्माख्ये मू० पु० पा०।

भ्यर्थनानुज्ञानमप्रवृत्तस्य। अत एव चोपदेशः। इत्याज्ञादिभ्यो भेदेन तस्य प्रतीतत्वात्तस्य ज्ञानमुपदेश इति ततो भिन्न उपदेशशब्देन दर्शितः। भवतु ततो भिन्नः, कः पुनरसौ? ननूक्तमुपदेश इति विशिष्टस्य शब्दस्योच्चारणम्। यद्येवमव्युत्पन्नस्यापि प्रवृत्तिप्रसङ्गः। उच्यते—

विशिष्टः पुरुषार्थस्य शुद्धस्योपायमाह यः।
पुरुषार्थो यदा येन यो नरेणाऽभिकाङ्क्ष्यते॥

पुरुषार्थस्योपायमनवगतमवगमयन्नुत्कर्षाद्विशिष्टः शब्द उक्तः। अन्यथा सर्व एवं शब्दः शब्दान्तराद् भिन्न इति अविशेषणमेव स्यात्। अतो

हीनस्याऽज्ञानात्मार्थे कर्मण्यभ्यर्थनाऽनुज्ञानमप्रवृत्तस्य। यत एव तद् गोपालवचोऽत एव प्रसक्तानामाज्ञादीनां प्रतिषेधादन्यत्रोपाख्यानादावप्रसङ्गाच्छिद्यमाणे संप्रत्यय इत्याह—अतएवोपदेशस्तत एव चाऽयमपौरुषेयेऽपि सम्भवतीति सत्रकारेण दर्शित इत्याह—इति तस्मादाज्ञादिभ्यो भेदेन लब्धप्रतीतित्वात्तस्य ज्ञानमुपदेश इति तत आज्ञादिभ्यो भिन्न उपदेशो दर्शितः। भवतु ततो भिन्नः, कः पुनरसौ? समानाऽसमानजातीयव्यवच्छेदकमस्य वाच्यमित्यर्थः।

ननु चोक्तं भाष्यकृता उपदेश इति विशिष्टस्योच्चारणं विशिष्टस्येति वदता शब्दस्य रूपगतो विशेष उक्तः। स च प्रत्यक्षशब्दवर्त्तितया प्रत्यक्ष इति प्रथमश्राविणोऽपि प्रवृत्तिप्रसङ्ग इत्याह—यद्येवमव्युत्पन्नस्यापि प्रवृत्तिप्रसङ्गः। न प्रत्यक्षं व्युत्पत्तिमपेक्षत इत्यर्थः। उच्यते—

विशिष्टः[1] पुरुषार्थस्य शुद्धस्योपायमाह यः।
पुरुषार्थो यदा येन यो नरेणाऽभिकाङ्क्ष्यते॥

शब्दगतो विशेषः प्रतिशब्दं समवायादप्रयोजक इत्यर्थगतेन हेतुना विशेषेण विशिष्टः शब्द उक्तः। स चाऽयमर्थगतो विशेष इत्याह—पुरुषार्थस्योपायमनवगतमवगमयन्नुत्कर्षाद्विशिष्टः शब्द उक्तः। अन्यथा सर्वः शब्दः शब्दान्तराद्भिद्यत इत्यविशेषणमेव स्यात्। अनवगतमित्यनुज्ञाया व्यवच्छिनत्ति। यतश्चाऽर्थविशेषेणोपदेशता शब्दस्य तस्य च नाऽनवगतसङ्गतिना पुरुषेण प्रतीतिः अतोऽपि व्युत्पत्तेरपेक्षेत्याह—अतो नाऽविदितार्थस्य प्रथमश्राविणः पुरुषस्योपदेशात्प्रवृत्तिः ननूपदेशो विधिः, स चाऽर्थभेदाऽभिधायकः शब्द इति क्वचित्क्वचिदुच्चारणमाह शब्दस्योच्चारणमिति। क्वचिदर्थम्, विध्युद्देशेनैकवाक्यत्वादिति। क्वचिद्वचनं चोदनेति।

१. विशिष्टम् पु० पा०।

नाऽविदितार्थस्य प्रवृत्तिः। प्रदर्शनार्थं चेदम्। अतोऽर्थशब्दाऽभिधोच्चारणादिज्ञानं च कर्म्मकर्तृकारणभावसाधनेनोपदेशशब्देनोच्यते प्रेषणादिवत्। तैरपि हि यथाविवक्षितमर्थादयो निर्दिश्यन्ते। अर्थस्तर्हि प्रवर्त्तकः। सत्यं, शब्दोऽपि, तत्प्रतिपादनात्। कथं तर्ह्यङ्गोपदेशः? अपेक्षितो ह्यर्थः पुरुषाऽर्थः। अन्यथा ग्रामादिरपि न तथा स्यात्। अपेक्षितश्चोपदिष्टसाधनाऽनुग्रहः। ननु लिङादिभ्यः प्रवर्त्तनाऽवगम्यते। पराहतं चेदम्

क्रियायाः प्रवर्तकं वचनमिति। क्वचित् ज्ञानं शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानमिति। वार्तिककारश्चाऽभिधाभावनामाहुरित्यभिधामिति। अत आह—प्रदर्शनार्थं चेदं, विशिष्टः शब्दो विधिरिति। अतोऽर्थशब्दाऽभिधोच्चारणादिज्ञानं च कर्मकर्त्तृकरणभावसाधनेनोपदेशशब्देन यथायथमुच्यते। तेषु तेषु शास्त्रप्रदेशेषु चोदनाविधिशास्त्रशब्दा उपदेशशब्दा एवेत्यर्थः। अत्रैव लौकिकं निदर्शनमाह—प्रेषणादिवत्। कथमेतन्निदर्शन मि?त्यत आह—तैरपि हि प्रेषणादिशब्दैः कर्मकरणसाधनैर्यथाविवक्षमर्थादयो निर्दिश्यन्ते। यद्यर्थभेदाऽभिधायित्वेन उत्कर्षः तर्हि प्राप्ताऽप्राप्तविवेकेनाऽर्थ एव प्रवर्तको न शब्द इति चोदनालक्षणोऽर्थो धर्म इति शास्त्रकृद्वचनव्याघातः प्रसज्यत इत्याह—अर्थस्तर्हि प्रवर्तकः।

परिहरति—सत्यं, शब्दोपि प्रवर्तकस्तत्प्रतिपादनात्। अयमभिसन्धिः। न तावत्साक्षादपेक्षितोपायताऽपि प्रवृत्तिहेतुः, तस्याः प्रवृत्तेः प्रागभावादपि तु स्वज्ञानेन प्रवर्त्तयतीति तत्र शब्देनैव जन्यत इति यथाऽर्थस्तद्विषयत्वात्प्रवर्तकस्तथा शब्दोऽपि तज्जनकत्वादित्यविशेषः। तथा च न व्याघातः। एतेन पूर्वार्धं कारिकाया व्याख्यातम्। अत्र च पुरुषार्थस्येति पुरुषो नियोज्योऽभिमतः शुद्धस्येति नियोज्यार्थस्यैव न नियोक्त्रर्थस्येत्यर्थः। ननु यदि पुरुषार्थोपायाऽभिधायी शब्द उपदेशः, कथं तर्ह्यङ्गोपदेशः? न खल्वङ्गानि पुरुषार्थसाधनानि, अपि तु क्रत्वर्थानि। परिहरति—अपेक्षितो ह्यर्थोऽत्र पुरुषार्थो, न हि जात्या कश्चित्पुरुषार्थो व्यवस्थितः। अन्यथा ग्रामादिरपि न तथा स्यात्। तस्यापि स्वयमसुखवत् कदाचित्कथंचिदिष्यमाणत्वाच्चेन्न तर्हि जात्या पुरुषार्थत्वम्। यथाह न्यायवादी 'सोऽयं प्राण्यर्थोऽपरिसंख्येयः प्राणभृद्भेदस्याऽपरिसंख्येयत्वा'दिति। न चाङ्गकार्यं प्रति जात्यैवाऽपेक्षा नास्ति पुरुषाणामित्याह—अपेक्षितश्चोपदिष्टसाधनस्य श्रेयःसाधनाऽनुग्रहः। अननुग्रहे साधनवैगुण्येन श्रेयसोऽजननात्।

१. प्रमादि १ पु० पा०।

उपदेशो नियोज्यार्थकर्मा[1]प्रस्थितचोदनेति । नेदं पराहतम्[2] । तथा हि—

पुंसो नेष्टाभ्युपायत्वात् क्रियास्वन्यः प्रवर्त्तकः ।
प्रवृत्तिहेतुं धर्मं च प्रवदन्ति प्रवर्तनाम् ।।

प्रवृत्तिसमर्थो हि कश्चिद्भावाऽतिशयो व्यापाराऽभिधानः प्रवर्त्तना । सा च क्रियाणामपेक्षितोपायतैव । न हि तथात्वमप्रतिपद्य तत्र प्रवर्त्तते

अत्र चोदयति—ननु लिङादिभ्यः प्रवर्तनाऽवगम्यते । अन्यथा तच्छ्राविणः प्रवृत्त्यनुपपत्तेः । न पुनः पुरुषार्थोपायता । न खलु भूतार्थप्रतीतिः प्रवृत्तिहेतुः । पराहतं चेदमुपदेशो नियोज्यार्थकर्माऽप्रस्थित[3]प्रचोदनेति । यदि हि नियोज्यप्रयोजनं कर्मभूतमाहुः कथमसावप्रवृत्तप्रवर्त्तना ? सेयं पराहतिः । नेदं पराहतं पराहतिपरिहारेण सर्वं परिहृतं भवतीत्याशयः । कुतः ? तथा हि—

पुंसो नेष्टाऽभ्युपायत्वात् क्रियास्वन्यः प्रवर्त्तकः ।

प्रेक्षावतां हि कायवचनचेष्टे प्रयत्नपूर्विके, प्रयत्नश्च रागपूर्वः, सुखानुशयो च रागो न दुःखे नाप्यसुखे[4] भवितुमर्हति, द्वेषादुपेक्षणाच्च । क्रिया च दुःखेत्यनुभवो लोकस्य । सा यदि सुखसाधनमपि न स्यान्नाऽस्यां सुखार्थिनः प्रवर्त्तेरन् । चैते उपायाः साक्षात् सुखे प्रवर्त्तितुमीशते इति प्रेक्षावद्व्यापारोपरमप्रसङ्गः । तस्माद् दुःखरूपासु क्रियासु सुखसाधनतैवेच्छोपहारमुखेन प्रवर्त्तयति । स्वविज्ञानेन चाऽसाविच्छां प्रवृत्तिहेतुमुपहरतीत्युक्तम् । यदि पुनः शब्दः सुखसाधनतां न प्रतिपादयेन्न क्रियायां पुरुषं प्रवर्त्तयेत् । ननु तथापीष्टसाधनतामात्रं शब्देन प्रतिपादितं, कुतः पुनरतः प्रवर्त्तनाप्रत्ययः ? इत्यत आह—

प्रवृत्तिहेतुं धर्मं च प्रवदन्ति प्रवर्त्तनाम् ।।

तद् व्याचष्टे—प्रवृत्तिसमर्थो हि कश्चिद्भावाऽतिशयो व्यापाराऽभिधानः प्रवर्त्तना । अयमर्थः । न वयं परिस्पन्दमेवैकं व्यापारमाचक्ष्महे, येनाऽस्पन्दनात्मनः समीहितसाधनताया अप्रवर्त्तनात्मत्वेन पर्यनुयुज्येमहि, अपि तु भावधर्म एव कश्चित्समीहितसाधनाऽनुगुणो व्यापारपदार्थः । तद्यथा आत्मनो बुद्ध्यादिजननप्रवृत्तस्य मनःसंयोग एवाऽयं भावधर्मः[5] । तद्वदत्रापि स्पन्दस्तदितरो वा भावधर्मः प्रवृत्तिजननाऽनुकूलतया व्यापारविशेषः प्रवर्तना । न चाऽसौ शब्दस्तद्भावना चेत्याह—सा च क्रियाणामपेक्षितोपायतैव । कुतः ?

---

१. मर्माप्त मू० पु० पा० ।
२. परिहृतम् मू० पु० पा० ।
३. कर्माप्रस्थित ।
४. असुखदुःखे १ पु० पा० ।
५. संयोगस्तत एवायं धर्मः २ पु० पा० ।

कश्चित् । याप्याज्ञा[1]दिभ्यः प्रवृत्तिः सापि कथं चिदपेक्षितनिबन्धनत्वमुपाश्रित्यैव । अन्यथाऽभावात् । ननु कर्त्तव्यमिति प्रतिपत्तेः प्रवृत्तिः । कथं न हि तथात्वमपेक्षितोपायत्वमप्रतिपद्य तत्र क्रियासु प्रवर्त्तते कश्चित् । नन्वनपेक्षितोपायेऽप्याज्ञया राज्ञः प्रवर्त्तन्ते प्रेक्षावन्त इति कथमपेक्षितोपायतैव प्रवृत्तिहेतुः ? इत्यत आह—याप्याज्ञादिभ्यः प्रवृत्तिः साऽपि कथंचिदपेक्षितनिबन्धनतामुपाश्रित्यैव । यद्यप्याज्ञादयो नियोक्त्रर्थकर्माणस्तथापि तद्विषयसंपादनस्य कथंचिन्नियोज्याऽपेक्षितनिबन्धनत्वमप्यस्ति । तथा हि । तत्संपादनपरितोषित आज्ञापयिता समीहितमस्मै प्रयच्छति अहितं वा न विधत्ते । तदिदमपेक्षितमुपाश्रित्य भृत्यस्य प्रवृत्तिः । कुतः पुनरेतदि?त्याह—अन्यथा तदनुपाश्रये प्रवृत्तेरभावात् न खलु यस्य यो न हिताऽहितप्राप्तिपरिहाराभ्यां यतते स तदाज्ञामनुरुध्यते । न चैतावतोपदेशस्याऽऽज्ञादिभिरविशेषः, तेषां नियोजकार्थसमुद्देशेन प्रवृत्तेरानुषङ्गिकत्वान्नियोज्यार्थस्योपदेशस्य तद्वैपरीत्यात् । तस्माल्लिङादिभ्यः प्रवर्तनाऽवगतिरुपपन्नाऽनुपपन्ना च पराहतिरिति ।

अत्र केचिदाम्नायं प्रति श्राद्धमानिनः प्राहुः । ननु कर्त्तव्यमिति प्रतिपत्तेः प्रवृत्तिः । इदमाकूतम् । कार्यदर्शनोन्नेयव्यापृतयः खल्वमी लिङादयः । कथं च प्रवृत्तिलक्षणं वृद्धानां लिङादिश्रवणसमनन्तरमुपलभ्यते । तच्च बुद्धिपूर्वकं, स्वतन्त्रप्रवृत्तित्वात् अस्मत्प्रवृत्तिवत् । अनुमिता च बुद्धिरस्मत्प्रवृत्तिहेतुबुद्धिगोचरचारिणी प्रवृत्तिहेतुबुद्धित्वात् अस्मत्प्रवृत्तिहेतुबुद्धिवदिति । तस्याश्च विषयं स्वयमेव चक्षुरुन्मील्य पिण्डिकरोगं[2] परित्यज्य पर्यालोचयन्तः शब्दव्यापारपुरुषाशयतत्समीहिततत्साधनताव्युदासेन कर्त्तव्यतामेव प्रतिपद्यामहे । तथा हि । स्तनपानादावपि न जातु समीहितोपाय इत्येव प्रवृत्ताः स्मः, किं तु कर्त्तव्यमेतदिति । अतीते वर्त्तमानेऽनागते च सामुद्रविदाख्याते एतत्ते भवितेतिवत्कर्त्तव्यतात्मना प्रवृत्तेः । तदवगमे च तदात्मनि प्रवृत्तेः कर्त्तव्यतैव प्रवृत्तिहेतुरिति लिङादिश्रवणाऽनन्तरा प्रवृत्तिः कर्त्तव्यताऽभिधानमेव लिङादीनामापादयति । तथा च विदितसङ्गतितया लिङादयो वेदेऽपि तामेवाऽभिदधते । एतावांस्तु भेदो लौकिकवचसः प्रमाणान्तराऽपेक्षप्रवृत्तित्वादपेक्षितोपायताप्रतीतिपुरःसरत्वाच्च दुःखरूपक्रियाकर्त्तव्यताऽवगतेरपेक्षितोपायतां तत्प्रमाणभूतामन्तर्भाव्य कर्तव्यताऽवगतिः । अपौरुषेयस्तु वेदो न स्वार्थे प्रमाणान्तरमपेक्षत इत्यपेक्षितो-

१. यद्यप्याद्या मू० पु० ।

२. चक्षुषो निमील्य डिण्डिधरोगम् २. पु० पा० ।

हि तथा प्रतिपद्यमानो न प्रवर्त्तेत ? यो हि स्वर्णमुपलभ्य मृत्तिकेत्याह कस्तस्योत्तरं दद्यात् ? कः पुनरयमर्थः कर्त्तव्यमिति ? न कश्चित् । प्रतिभा । का पुनरियम् ? नियतसाधनावच्छिन्नक्रियाप्रतिपत्त्यनुकूला प्रज्ञा[1] प्रतिभाक्रियाविषयत्वे हि क्रियाप्रतीतिः स्यात् । सा च प्रवृत्तिहेतुः ।

पायताऽवगमनिरपेक्ष एव कर्त्तव्यताऽवगमहेतुः । तथा च सा वेदादवगम्यमानाऽनुष्ठातारमधिकारिणं नियोज्यमपेक्षते, न पुनः साध्यमस्या एव, ताद्रूप्यात् । नियोज्यश्च यत्र साध्यविशिष्टो भवेत् तत्र साध्यबुद्धिर्यथा स्वर्गकामो यजेतेति । यत्र त्वसौ निमित्तवान्यथा यावज्जीवमिति निषिध्यमानक्रियाकर्त्ता वा यथा न कलञ्जं भक्षयेदिति तत्र भगवानाम्नाय एव निरस्ताऽखिलदोषाशङ्को भावार्थविषयं नञर्थविषयं वा कार्यं हिताऽहितसाधनताऽवगमनिरपेक्षोऽवगमयन्प्रवृत्ति निवृत्तिं वा विधत्त इति किमपेक्षितोपायतयेति ।

नन्वपेक्षितोपायतामन्तरेण कर्त्तव्यमिति शतशोऽप्यभिधीयमानं न प्रवृत्तये कल्पत इत्यत आह—कथं हि तथा प्रतिपद्यमानो न प्रवर्त्तेत ? शब्दस्तावत्कर्तव्यतायां विदितसङ्गतिस्तामवगमयति । तथा नैमित्तिकनिषेधाऽधिकारयोरसौ प्रतीयमाना न शक्या नेति वक्तुम् । न चाऽपेक्षितोपायतानिवृत्तौ तस्या अपि निवृत्तिरिति साम्प्रतम् । सा हि तस्यां न प्रमाणम् । न चैकप्रमाणनिवृत्तौ प्रमाणान्तरेण प्रतीयमानं तदेव निवर्त्तितुमर्हति । न हि संतमसे द्रव्यं चक्षुषा न गृह्यते इति न त्वचा व्यवस्थाप्यते । न च निमित्तान्तरं नैमित्तिकाऽपूर्वं न कर्त्तव्यं प्रेक्षावता । असुखत्वे सति हिताऽहितप्राप्तिपरिहाराऽनुपायत्वात् काकदन्तपरीक्षावदित्यनुमानं सम्भवति । आम्नायजन्मना कर्तव्यतावोधेन वाधितविषयत्वात् । तदाह—यो हि स्वर्णमुपलभ्य मृत्तिकेत्याह कस्तस्योत्तरं दद्यात् ? तस्मादनपेक्षादाम्नायात् कर्त्तव्यताऽवगताऽनुष्ठान[2]माक्षिपत्येव । अन्यथा तत्त्वाऽनुपपत्तेः । तस्यास्तन्नान्तरीयकत्वात् । तस्मात्सूक्तं कथं हि तथा प्रतिपद्यमानो न प्रवर्त्तेत ।

ननु यदि न हितसाधनता कर्त्तव्यता तर्हि तदर्थतत्त्वं वाच्यम्, न च तदस्तीत्याशयवान्सिद्धान्ती पृच्छति—कः पुनरयमर्थः कर्त्तव्यमि?ति । तत्रान्तरे पूर्वपक्ष्येकदेशी प्राह—न कश्चित् । नन्वेवमसदर्था कर्त्तव्यतावगतिरप्रमाणम् । अप्रमाणं च न व्यवहाराय कल्पत इत्यत आह[3]—प्रतिभा । ननु व्यभिचारादर्था[4]निश्चयात्मकमनैकान्तिकलिङ्गप्रसूतं संवेदनं प्रतिभेति

१. प्रज्ञा प्रतिभा पु० पा० । २. कर्तव्यताऽनुष्ठानं २ पु० पा० ।
३. इत्याह पु० पा० । ४. दर्थम पु० पा० ।

**अप्रमाणं न व्यवहाराङ्गम्। संशयविपर्ययौ हि तथा। न हीदमित्थमनेन कर्तव्यमिति अनुपजातप्रतिभाभेदः प्रवर्तते प्रत्यक्षाद्यवगतेऽप्यर्थे। तत्र हि प्रमाणकार्य्यसमाप्तिः। प्रतिभानेत्रो हि लोक इतिकर्तव्यतासु समीहते।**

प्रतिभाविदः। न चाऽनिश्चयात्मकं विज्ञानं व्यवहाराङ्गं भवतीत्याशयवानाह—का पुनरियम्? एकदेशिन उत्तरं—नियतसाधनाऽवच्छिन्नक्रियाप्रतिपत्त्यनुकूला प्रज्ञेति। न हि ते प्रतिभाविदः, ये संवेदनमनिश्चयात्मकं प्रतिभामाचख्युः। संशयो हि सः। वयं तु साध्यसाधनेतिकर्त्तव्यताऽवच्छिन्नायाः क्रियायाः प्रतिपत्तावनुकूलां तत्प्रतिपत्त्या कार्येऽनुष्ठानलक्षणे कर्त्तव्ये सहकारिणो कर्त्तव्यमिति प्रज्ञां प्रतिभामध्यगीष्महि। एवं तर्हि क्रियैऽवास्या विषय इति न निर्विषयेत्यत आह—प्रतिभाक्रियाविषयत्वे हि क्रियाप्रतीतिः स्यात्। सा च त्रैकाल्याऽवच्छिन्नक्रियागोचरा। यथा पचति पक्ष्यत्यपाक्षीदिति। इयं पुनरतीताऽनागतवर्त्तमानानामन्यतमेनाप्यनवच्छिन्नमद्भुतार्थमिव प्रतिभासयन्तो प्रज्ञा। न पुनरस्याः परमार्थसद्विषयः, कालत्रयरहितत्वात् खपुष्पवत्। न खलु कुर्यामिति वर्त्तमानाख्या, करोमीत्यविशेषप्रसङ्गात्। नाऽनागता, करिष्यामीति। नाऽतीता, अकार्षमिति। तदेषा न प्रमाण[1]मसद्विषयत्वान्न संशयः एकान्ताऽवसायान्न विपर्ययः सर्वेषां सर्वत्र व्यवहारदर्शनात्। अत एव चित्तवृत्ति तामिमामाचक्षते विकल्परूपामाचार्याः 'शब्दज्ञानाऽनुपाती वस्तुशून्यो विकल्प' इति वदन्तः।

ननूक्तमप्रमाणं प्रतिभा कथं व्यवहारं प्रवर्तयेदि?ति, अत आह—सा च प्रवृत्तिहेतुः। कुत एतदप्रमाणं न व्यवहाराङ्गमि?ति। संशयविपर्ययौ हि तथा। प्रतिभा पुनस्ताभ्यामन्या व्यवहारं प्रवर्तयतीत्यभिप्रायः। तत्किमन्यतामात्रेण प्रवृत्तिहेतुः? नैवमिति, तदन्वयव्यतिरेकाऽनुविधानात्प्रवृत्तिभावाऽभावयोः। तत्र व्यतिरेकं तावदाह—न हीदमित्थमनेन कर्तव्यमित्यनुपजातप्रतिभाभेदः प्रवर्तते प्रत्यक्षाऽवगतेप्यर्थे। ननु प्रत्यक्षादेरेव हानोपादानोपेक्षाः फलमिति किमर्थं प्रतिभा? इत्यत आह—तत्र हि प्रमाणकार्यसमाप्तिः। प्रमाणानां हानादिलक्षणं कार्यं तत्प्रतिभाभेदे सति समाप्यते नाऽन्यथा। तेन हानादिक्रियासु प्रवृत्तानि प्रत्यक्षादीनि काष्ठानीव पाके ज्वलनं प्रतिभारूपमपेक्षमाणान्यपि नाऽकारणमित्युक्तं भवति। अन्वयमिदानीमाह—प्रतिभानेत्रो हि लोक इतिकर्तव्यतासु समीहते। इतिकर्त्तव्यतास्वनुष्ठानेषु कायवचनचेष्टासु समीहते प्रयतते कार्यमिति प्रतिभासाधनो हि लोक इत्यर्थः। तदनेन क्रियाप्रतिपत्तावानुकूल्यं प्रतिभासु दर्शितम्। नन्वयं विकल्पः, स च शब्द-

१. प्रमाणम असविषयत्वान्न पु० पा०।

किं पुनरस्या निमित्तम् ? शब्दः। तत्र व्युत्पन्नानां साक्षाद्भावनामुखेन वाऽप्रसिद्धशब्दनिबन्धनव्यवहाराणां बालादीनामनादिशब्दभावना। अन्यथा आद्यकरणविन्यासाद्यसम्भवात्। यथोक्तम्।

आद्यः करणविन्यासः प्राणस्योर्ध्वं समीरणम्।
स्थानानामभिघातश्च न विना शब्दभावनाम्॥

ज्ञानाऽनुपातीति तद्विदः। न च प्रतिभा शब्दज्ञानमनुपतति। बालादीनां तदभावेन तदनुत्पादादप्रवृत्तिप्रसङ्गात्। तस्मान्निमित्तान्तरं वाच्यम्, न च तदस्तीत्याशयवानाह—किं पुनरस्या निमित्तम् ? उत्तरं—शब्दः[1]। तत्र ये तावद् व्युत्पन्नास्तेषां प्रतिभायाः साक्षाद्भावनामुखेन वाऽप्रसिद्धशब्दनिबन्धन-व्यवहाराणां बालादीनाम्।

नन्वियं पट्वभ्यासाऽऽदरप्रत्यययोर्निर्भावनानाऽसति पूर्वाऽनुभवे भवितु-मर्हति, अनुभवोऽप्यविदितसंबन्धशब्दविज्ञानजन्मा नास्ति। नाऽस्मिन जन्मनि बालादीनां प्राग्भवीया तु भावना सर्वसंस्कारच्छिदः प्रयाणात् ध्वंसतेस्मेति न सम्प्रतितनीं प्रतिभां भावयेत्, भावने वा जात्यन्धबधिरादयस्तज्जन्माऽनु-भूतानिव जन्माऽन्तराऽनुभूतान् रूपशब्दादीनपि व्याचक्षीरन्नित्यत आह—अनादिशब्दभावनाऽवश्याऽभ्युपेतव्या। कुतः? आद्यकरणविन्यासादीनामन्यथा-ऽसंभवात्। यथोक्तं प्रतिभाविद्भिः।

आद्यः करण[2]विन्यासः प्राणस्योर्ध्वं समीरणम्।
स्थानानामभिघातश्च न विना शब्दभावनाम्॥

जातमात्रः खल्वयं बालकः पित्रा मुखहुते मधुसर्पिषी जिह्वया लेढि, सोऽयमाद्यः करणविन्यासः। प्राणांश्चोर्ध्वं समीरयति यच्छ्वसतीत्युच्यते। अपि चोदीरितेन वायुना हृदयादीनि स्थानान्यभिहन्ति यतः शब्दभेद आविरस्ति। तदेतत्सर्वं प्राग्भवीयशब्दभावनाविजृम्भितम्। अत्र प्रयोगः, बालानामेवंविधा चेष्टा कर्त्तव्यताऽवगतिपूर्विका स्वतन्त्रचेतनप्रवृत्तित्वाद्या या स्वतन्त्रचेतनप्रवृत्तिः सा सा कर्तव्यताऽवगतिपूर्विका यथाऽस्मदादीनाम्। तथा विवादाध्यासिता कर्तव्यताऽवगतिः शब्दयोनिः कर्त्तव्यताऽऽकारत्वात् यो य एवमाकारः स सर्वः शब्दयोनिर्यथाऽस्मदादीनाम्। स च शब्दः साक्षादनुपलभ्यमानो भावनामुखेनाऽधिकरणसिद्धान्तन्यायेन करणभाव-मापद्यते। भावना च यथाकार्यदर्शनोन्नेया यावत्कार्यदर्शनं व्यवस्थाप्यत इति न जात्यन्धबधिरादीनां जन्मान्तराऽनुभूतरूपादिव्याख्यानप्रसङ्गः।

१. निमित्तं शब्दः २ पु० पा०। २. कारण २ पु० पा०।

**विच्छिन्नप्रतीतीनामपि च पदार्थानां किं कथमनुसन्धीयेत, विचारविकलाऽप्रत्यवमृष्टपूर्वशक्तिः समाविष्टपूर्वशक्तिप्रतिभासेवोदीयमानोपश्लेषं**

व्युत्पन्नानामपि शब्दभावनायोनिरस्ति प्रतिभेत्याह—विच्छिन्नप्रतिपत्तीनामपि च पदार्थानां किं कथमनुसंधीयत इति विचारकल्पनाप्रत्यवमृष्टपूर्वशक्तिः समाविष्टपूर्वशक्तिप्रत्यवभासेवोदीयमानोपश्लेषं विदधाति। अयमर्थः। संतापतप्ततनवो हि शीतह्लददर्शनमात्रादप्सु मिमङ्क्षवः प्रवर्त्तन्ते, नान्तरा विचारयन्ति। दृश्यमानह्लदगता आपस्तापमपनेतुं समर्थाः सति शिशिरभावे तोयत्वाद्यतोयं शिशिरं तत्तत्सर्वं तापाऽपनोदनसमर्थं यथा गङ्गातोयम्, वयं च तप्तास्तदिह तत्प्रशमनाय निमज्जाम इति। न चैतेषां परस्परोपश्लेषमन्तरेण कर्त्तव्यता। न वास्यामसत्यां स्वतन्त्रचेतनप्रवृत्तिः। न चोपश्लेषे समुदाचरद्वृत्ति किंचित्प्रमाणमस्ति। तस्मादसंविदितरूपा शब्दभावनैव इदमित्थमनेन कर्त्तव्यमिति प्रतिभाहेतुरास्थेयः। न चैवं वाच्यं, प्राग्भवीयं तज्जन्मजं वा यत्र यत् प्रतिभाति तत्र तद्भावनावीजमस्तु, किं शब्देने? ति। आनुमानिकाऽनुभवजन्मनो भावनाया भूतार्थगोचरत्वेन कर्त्तव्यताऽऽकारप्रतीत्यकारणत्वात्। कर्त्तव्यताकाररहितस्य चाऽत्रोपश्लेषमात्रस्य प्रतीतेः। अत्र किं कथमनुसंधीयते इति विचारविकलेति अनुमानवीजभूतानां धर्मिस्वरूपदर्शनतद्धर्मसंदेहजिज्ञासापक्षहेतुधर्मपरामर्शप्रमाणान्तरावाधानामभावं सूचयति। अप्रत्यवमृष्टपूर्वशक्तिरिति व्याप्तिस्मरणाऽभावमाह। न जातु गृहीतव्याप्तिरपि तस्या अस्मरन्ननुमातुमर्हति।

ननु न यदि पूर्वशक्तिपरामर्शः किमिति तापदूनं शिशरह्लदाऽवगाहने प्रवर्त्तयेन्न दहनज्वालाकलापाऽऽलिङ्गने? एतन्निराकरोति—समाविष्टपूर्वशक्तिप्रत्यवभासान्नेदमनुमानं येन पूर्वशक्तिपरामर्शमपेक्षते, अपि तु स्वकारणात्पूर्वशक्त्याकारोपजायमाना क्वचित्प्रवर्त्तयति क्वचिन्न। ननु यदि पूर्वशक्त्यवभासा प्रतिभा तर्हि पूर्वैव शक्तिरस्या विषय इति न निर्विषयेति, एतन्निराकरोति—इवेति। न तु सैव। तथा हि। कर्त्तव्यतावभासा प्रतिभा पूर्वशक्तिमपि तदवच्छेदकतया गोचरयति, कर्तव्यता च न परमार्थसतीति तदवच्छेदेन प्रतिभारूढेनात्मना शक्तिरप्यवस्तुसती। स्वरूपेण तु सत्त्वमप्रयोजकं प्रतिभायामनारोहात्। सेयमेवंविधा प्रतिभा भावानामुपश्लेषं विदधाति। कुतः? तादर्थ्यात्प्रवृत्त्यर्थत्वादस्याः।

ननु भवतु प्रवृत्त्यर्था भावना[1], उपश्लेषविधानादित्यत आह—अनुपश्लेषे तदभावात्। विशिष्टार्थप्रतिपत्तिनिवन्धनो व्यवहारोऽनविच्छिन्न-

१. भावना विना का० पा०।

विदधाति । तादर्थ्यादनुपश्लेषे तदभावात् । दुर्ज्ञानोपायेषु च प्राज्ञैरपि स्वरविशेषाश्रयभेदेषु पक्षिणां पूर्वं शब्दभावनाऽनुगमात्प्रत्युत्पन्नशब्दव्यापारा[1] प्रतिभा प्रवृत्तिनिबन्धनं, नोपायज्ञानम् । उपदेशाऽसकृद्दर्शनयोरभावात् । आहारविशेषप्रतिपत्तिश्च तज्जातीयानामविदितप्रीत्युपायत्वेन प्रथमज्ञाननिबन्धना न भवेत् । जातिभेदाऽभिव्यक्तप्रतिभाभेदानां प्लवनादिक्रियायां प्रवृत्तिश्चाऽज्ञातोपायानामेकजातीयानां च रागादिमयी प्रवृत्तिः, शाश्वतिक-

प्रतिपत्तिपदार्थमात्रान्नोत्पत्तुमर्हतीत्यर्थः । अपि च यत्प्राज्ञानामपि प्रमाणैरेकान्तदुष्करं तन्मन्दधियामपि पक्षिणां प्रत्युत्पन्नशब्दव्यापाराभावेऽपि पूर्वशब्दभावनाऽनुगमलब्धजन्मप्रतिभाभेदवशादीषत्करमिति प्रमाणेभ्योऽपि सामर्थ्याऽतिशयं प्रतिभाया दर्शयति—दुर्ज्ञानोपायेषु च प्राज्ञैरपि स्वरविशेषाऽऽश्रयभेदेषु पक्षिणां पूर्वशब्दभावनाऽनुगमाद्विप्रकृष्टशब्दव्यापारा प्रतिभा प्रवृत्तिनिबन्धनम् ।

ननूपायज्ञानमेव प्रमाणभूतमस्ति, तन्नः प्रवृत्तिनिबन्धनमिति किं प्रतिभया ? इत्यत आह—नोपायज्ञानं प्रवृत्तिनिबन्धनम् । कुतः ? उपदेशाऽसकृद्दर्शनयोरभावाद्धि कारणम् उपायज्ञानं कारणद्वयनिवृत्तौ निवर्त्तते धूम इव धूमध्वजनिवृत्तावित्यर्थः । अथ कुलायनिर्माणे कलविङ्कानां स्वरभेदविकारे च मधौ पुंस्कोकिलानामुपायज्ञानबीजमसकृद्दर्शनमध्यारोप्येतेत्याह—आहारविशेषप्रतिपत्तिरस्मदादिभिरेतदादरणीयमिति प्रतिभेति यावत् । तज्जातीयानां तज्जातिर्येषां तेषां समानजातीयानामुत्पन्नमात्राणामसकृद्दर्शनाऽभावादविदितप्रीत्युपायत्वेन प्रथमज्ञाननिबन्धना न भवेत् । प्रथमग्रहणेनाऽसकृद्दर्शनाऽभावं सूचयति ।

नन्वनादित्वात्प्रेत्यभावस्य पुनः समानाऽसमानजातीयविविधदेहोपधानसमधिगततत्तज्जातिनियततत्तद्भावनानिचयस्यैकस्यामपि जातौ समस्तप्रतिभोदयप्रसङ्गः, कारणसन्निधानादित्यत आह—जातिभेदाऽभिव्यक्तप्रतिभाभेदानाम् । एतदुक्तं भवति । येन कर्माशयेन यदुपात्तं जन्म स तज्जन्मोचितामेव भावनामभिव्यनक्ति, न जात्यन्तरोचिताम् । तस्यास्तत्राऽनुपयोगात् । अभिव्यक्तभावनाभेदः प्रतिभाभेदमुत्पादयन्नभिव्यनक्ति । उत्पत्तौ सत्यां प्रतीतेः प्लवनादिक्रियाप्रवृत्तिश्चाऽज्ञातोपायानां जातमात्राणां चक्रवाकादीनां न भवेत् । एकजातीयानां च पारावतोरगादीनां रागद्वेषमयी प्रवृत्तिर्जातमात्राणामज्ञातसुखदुःखोपायानां न भवेत् । शाश्वतिकविरोधिनामहिनकुलादीनां द्वेषवती प्रवृत्तिर्न भवेत् ।

---

१. व्यापाराभावेपि मू० पु० पा० ।

विरोधानां द्वेषप्रवृत्तिः । अतो नेष्टाऽभ्युपायमात्रं प्रवृत्तिहेतुः, अपि तु प्रतिभेत्यादर्शयन् वृद्धाः । यथाऽवोचन्—

उपश्लेषमिवाऽर्थानां सा करोत्यविचारिता ।
सार्वरूप्यमिवापन्ना विषयत्वेन वर्त्तते ॥
साक्षाच्छब्देन जनिता भावनाऽनुगमेन वा ।
इतिकर्त्तव्यतायां तां न कश्चिदतिवर्त्तते ॥
प्रमाणत्वेन तां लोकः सर्वः समनुगच्छति ।
व्यवहाराः प्रवर्त्तन्ते तिरश्चामपि तद्वशात् ॥

[1]पूर्वपक्ष्येकदेशी प्रकृतमुपसंहरति—अतो नेष्टाऽभ्युपायता प्रवृत्तिहेतुरपि तु प्रतिभेति । एतच्चाऽदर्शयन् वृद्धाः । यदवोचन्—

उपश्लेषमिवार्थानां सा करोत्यविचारिता ।

अविचारिते किं कथमनुसंधीयत इति विचारविकलेति व्याकृतम् । न चासौ व्यतिरिक्तविषयेत्याह—

सार्वरूप्यमिवापन्ना विषयत्वेन वर्त्तते ।

विच्छिन्नप्रतिपत्तीनां तापह्रदतोयादीनां सहसोपश्लेषं विदधाति । तेषां सार्वरूप्यमापन्नेव न त्वापन्ना । तेषां तदारोहिणां वस्तुसत्ताया विचाराऽसहत्वात् । तस्मात्प्रतिभैव ताद्रूप्यमापन्ना विषयत्वेन वर्तते । न तद्व्यतिरिक्तोऽस्ति विषयः । एतदपि च विच्छिन्नाप्रतिपत्तीनामपि वहुपदार्थानां समाविष्टपूर्वशक्तिप्रत्यवभासेवोदीयमानेति व्याख्यातम् । न चेयमाकस्मिकी, न वा प्रमाणभूताऽपि न व्यवहाराङ्गमित्याह—

साक्षाच्छब्देन जनिता भावनाऽनुगमेन वा ।
इति कर्तव्यतायां तां न कश्चिदतिवर्त्तते ॥

अप्रमाणभूतामपि च निर्विषयतया व्यवहारान् प्रत्यन्तरङ्गतया चाऽव्यभिचारितया च ।

न केवलं प्रेक्षावतां मनुष्याणामपि तु—

प्रमाणत्वेन तां लोकः सर्वः समनुगच्छति ।
व्यवहाराः प्रवर्तन्ते तिरश्चामपि तद्वशात् ॥

तदुदाहरणप्रचयमात्यन्तिकप्रसिद्धिख्यापनायाह, अन्यथा

१. पूर्वपक्षैकदेशी पु० पा० ।

स्वरवृत्तिं विकुरुते[1] मधौ पुंस्कोकिलः कथम् ।
जन्त्वादयः कुलायादेः करणे शिक्षिताः कथम् ॥
आहारप्रीतिविद्वेषप्लवनादि[2]क्रियासु च ।
जात्यन्वयप्रसिद्धासु[3] प्रयोक्ता[4] मृगपक्षिणाम् ॥
उच्यते—
न निरालम्बनं ज्ञानं क्रियासाधनयोगिनि ।
सामान्येऽस्मिन्विप्रकृष्टे यच्छब्दवदुपायधीः ॥

सा खलु प्रतिभाऽऽलम्बनवती न वा ? आलम्बनवती चेत्तदेवाऽवबोद्धव्यं प्रवृत्तिनिबन्धनं, न च तदन्यदीहितोपायतायाः ।

स्वरवृत्तिं विकुरुते मधौ पुंस्कोकिलः कथम् ।
जन्त्वादयः कुलायादिकरणे शिक्षिताः कथम् ॥
आहारप्रीतिविद्वेषप्लवनादिक्रियासु कः ।
जात्यन्वयप्रसिद्धासु प्रयोक्ता मृगपक्षिणाम् ॥

तत्र सिद्धान्ती पूर्वपक्ष्ये[5]कदेशिनमनन्तरतया निराकरोति—उच्यत इति ।

न निरालम्बनं ज्ञानं क्रियासाधनयोगिनि ।
सामान्येऽस्मिन्विप्रकृष्टे यच्छब्दवदुपायधीः ॥

यद्यपि प्रतिभा निर्विषयेत्युक्तं, तथापि कदाचिदिदमभ्युपगतसिद्धान्तमात्रं स्यान्न तात्त्विकमिति दूषणाऽभिधित्सया विकल्पितम् । सा खलु प्रतिभा आलम्बनवती न वा । तत्र प्रथमं पक्षमाश्रित्याह—आलम्बनवती चेत्तदेव वा बोध्यं प्रवृत्तिहेतुर्न प्रतिभा । नन्वेतावतापि किमभिमतसिद्धिः ? इत्यत आह—न च तदन्यदीहितोपायतायाः । एतच्चोपरिष्टान्निपुणतरमुपपादयिष्यते । तथा चाऽभिमतसिद्धिः ।

द्वितीयं पक्षमवलम्बते परः । ननु न विज्ञानं बाह्यविषयं सम्भवति । विकल्पाऽसहत्वात् । निराकारस्य वा विज्ञानस्य तद्विषयः साकारस्य वा । न तावन्निराकारस्य । विषयलक्षणाऽयोगात् । तथा हि यदि सत्त[6]या विषयः सर्वेऽर्थाः सर्वेषां सत्तामात्रस्याऽविशेषाद्विषया इति सर्वसर्वज्ञतापत्तिः । अथोत्पादकत्वाद्विषयत्वं तच्च कस्यचिदेवार्थस्य कस्यचिदेव प्रतिपत्तुः कस्यचिदेव प्रत्ययं प्रतीति नाऽतिप्रसङ्गः, तथापि चक्षुरादीनामप्युत्पादकत्वाद्विषयत्वं प्रसज्येत, विज्ञानसमये च तदुत्पादकस्याऽतीतत्वात् । क्षणिकत्वेन कार्यकारणयोरयौगपद्यात् । वर्तमानताज्ञानाऽभावप्रसङ्गः । एमसामग्री-

१. स्वरप्रवृत्तिं कुरुते मू०पु०पा० । २. आहारप्रीत्युपश्लेषाद्भावनादि मू०पु०पा० ।
३. प्रयुक्तासु मू० पु० पा० । ४. प्रत्ययः मू० पु० पा० ।
५. पूर्वपक्षै पु० पा० । ६. सत्तायां ।

प्रतिबन्धेन वा वर्त्तमानविषयत्वे नेत्रादीनामपि तदेकसामग्रीनिवेशिनां विज्ञानकालानां ग्रहणप्रसङ्गः ।

स्यादेतत् । प्रत्ययः स्वकारणाऽऽसादितसामर्थ्यभेदः कंचिदेवाऽर्थं वर्त्तमानमवभासयति न सर्वं, स हि तस्य महिमेति न नेत्रादिविषयता । यथाऽऽह 'विषयग्रहणं धर्मो विज्ञानस्ये'ति । अत्रैतदालोचनीयं, किं विषयः पुनरयं सामर्थ्यभेदः स्वकारणाऽधीनजन्मा विज्ञानस्ये ?ति । अर्थविषय इति चेत् ? किमयमस्य निर्वर्त्त्यो यथा संयवनस्य पिण्डः, विकार्यो वा यथाऽवघातस्य व्रीहयः, संस्कार्यो वा यथा प्रोक्षणस्योलूखलादिः प्राप्यो वा यथा दोहनस्य पयः ? किमनेनाऽनभ्युपेताऽऽरोपणेन ? अर्थप्राप्तौ तु विज्ञानं समर्थमिति ब्रूमः । का पुनरियं प्राप्तिः ? प्रमितिरर्थधर्मः कंचिदेव प्रमातारं प्रति द्वित्वादिसंख्येवाऽपेक्षाबुद्धिमन्तं प्रति बुद्धिध्वंसाच्च ध्वंसते द्वित्वादिकमिवाऽपेक्षाबुद्धिविनाशादिति चेत् । न तावदुन्मीलितलोचना द्वि[1]त्वादिकमिव तद्धर्मं प्रमितिमीक्षामहे । अपि चाऽतीतानागतयोरप्रमितिप्रसङ्गः । न ह्यस्ति सम्भवः, अप्रत्युत्पन्नो धर्मी धर्मश्च तस्य प्रत्युत्पन्न इति ।—

यद्युच्यते, न विज्ञानादन्योऽर्थप्रकाशः किं तु विज्ञानप्रकाश एव सः । विज्ञानप्रकाशश्च विज्ञान[2]मेव । कथमन्यप्रकाशोऽन्यस्येति चेत् । स्वभावभेदात् । रूपादयो हि स्वप्रत्ययादुपजायमाना नात्मनः परस्य वा प्रकाशकाः, ज्ञानं तु स्वप्रत्ययसमासादितजन्माऽऽत्मपरप्रकाशनपरमार्थं न जातु तदर्थमन्तरेण दृष्टरूपं पश्चाद्येन सम्बध्यते परशुरिव शुद्धः स्वकारणाऽधीनजन्मा पश्चाच्छिदया, किंत्वर्थसहितमेवेति न पर्यनुयोगमर्हति । न हि परशुः स्वकारणादयोमयस्तत्त्वे किंचिदपेक्षते पर्यनुयुज्यते वा । स्वभावभूतं चाऽस्य परप्रकाशनमप्रकाशननिवृत्त्या कथंचित्कल्पितभेदं फलमिति स्वपरप्रकाशनसामर्थ्यमसामर्थ्यनिवृत्त्या कथंचित्कल्पितव्यतिरेकेण[3] प्रमाणमिति न निर्विषयं सामर्थ्यमिति ।

तत्र ब्रूमः । कः पुनरर्थः स्वपरप्रकाशनपरमार्थं विज्ञानमि ?ति । यदि प्रकाशनस्वभावं, सिद्धमेतत् । अथ परस्परसम्बन्धस्वभावं, कः पुनरेषां सम्बन्धः ? विषयविषयिभावः सम्बन्ध इति चेत् । तस्याऽर्थज्ञानसमवायेन नानात्वमनेकवृत्तितया प्रसज्येत । तथा च ते एव तत्त्वम् । अतीताऽनागताऽर्थवृत्तिता च कथमस्येत्यभिहितप्रायम् । विज्ञानमात्राऽऽश्रयत्वे तु कथम-

१. नीला पु० पा० । २. विज्ञानम् २ पु० पा० ।
३. व्यतिरेकि २ पु० पा० ।

स्याऽर्थाऽन्वयः ? तस्मादात्मपरप्रकाशनपरमार्थं विज्ञानमिति वर्णयता वलाद्विज्ञानतादात्म्यं नोलादेरभ्युपगतं भवति। तथा च निराकारं विज्ञानं प्रति विषयलक्षणाऽयोगात् साकारस्य विषयोऽर्थ इति।

अपि च विज्ञानप्रकाश एव चेदर्थप्रकाशस्ततस्तद्भेदेनाऽर्थभेदो व्यवस्थापनीयः। तस्य च निराकारतया विशेषस्याऽभावात् इदं नीलस्य संवेदनमिदं पीतस्येति विभागाऽभावादर्थक्रियाविशेषार्थिनो न प्रवर्त्तेरन्। आकारभेदवत्त्वे तु विज्ञानस्य नीलसारूप्यं व्यवस्थापनहेतुत्वात् प्रमाणं संविद्रूपता त्वस्य नीलेऽर्थे व्यवस्थाप्यमानत्वात् फलम्। यद्यपि सारूप्यं विज्ञानं चेत्येकमेव तत्त्वं तथापि कथंचिदेकव्यावृत्तिनिष्ठरूपाऽवगाहन-स्वभावैर्विकल्पैर्व्यावर्त्यभेदाऽऽरोपितभेदं प्रमाणफलभावमश्नुते। यदाह—"न हि वित्तिसत्तैव तद्वेदना युक्ता, तस्याः सर्वत्राऽविशेषादविशेषप्रसङ्गात्। तां तु सारूप्यमाविशत्स्वरूपवन्तं घटयेदिति। तत्सारूप्यतदुत्पत्तिभ्यां च विषयत्वेन नेन्द्रियादिषु तत्प्रसङ्गः। अर्थाऽऽहिताऽऽकारवेदनमेव चाऽर्थवेदनं ज्ञानाकाराश्च वर्त्तमाना इति वर्त्तमानताऽप्युपपन्नेति। यथाह—

भिन्नकालं कथं ग्राह्यमिति च्नेद् ग्राह्यतां विदुः।
हेतुत्वमेव तद् युक्तं ज्ञानाऽऽकाराऽऽर्पणक्षमम्॥ इति।

तथाप्युक्तं स्यादर्थवेदनमिति। तस्मात्साकारज्ञानगोचरोऽर्थ इति सौत्रान्तिकाः प्रपेदिरे।

तदिदमनुपपन्नम्। तथा हि। साकारं विज्ञानमर्थविषयमित्यनुभवाद्वच-वस्थाप्यतेऽनुमानाद्वा। न तावदनुभवः स्वाकारमात्रपर्यवसायी नीलमपरं गोचरयति। नीलमिति हि प्रतिभासो न पुनर्नीले इति। न च भिन्नं सद्वि-षयो भवितुमर्हतीत्युक्तम्।

स्यादेतत्। द्विविधो हि विषयः प्रमाणानां, ग्राह्योऽध्यवसेयश्च। तद्यथा प्रत्यक्षस्य ग्राह्यः क्षण एकोऽध्यवसेयश्च प्रवृत्तिविषयः सन्तानः। अन्यथाऽर्थक्रियार्थिनः प्रमाणमवर्त्तकं स्यात्। प्रवृत्तिविषयोपदर्शनं हि प्रवर्तकत्वं प्रापकत्वं च प्रमाणानाम्। न च ग्राह्यक्षण एव प्रवृत्तिविषयास्तस्य तदानीमतीतत्वात्। सन्तानस्तु स्यात्। न चाऽसौ ग्राह्य इत्यध्यवसेयत्व-मभ्युपेतव्यम्। तथाऽनुमानविकल्पस्यापि ग्राह्यं सामान्यमन्यव्यावृत्तिरूपम्। अध्यवसेयस्तु प्रवृत्तिविषयोऽर्थक्रियाक्षमः। प्रवृत्तिविषयाऽपेक्षं हि प्रामाण्यं तयोः। यथाह—"न ह्याभ्यामर्थं परिच्छिद्याऽध्यवसायप्रवर्तमानोऽर्थक्रियायां विसंवाद्यते" इति। तदेवं वाह्यमग्राह्यमध्यवसेयतया विषय इति तत्राऽध्य-वसायार्थाऽपरिज्ञानात् विकल्पोऽध्यवसायः। तत्रानुमानं विकल्परूपत्वात्त-

द्विषयं तु विकल्पजननादिति चेत् । ननु विकल्पोऽपि स्वाऽऽकारविषयत्वात्कथं वाह्यमध्यवसातुमर्हति ? यदि मन्येत न विकल्पानां विषयः स्वाकारोऽपि तु संवेदनस्य । प्रत्यक्षस्य हि विकल्पविषयो यो विकल्प्यते । न च स्वरूपं विकल्प्यते । तस्य सर्वतो व्यावृत्तस्याऽभिलापसंसर्गयोग्यत्वाऽभावाद्विशद-प्रतिभासत्वाच्च । तस्मादात्मन्यविकल्पाः स्वाऽवभासं वाह्यतया विकल्पयन्त-स्तत्र तत्र प्रवर्तयन्ति स्वव्यवहारार्थिनः । पारम्पर्येण च वाह्यादुत्पत्तेस्तत्प्रति-वन्धात्तत्प्राप्तेर्न विसंवादयन्ति लोकमिति । यदाह—'स्वप्रतिभासेऽनर्थे-ऽर्थाध्यवसायेन प्रवृत्ति'रिति । आह अनर्थे स्वभासमर्थमध्यवस्यतीति निर्वच-नीयमेतत् । नन्वर्थमारोपयन्तीति किं विकल्पस्य स्वरूपाऽनुभवाऽऽरोप उत व्यापारान्तरं स्वरूपाऽनुभवः ? न पूर्वः कल्पः । अनुभवसमारोपयोर्विक-ल्पाऽविकल्परूपतया द्रवकठिनवत्तादात्म्याऽनुपपत्तेः । व्यापारान्तरत्वे क्रमः समानकालता वा । न तावत् क्रमः । क्षणिकस्य विज्ञानस्य क्रमवद्व्यापारा-ऽयोगादक्षणिकवादिनामपि बुद्धिकर्मणोर्विरम्य व्यापाराऽयोगान्न क्रमवद्व्या-पारसम्भवः । अनुभवसमारोपौ समानकालाविति चेत् । भवतु समान-कालत्वं केवलमात्मभावाऽवस्थित एव वेद्यः । परभाववेदने स्वसंवेदनाऽनु-पपत्तेः । तथा चात्मज्ञानस्य ग्राह्यग्राहकाऽऽकाराऽनुभूतोऽर्थश्च समारोपितः । न त्वात्माऽवेद्यमाने समारोपितो[1] नार्थः समारोप्यमाणः प्रत्यक्षवेद्यः । स च समारोपः सतोऽर्थस्याऽसतो वा ग्रहणमेव । न च ज्ञानाऽतिरिक्तस्य ग्रहणं सम्भवतीत्युक्तम् । स्वप्रतिभासस्य बाह्याद्भेदाऽग्रहो वाह्यसमारोपस्ततो वाह्ये प्रवृत्तिरिति चेत् । स किं गृह्यमाणे वाह्ये न वा ? न तावद् गृह्यमाणे । उक्तं ह्येतत् न तद्ग्रहः सम्भवतीति । अगृह्यमाणे तु भेदाऽग्रहेण न प्रवृत्तिनियमः स्यात् । अन्येषामपि तदानीमग्रहणात् । अन्यत्रापि प्रवृत्ति-प्रसङ्गात् । तस्मान्नाऽनुभवव्यवस्थाप्यो नाप्यनुमानव्यवस्थाप्यः । तदपि प्रत्यक्षवदेव ग्रहीतुमध्यवसातुं वा वाह्यं नाऽर्हतीत्युक्तप्रायम् । न च तादृशो वाह्यप्रतिवन्धस्तदात्मा तत्कार्यो वा हेतुरप्यस्ति । नन्वयमस्ति । ये यस्मिन्सति कादाचित्कास्ते सर्वे तदतिरिक्तहेतुसापेक्षा यथा विच्छिन्नाऽऽगम-वचनप्रतिभासप्रत्ययाः सन्तानान्तरापेक्षाः । तथा च विवादाध्यासिताः सत्यप्यालयविज्ञानसन्ताने षडपि प्रवृत्ति[2]प्रत्यया इति स्वभावहेतुः । यश्चा-ऽसावालयविज्ञानसन्तानाऽतिरिक्तः सोऽर्थो वासनापरिपाकप्रत्ययकादाचित्क-त्वात् कदाचिदुत्पाद इति चेत् । नन्वेकसन्ततिपतितानामालयविज्ञानानां तत्तत्प्रवृत्तिविज्ञानजननशक्तिर्वासना । तस्याश्च स्वकार्यजननं प्रत्याभिमुख्यं परिपाकस्तस्य च प्रत्ययः स्वसन्तानवर्त्तिपूर्वक्षणः । सन्तानान्तरापेक्षाऽनभ्युपग-

---

१. समारोपितः इत्यारभ्य........स च इत्यन्तः पाठः का० पु० नास्ति ।
२. संतानेऽप्यप्रवृत्ति २ पु० पा० ।

मात्। तथा च सर्वेऽप्यालयसन्तानपतिताः परिपाकहेतवो, न वा कश्चिदपि। विशेषाऽभावात्। यो यथाऽभिप्रेतः परिपाकहेतुः क्षण आलयसन्तानपतितस्तथा सर्वोऽपीत्यविशेषः। क्षणभेदाच्छक्तिभेदस्तस्य च कादाचित्कत्वात्कार्यकादाचित्कत्वमिति चेत्। नन्वेवमेकस्यैव नीलविज्ञानजननसामर्थ्यं तत्प्रबोधजननसामर्थ्यं चेति क्षणान्तरस्य तन्न स्यात्। सत्त्वे वा कथं क्षणभेदाच्छक्तिभेदः? इत्यालयसन्तानवर्तिनः सर्वे समर्था इति समर्थहेतुसद्भावे वा कार्यक्षेपाऽनुपपत्तेः। स्वसन्तानमात्राऽधीनत्वे निषेध्यस्य कादाचित्कत्वस्य विरुद्धं सदातनत्वम्, तस्योपलब्ध्या च कादाचित्कत्वं निवर्त्तमानं हेत्वन्तरापेक्षत्वे व्यवतिष्ठत इति प्रतिबन्धसिद्धिः। न च सन्तानान्तरनिमित्तत्वं सर्वेषां प्रवृत्तिविज्ञानानां विज्ञानवादिभिरङ्गीकृतमपि तु कस्यचिदेवाऽऽगमवचनप्रतिभासस्य विज्ञानस्य। अपि च सन्तानान्तरनिमित्तत्वे तस्यापि सदा सन्निधानान्न कादाचित्कत्वं स्यात्। न खलु सान्द्रतरस्य सन्तानस्य कादाचित्कत्वस्य देशतो विप्रकर्षसम्भवो, विज्ञानवादे व्यतिरिक्तदेशाऽभावात् अमूर्त्तत्वाच्च विज्ञानानामदेशात्मकत्वात्। नापि कालतः। अपूर्वसत्त्वप्रादुर्भावाऽनभ्युपगमात्। तस्मादनुमानमस्ति[1] बाह्यसाधनमिति तदिदमनुपपन्नम्। स्वसन्तानमात्रप्रभवत्वेऽपि प्रत्ययकादाचित्कत्वोपपत्तौ सन्दिग्धविपक्षव्यावृत्तिकत्वेन हेतोरनैकान्तिकत्वात्। बाह्यनिमित्तत्वेऽपि कथं कदाचिन्नीलसंवेदनं, कदाचित्पीतसंवेदनं, बाह्यनीलसन्निधाने स्वकारणनिबन्धनः शक्तिभेदोऽपि भविष्यति। सन्तानिनो हि क्षणभेदहेतवस्ते च प्रतिकार्यं भिद्यन्त एव सन्ताने सन्निधानाऽसन्निधानाभ्यामिति चेत्। अथ पीतसन्निधाने किमिति नीलादिज्ञानं न भवति पीतज्ञानं वा भवति? सामर्थ्यादसामर्थ्याच्चेतरस्मिन्निति चेत्। कुतः पुनरयं सामर्थ्यभेदः? स्वहेतुभेदादिति चेत्। एवं तर्हि क्षणानामपि स्वकारणभेदनिबन्धनः शक्तिभेदो भविष्यति। सन्ताना हि क्षणभेदहेतवः प्रतिकार्यं भिद्यन्त एव। न च सन्तानो नाम कश्चिदेक उत्पादकः समस्ति, यदभेदात् क्षणा न भिद्येरन्। ननूक्तं न [2]क्षणभेदाऽभेदाभ्यां शक्तिभेदाऽभेदौ, भिन्नानां क्षणानामेकस्य सामर्थ्यस्योपलब्धेः। अन्यथैक एव पूर्वक्षणो नीलविज्ञानजननः स्यान्न क्षणान्तराणीति न नीलाकाराणि विज्ञानान्तराण्युत्पद्येरन्, यदि भिन्नानां नैकं सामर्थ्यम्। ननु नीलसन्तानिनामपि मिथो भिन्नानां नैकमस्ति नीलाकारादिसामर्थ्यमिति सन्निधानेऽपि नीलान्तरस्य न नीलविज्ञानमुत्पद्येत। सन्तानिभेदेऽपि शक्त्यभेद इति चेत्। क्षणभेदेन किमपराद्धं? येन तस्मिन्नपि न भवति। अथ सन्तानिभेदे शक्तिभेद एव, तथा च कार्यभेदः। न हि यदे-

१. अनुमा....इत्यारभ्य तदिदमित्यन्तः पाठः का० पु० नास्ति।
२. भेदाभेदाभ्यां शक्ति इति पाठः का० पु० नास्ति।

द्विषयं तु विकल्पजननादिति चेत् । ननु विकल्पोऽपि स्वाऽऽकारविषयत्वात्कथं वाह्यमध्यवसातुमर्हति ? यदि मन्येत न विकल्पानां विषयः स्वाकारोऽपि तु संवेदनस्य । प्रत्यक्षस्य हि विकल्पविषयो यो विकल्प्यते । न च स्वरूपं विकल्प्यते । तस्य सर्वतो व्यावृत्तस्याऽभिलापसंसर्गयोग्यत्वाऽभावाद्विशद-प्रतिभासत्वाच्च । तस्मादात्मन्यविकल्पाः स्वाऽवभासं वाह्यतया विकल्पयन्त-स्तत्र तत्र प्रवर्तयन्ति स्वव्यवहारार्थिनः । पारम्पर्येण च वाह्यादुत्पत्तेस्तत्प्रति-वन्धात्तत्प्राप्तेर्न विसंवादयन्ति लोकमिति । यदाह—'स्वप्रतिभासेऽनर्थे-ऽर्थाध्यवसायेन प्रवृत्ति'रिति । आह अनर्थे स्वभासमर्थमध्यवस्यतीति निर्वच-नीयमेतत् । नन्वर्थमारोपयन्तीति किं विकल्पस्य स्वरूपाऽनुभवाऽऽरोप उत व्यापारान्तरं स्वरूपाऽनुभवः ? न पूर्वः कल्पः । अनुभवसमारोपयोर्विक-ल्पाऽविकल्परूपतया द्रवकठिनवत्तादात्म्याऽनुपपत्तेः । व्यापारान्तरत्वे क्रमः समानकालता वा । न तावत् क्रमः । क्षणिकस्य विज्ञानस्य क्रमवद्व्यापारा-ऽयोगादक्षणिकवादिनामपि बुद्धिकर्मणोर्विरम्य व्यापाराऽयोगान्न क्रमवद्व्या-पारसम्भवः । अनुभवसमारोपौ समानकालाविति चेत् । भवतु समान-कालत्वं केवलमात्मभावाऽवस्थित एव वेद्यः । परभाववेदने स्वसंवेदनाऽनु-पपत्तेः । तथा चात्मज्ञानस्य ग्राह्यग्राहकाऽऽकाराऽनुभूतोऽर्थश्च समारोपितः । न त्वात्माऽवेद्यमाने समारोपितो[1] नार्थः समारोप्यमाणः प्रत्यक्षवेद्यः । स च समारोपः सतोऽर्थस्याऽसतो वा ग्रहणमेव । न च ज्ञानाऽतिरिक्तस्य ग्रहणं सम्भवतीत्युक्तम् । स्वप्रतिभासस्य बाह्याद्भेदाऽग्रहो वाह्यसमारोपस्ततो वाह्ये प्रवृत्तिरिति चेत् । स किं गृह्यमाणे वाह्ये न वा ? न तावद् गृह्यमाणे । उक्तं ह्येतत् न तद्ग्रहः सम्भवतीति । अगृह्यमाणे तु भेदाऽग्रहेण न प्रवृत्तिनियमः स्यात् । अन्येषामपि तदानीमग्रहणात् । अन्यत्रापि प्रवृत्ति-प्रसङ्गात् । तस्मान्नाऽनुभवव्यवस्थाप्यो नाप्यनुमानव्यवस्थाप्यः । तदपि प्रत्यक्षवदेव ग्रहीतुमध्यवसातुं वा वाह्यं नाऽर्हतीत्युक्तप्रायम् । न च तादृशो वाह्यप्रतिवन्धस्तदात्मा तत्कार्यो वा हेतुरप्यस्ति । नन्वयमस्ति । ये यस्मिन्सति कादाचित्कास्ते सर्वे तदतिरिक्तहेतुसापेक्षा यथा विच्छिन्नाऽऽगम-वचनप्रतिभासप्रत्ययाः सन्तानान्तरापेक्षाः । तथा च विवादाध्यासिताः सत्यप्यालयविज्ञानसन्ताने षडपि प्रवृत्ति[2]प्रत्यया इति स्वभावहेतुः । यश्चा-ऽसावालयविज्ञानसन्तानाऽतिरिक्तः सोऽर्थो वासनापरिपाकप्रत्ययकादाचित्क-त्वात् कदाचिदुत्पाद इति चेत् । नन्वेकसन्ततिपतितानामालयविज्ञानानां तत्तत्प्रवृत्तिविज्ञानजननशक्तिर्वासना । तस्याश्च स्वकार्यजननं प्रत्याभिमुख्यं परिपाकस्तस्य च प्रत्ययः स्वसन्तानवर्त्तिपूर्वक्षणः । सन्तानान्तरापेक्षाऽनभ्युपग-

---

१. समारोपितः इत्यारभ्य........स च इत्यन्तः पाठः का० पु० नास्ति ।
२. संतानेऽप्यप्रवृत्ति २ पु० पा० ।

मात्। तथा च सर्वेऽप्यालयसन्तानपतिताः परिपाकहेतवो, न वा कश्चिदपि। विशेषाऽभावात्। यो यथाऽभिप्रेतः परिपाकहेतुः क्षण आलयसन्तानपतितस्तथा सर्वेऽप्यविशेषः। क्षणभेदाच्छक्तिभेदस्तस्य च कादाचित्कत्वात्कार्यकादाचित्कत्वमिति चेत्। नन्वेवमेकस्यैव नीलविज्ञानजननसामर्थ्यं तत्प्रबोधजननसामर्थ्यं चेति क्षणान्तरस्य तन्न स्यात्। सत्त्वे वा कथं क्षणभेदाच्छक्तिभेदः? इत्यालयसन्तानवर्तिनः सर्वे समर्था इति समर्थहेतुसद्भावे वा कार्यक्षेपाऽनुपपत्तेः। स्वसन्तानमात्राऽधीनत्वे निषेध्यस्य कादाचित्कत्वस्य विरुद्धं सदातनत्वम्, तस्योपलब्ध्या च कादाचित्कत्वं निवर्त्तमानं हेत्वन्तरापेक्षत्वे व्यवतिष्ठत इति प्रतिबन्धसिद्धिः। न च सन्तानान्तरनिमित्तत्वं सर्वेषां प्रवृत्तिविज्ञानानां विज्ञानवादिभिरङ्गीकृतमपि तु कस्यचिदेवाऽऽगमवचनप्रतिभासस्य विज्ञानस्य। अपि च सन्तानान्तरनिमित्तत्वे तस्यापि सदा सन्निधानान्न कादाचित्कत्वं स्यात्। न खलु सान्द्रतरस्य सन्तानस्य कादाचित्कत्वस्य देशतो विप्रकर्षसम्भवो, विज्ञानवादे व्यतिरिक्तदेशाऽभावात् अमूर्त्तत्वाच्च विज्ञानानामदेशात्मकत्वात्। नापि कालतः। अपूर्वसत्त्वप्रादुर्भावाऽनभ्युपगमात्। तस्मादनुमानमस्ति[1] बाह्यसाधनमिति तदिदमनुपपन्नम्। स्वसन्तानमात्रप्रभवत्वेऽपि प्रत्ययकादाचित्कत्वोपपत्तौ सन्दिग्धविपक्षव्यावृत्तिकत्वेन हेतोरनैकान्तिकत्वात्। बाह्यनिमित्तत्वेऽपि कथं कदाचिन्नीलसंवेदनं, कदाचित्पीतसंवेदनं, बाह्यनीलसन्निधाने स्वकारणनिबन्धनः शक्तिभेदोऽपि भविष्यति। सन्तानिनो हि क्षणभेदहेतवस्ते च प्रतिकार्यं भिद्यन्त एव सन्ताने सन्निधानाऽसन्निधानाभ्यामिति चेत्। अथ पीतसन्निधाने किमिति नीलादिज्ञानं न भवति पीतज्ञानं वा भवति? सामर्थ्यादसामर्थ्याच्चेतरस्मिन्निति चेत्। कुतः पुनरयं सामर्थ्यभेदः? स्वहेतुभेदादिति चेत्। एवं तर्हि क्षणानामपि स्वकारणभेदनिबन्धनः शक्तिभेदो भविष्यति। सन्ताना हि क्षणभेदहेतवः प्रतिकार्यं भिद्यन्त एव। न च सन्तानो नाम कश्चिदेक उत्पादकः समस्ति, यदभेदात् क्षणा न भिद्येरन्। ननूक्तं न [2]क्षणभेदाऽभेदाभ्यां शक्तिभेदाऽभेदौ, भिन्नानां क्षणानामेकस्य सामर्थ्यस्योपलब्धेः। अन्यथैक एव पूर्वक्षणो नीलविज्ञानजननः स्यान्न क्षणान्तराणीति न नीलाकाराणि विज्ञानान्तराण्युत्पद्येरन्, यदि भिन्नानां नैकं सामर्थ्यम्। ननु नीलसन्तानिनामपि मिथो भिन्नानां नैकमस्ति नीलाकारादिसामर्थ्यमिति सन्निधानेऽपि नीलान्तरस्य न नीलविज्ञानमुत्पद्येत। सन्तानिभेदेऽपि शक्त्यभेद इति चेत्। क्षणभेदेन किमपराद्धं? येन तस्मिन्नपि न भवति। अथ सन्तानिभेदे शक्तिभेद एव, तथा च कार्यभेदः। न हि यदे-

१. अनुमा....इत्यारभ्य तदिदमित्यन्तः पाठः का० पु० नास्ति।
२. भेदाभेदाभ्यां शक्ति इति पाठः का० पु० नास्ति।

निरालम्बनं तु ज्ञानमयुक्तमेव ।

कस्मिन्नीलाकारं ज्ञानं ज्ञानान्तरमपि नीलाकारं तदेव भवितुमर्हति । तदस्माकं क्षणभेदेऽपि समानम् । अन्यत्राऽभिनिवेशात् । अपि चोत्पत्तिसारूप्याभ्यां विषयत्वे चक्षुरालोकसंस्काराणामपि यथाक्रमं रूपग्रहणं प्रति नियमस्पृष्टताज्ञानजनकत्वसारूप्यैस्तदुत्पत्त्या च नीलवद्ग्रहणप्रसङ्गः । अत्यन्तसारूप्याद्वा विषयत्वे नीलविज्ञानसमनन्तरप्रत्ययस्य नीलार्थादपि सदृशतरस्य नीलज्ञानविषयत्वाऽऽपत्तिः । सतोरप्युत्पत्तिसारूप्ययोरध्यवसायाद्विषयभावः स चार्थ एव नान्यत्रेति चेत् । न । उक्तोत्तरत्वात् । निवेदितमेतदधस्तात् । यथा 'नाऽध्यवसायगोचरो वाह्य' इति ।

तदनेन प्रवन्धेन वेद्यत्वलक्षणो हेतुः समर्थितो विज्ञानवादिनाम् । स चैवं प्रयोगमारोहति । यद्वेद्यते येन वेदनेन ततस्तन्न भिद्यते यथा ज्ञानस्याऽऽत्मा, वेद्यन्ते च नीलादय इति विरुद्धव्याप्तोपलब्धिः । निषेध्यभेदविरुद्धः खल्वभेदस्तेन व्याप्तं वेद्यत्वं भिन्नस्य साऽऽकारनिराकारविज्ञानप्रवेदनीयस्याऽनुपपत्तेरिति प्रपञ्चितमधस्तात् । तस्माद्विरुद्धाऽभेदव्याप्तवेद्यत्वोपलब्धिरूपाऽनुपलब्धिरेव भेदाऽभावसाधनीति[1] स्थिता बुद्धीनां वाह्याऽनालम्वनत्वसिद्धिः ।

अतश्चैतदेवं सहोपलम्भनियमो ज्ञानस्यार्थेन । तथा हि । यद्येन नियतसहोपलम्भनं तत्ततो व्यतिरिच्यते यथैकस्माच्चन्द्राद् द्वितीयश्चन्द्रः । नियतसहोपलम्भनज्ञानमर्थेनेति व्यापकविरुद्धोपलब्धिः । अभेदो हि सहोपलम्भनियमेन व्याप्तः । न खलु नीलपीते भिन्ने नियमेन सहोपलभ्येते । तद्विरुद्धश्चाऽयं नियमः स्वविरुद्धमनियमं निवर्त्तयंस्तद्व्याप्तं भेदमपि निवर्त्तयति । तद्व्यापकविरुद्धोपलब्ध्या भेदाऽभावसिद्धिः । यथाह 'सहोपलम्भनियमादभेदो नीलतद्धियोरि'ति । कथं तर्हि ज्ञानात्मकात्प्रतिपत्तुरर्थस्य भेदबुद्धिर्नीलमेतदिति ? वलवद्वेद्यत्वसहोपलम्भनियमाऽनुमानेन वाधिता भ्रान्तिरेव । यदाह 'भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवद्वयम्' इति ।

अपि च यः प्रत्ययः स सर्वो वाह्याऽनालम्वनः । यथा स्वप्नप्रत्ययः, प्रत्ययश्च विवादाध्यासित इति स्वभावहेतुः । निरालम्वनं विज्ञानं तन्मध्यपातिनी च प्रतिभेति सापि तथेत्यत आह—निरालम्वनं तु ज्ञानमयुक्तमेव । इदमत्राऽऽकूतम् । नैतन्निरालम्व[2]नत्वे प्रमाणं भवितुमर्हति । तथा हि । किमनुभवसिद्धस्य नीलादेर्वेद्यस्य तत्त्वं हेतुः क्रियेत, अहो स्विदन्यस्य ? तत्र यद्यनुभवसिद्धस्य ततोऽनहङ्कारास्पदमसितादिरूपं स्थूलं नीलादिविच्छिन्नं वेद्यमनुभूयते, नास्याऽऽन्तरज्ञानस्वभावता शक्यसाधना । यथाहाचार्यः 'स

१. भावं साधयतीति २ पु० पा० । २. त्वं पु० पा० ।

वहिर्देशसम्वन्धः प्रत्यक्षमुपलभ्यते' इति। अथाऽन्यस्य। तस्याऽसिद्धं वेद्यत्वम्। ज्ञानाकारत्वे चास्य न काचित्क्षतिः। यद्युच्येत नाऽनुभूतत्वमात्रस्य हेतुत्वमपि त्वनुभूताऽवसितत्वस्य। अवसायश्च स्वभावत एकव्यावृत्तिनिष्ठरूपाऽवगाही न मनागपि व्यावृत्त्यन्तरमवगमयति। मा भूदिह सदभिलापविकल्पपर्यायिता सर्वेषां गवादिशब्दविकल्पानाम्। व्यावर्त्त्यभेदाऽनुविधायिनश्च व्यावृत्तिभेदाः। तदिहाऽवेद्यव्यावृत्तिकृतवेद्यत्वाऽवगाही विकल्पो नाऽवाह्यव्यावृत्तिकृतं वाह्यत्वं विगाहत इति यदेव किंचित्पांसुलपादकेन हालिकेनापि नीलादेर्वेद्यत्वमनुभूतावसितं तद् वाह्यत्वनिरासाय समर्थमिति न विरोधः। तदसत्। न खल्वेकाऽवसायागोचरतया विरोधमापादयामो, ऽपि तु यद्वाह्यत्वं स्थूलत्वं चाऽनुभूतावसितं नीलादेस्ताभ्यां विरोधी। तथा हि। ज्ञानकारत्वे नीलस्य नानादिग्देशव्यापिता स्थूलत्वं विच्छिन्नदेशता च वाह्यत्वं न स्याताम्। न खल्वेकत्वेन ग्रहणाऽग्रहणे एव परं विरुध्येते येन विज्ञानदेशे नीलादेः स्थूलस्य ग्रहणादेवाऽविरोधः स्यादपि तु तद्देशत्वाऽतद्देशत्वेऽपि। तथा हि। भिन्नदेशयोरपि परस्परपरिहारेण स्थितिरस्ति विच्छिन्नाऽवभासज्ञानकारणशक्तिर्भिभिन्नदेशत्वम्। तत्र पूर्वदिग्भागस्थितान्नीलाद्विच्छिन्नमवभासते प्रत्यक्षेण, न तु परस्परात्मकमनुभवाऽनुसारिणा निश्चयेन यथाऽवसीयते तथाऽनवसायात्परस्परविच्छेदेन चाऽवसायात्। दृश्यमानं चाऽनुभवाऽनुसारिणा निश्चयेन यथाऽवसीयते तथैव सदसति वाधके। यदि च पूर्वदिक्कमितरदिक्कं गृह्येत नैव दिग्भिन्नभावदर्शनं भवेदस्ति च तत्। तस्माद्दिगन्तरसन्निविष्टं रूपमितरदिक्कं न गृह्यते। तथा सति यथा नीले पीतमदृष्टमिति नीलपरिच्छेदे तदभावो व्यवच्छिद्यते तद्वच्च पीतादिवत्पूर्वदिक्के रूपे तदितरदिक्कं रूपमदृष्टमिति पूर्वदिक्करूपपरिच्छेदे तदभावो व्यवच्छिद्यते। इतरथा तादूप्यमेव न परिच्छिन्नं स्यात्। तदभाववच्च पूर्वदिक्काऽभाववन्तस्तदितरदिग्भागवर्त्तिनः स्वभावाद् व्यवच्छेत्तव्याः नीलपरिच्छेदेनेव नीलाऽभाववन्तः पीतादय इति सिद्धस्तद्देशत्वाऽतद्देशत्वयोः परस्परपरिहारस्थितिलक्षणो विरोधः। यत्र चैवं विध्योर्विरोधः तत्र मानाऽभेदो यथा नीलपीतयोः। एवंविधश्चाऽनुभूयमाने नीले स्थूले विरोध इति व्यापकविरुद्धोपलब्धिः। प्रतिषेद्धव्यः खलु भेदो विरोधाऽभावेन व्याप्तस्तद्विरुद्धश्च विरोध इति। तेन यावदुक्तं भवति नीलं वा नेति तावदुक्तं भवति नीलं स्थूलमिति। न च नानैकज्ञानात्मेति युक्तम्। एकत्वस्य नानात्वविरोधात्। न च नानाविज्ञानानीति साम्प्रतम्। प्रत्येकं स्वाऽवभासमात्राऽवसायित्वे नानाविज्ञानानां स्थूलाभासाऽनुभवाऽभाव[1]प्रसङ्गात्। न च नानाकाराऽनुभववासनाजन्मा विकल्प-

१. स्थूलाऽभाव. २ पु० पा०।

स्तदनुभवाकारसङ्कलनात्मकस्थूलाकारभाग्भवितुमर्हति । तस्याप्येकत्वेऽनुभववत्तदाभासत्वाऽनुपपत्तेः । नानात्वे वा स्थूलाभासाऽभावप्रसङ्गात् । विकल्पविषयत्वेन च विशदाभसताऽनुपपत्तेः । यदाह । 'न विकल्पानुवन्धस्य स्पष्टार्थप्रतिभासते'ति । न चाऽनुभूतं स्थूलत्वं येन तदुपाधिर्विकल्पे विस्पष्टाभासः[1] स्यात् । तस्मादर्थे विज्ञाने च स्थूलत्वाऽनुपपत्तेरसदेतदभ्युपगन्तव्यम् । न च तद्विज्ञानं सम्भवति । सदसतोरेकत्वाऽनुपपत्तेः । एतेनेदमिति विच्छिन्नाऽवभासो व्याख्यातः । तस्मादनिच्छताऽपि विज्ञानानां मनोवेद्यत्वमभ्युपगन्तव्यम् । तथा च वेद्यत्वमभेदस्य न व्याप्यमिति विरुद्धव्यापकोपलब्धिरसिद्धा नाऽभेदोपस्थापननेन भेदं निषेद्धुमर्हति । ननु न परप्रतिवन्धमात्रादर्थसिद्धिः, उक्तं च 'साकारमनाकारं च विज्ञानमनात्मभूतवेदनासमर्थ'मिति । तत्किमिदानीं समर्थनीय एव स्थूलाऽनुभवो नास्ति वा ? न तावन्नास्ति, नीलवत्तस्याप्यनुभवात् । तदपह्नवे चाऽनिर्मूलतया नीलाऽनुभवस्याऽपह्नवप्रसङ्गः । तथा चास्य कुतो भेदो वा ? अथास्ति न चाऽसमर्थनीयः । न च ज्ञानाऽऽकारः । का तर्हि तस्य समर्थना ? अत एवाऽनात्मनः प्रकाशनविज्ञानं स्वकारणाऽऽसादिताऽदृष्टान्तसिद्धस्वभावभेदं न कथन्तास्पदं भवितुमर्हति । न खल्वनुभवो दृष्टान्तमपेक्षते । मा भूद्भूम्यादावसाधारणगन्धादिगुणाऽननुभवनम् । कः पुनरस्याऽनात्मसम्वन्ध ? इति चेत् । अथाऽन्यत्रापि सम्वन्धस्य कः सम्वन्धिभ्यां सम्वन्धः ? रूपेणैव स तथेति न सम्वन्ध्यन्तरमपेक्षते । न जातु सम्वन्धिनावन्तरेणाऽसौ निरूप्यते । न च जातु तस्मिन्सति सम्वन्धिनावसम्वन्धिनौ भवतस्तेन सम्बन्धिस[2]म्वन्धनपरमार्थः । सम्बन्धसम्वन्धिनौ तथोत्पन्नौ सम्वन्ध इति चेत् । ननु स्थूलाऽनुभवोऽपि न स्थूलमन्तरेण निरूप्यते । न च तस्मिन्सति स्थूलमननुभूतं भवतीति रूपेणैव सोऽपि स्थूलप्रकाशनपरमार्थः सम्वन्ध इव वा तथोत्पन्नौ सम्वन्धिनाविव वा सम्वन्धनपरमार्थौ । सेय समर्थना । यद्येवमियमनुभवमात्रस्यैवाऽनात्मग्राहितामापादयति, न हि नीलाद्यनुभवेऽपि नीलादिमन्तरेण निरूप्यते । न च तस्मिन्सति नीलादयो नाऽनुभूता इति स्थूलाऽनुभववदनात्मनो नीलादेरनुभवः स्वभावत एव न सम्वन्धान्तरेणेति तत्त्वम् । अतदात्मनोऽपि वेद्यत्वोपपत्तेरनैकान्तिकं वेद्यत्वम् । एवं सहोपलम्भनियमोऽप्यनैकान्तिकः । स्वकारणाऽधीनो हि तादृशः स्वभावभेदो विज्ञानस्य येनात्माऽनात्मनोरसावेक एवोपलम्भः । न च स्वभावः कथन्तागोचर इत्युक्तम् । एतेनैव प्रत्ययत्वमपि प्रत्युक्तम् । स्वप्नादिप्रत्ययानां च समारोपितवाह्यविषयत्वात्साध्यविहीनत्वं दृष्टान्तस्य । तथा च विरुद्धो हेतुः ।

---

१. विस्पष्टाकृता स्यात् २ पु० पा० । २. सम्बन्धानपरमार्थः पु० पा० ।

अपि चाऽसिद्धः सहोपलम्भः। न हि य एव नीलस्योपलम्भः स एव तदुपलम्भस्येति नियमः समस्ति। न खल्वयमनुभवगोचरः। तथा हि। विस्फा[1]रिताक्षः प्रतिपत्ता नीलमिदमिति पश्यन्न तदैव तदनुभवमपि पश्यति। नीलप्रवणो हि तदनुभविता नाऽनु भ[2]वप्रवणोऽनुभूयमानोपाधितयाऽनुभवमपि परिच्छिनत्ति। न खल्वनुभवा[3]नवभासे नुभूयत इति भवति। न ह्यस्ति सम्भवो दण्डो न गृह्यते गृह्यते च दण्डीति। तस्माद्विशेषणतयाऽनुभवग्रहणेऽप्यनुभूयमान-प्रवणोऽनुभवितेति सिद्धः सहोपलम्भनियम इति चेत्। नैतत्। न ह्यनुभूयते नीलमित्यनुभवोऽपि तु नीलमिति। असत्यनुभवप्रकाशे विषया न प्रकाशेरन्। तदधीनं हि प्रकाशं तेषाम्। न खलु न लीनो नीलाऽनुभवस्तानलमवभा[4]सयितुम्। न ह्यनुभवादन्यो विषयाऽवभासः, यमयमनवभासमानोऽपीन्द्रियादिवशादधीतो-ऽपि तु परप्रकाशनपरमार्थोऽनुभव एव तत्प्रकाशः। तथा च यदि निलीयते तन्निलीनस्वभावत्वाद्विषयानपि नाऽऽभासयेदिति नाऽनुभवो न विषया भासन्त इत्यायातमान्ध्यमशेषस्य जगतः। तस्मादनुभवप्रकाशाऽयत्तप्रकाशत्व-मेषितव्यं विषयाणाम्। अपि चैकस्मिन्नर्थे स्फुटाऽस्फुटाऽवभासो युगपदुपलभ्यते प्रतिपत्तॄणाम्। न चाऽसावर्थधर्मः स्फुटत्वादिरेकस्मिन्युगपद्विरुद्धधर्मसमा-वेशाऽसम्भवात्। विज्ञानभेदस्तूपपद्यत इति विज्ञानस्य धर्मः। तथा च तज्ज्ञान-मनुभवसिद्धम्।

तदेवमनुभवादेव स्वसंवेदनसिद्धौ यो नाम स्वसिद्धान्ताभ्यासाऽऽहित-व्यामोहो विप्रतिपद्यते तं प्रत्यनुमानमुपन्यस्यते। यद्यत्प्रकाशाऽऽयत्तप्रकाशं तत्तस्मिन्प्रकाशमान एव प्रकाशते, यथा दण्डप्रकाशाऽऽयत्तप्रकाशो दण्डी। प्रत्ययप्रकाशायत्तप्रकाशश्च प्रत्येतव्यो रूपादिरिति स्वभावहेतुः। न च प्रत्ययप्रकाशाऽऽयत्तप्रकाशत्वं रूपादीनामसिद्धम्। उक्तं हि 'तदनायत्तत्वे प्राप्तमान्ध्यमेव जगतोऽशेषस्येति। न च स्वसंवेदने स्वात्मनि वृत्तिविरोधः। न हि संवेदनस्य स्वरूपादन्या वृत्तिरस्ति। यतः स्वात्मनि कर्तृकर्मभावो विरुध्येत। संवेदनमेव त्वपराधीनप्रकाशमाविर्भूतस्वभावमात्मसंवेदनमाचक्षते। न च स्वभावेन भावो विरुध्यते। तस्मादात्मसंवेदनसिद्धेः सिद्धः सहोपलम्भ-नियम इति।

तदनुपपन्नम्। हेत्वसिद्धेः। न हि नीलादयोऽनुभवप्रकाशाऽऽयत्त-प्रकाशाः किं त्वनुभवाऽधीनप्रकाशाः। एवं चेन्नेत्रादिभिरनेकान्तः। किं पुनर्नीलादीनामनुभवे आयत्तता? नन्वनुभवप्रकाशेऽपि किमायतते? यदि

---

१. विस्फुरिताक्षः पु० पा०। २. प्रवणे पु० पा०।
३. अनुभवावसाने पु० पा०। ४. भासतुम् पु० पा०।

विशिनष्टीति सातत्यप्रसङ्गः। न ब्रूमोऽङ्गशक्तिरधिकारं विशिनष्टीति, किं त्वङ्गशक्त्यपेक्ष एवाऽधिकार इति। तादृशस्यैव तु कस्यचिदङ्गस्याऽसंभवे न प्रयोगो निवर्त्तत इति। वैगुण्याच्चापि फलेऽधिकारहेतुरेव नास्तीत्युक्तम्।

कोऽयमसंभवः? तदुपसंहारासामर्थ्यम्, न तर्ह्यधिकृतस्तद्विशेषणत्वात्तस्य। अथाऽनुपसंहारोऽनङ्गत्वमेव। कादाचित्कमसामर्थ्यमसंभवो न तेनाऽधि-

अत्रैकदेशी गूढाऽभिप्रायः प्रथमं पक्षमाश्रित्याह—न ब्रूमोऽङ्गशक्तिर-धिकारं विशिनष्टीति, किं त्वङ्गशक्त्यपेक्ष एवाऽधिकार इति। किमिति तर्ह्यङ्गवैकल्ये नैमित्तिकं प्रयुज्यते? इत्याशङ्क्याह। तादृशस्यैव ह्यधिकारिणः कस्यचिदङ्गस्याऽसम्भवेऽपि न प्रयोगो निवर्त्तत इति सामर्थ्यस्याऽधिकारि-विशेषणस्य भावार्थमात्रस्याऽधिकारिविषयस्य च तदानीमपि नैमित्तिकेषु भावादित्यर्थः।

काम्ये तर्हि हीनाङ्गे प्रयुज्यमाने समर्थस्याधिकाराऽतिक्रान्तिः प्रसज्येतेत्याशङ्क्याह—वैगुण्याच्चापि फलेऽधिकारहेतुरेव नास्तीत्युक्तम्। अयमर्थः। वैगुण्ये सत्यविद्यमानफलत्वं काम्ये करणत्वमिति यावत्। करणीभूतस्य भावार्थस्य विषयत्वं वैगुण्ये चाऽकरणत्वे विषयत्वाऽभावा[1]-दधिकाराऽवगमविलय इति नाऽननुष्ठानेऽधिकाराऽतिक्रान्तिरित्युक्तं कार्य-निष्ठत्वात्काम्यस्येत्यनेन। तदेतद्विकल्प्य दूषयति—कोयमसम्भवो यदि तदुपसंहाराऽसामर्थ्यं न तर्ह्यधिकृतः, तद्विशेषणत्वात्तस्य। अयमर्थः। यद्यङ्गो-पसंहाराऽसामर्थ्यमङ्गस्याऽसम्भवस्तत्कारणत्वेनोपचारादुच्यते, तदा सामर्थ्यस्या-धिकारिविशेषणस्याऽसम्भवादनधिकृतः किमिति नैमित्तिकमङ्गविकलं प्रयुञ्जीत। अथाऽनुपसंहारोऽनङ्गमेव[2]। अथ समर्थोऽपि नोपसंहरति किंचिदङ्गमनुपसंहार एवांऽङ्गस्याऽभाव उच्यते तदा न नूनमेतदङ्गम्, न ह्यस्ति सम्भवो यद्विद्वान् समर्थः किञ्चिदङ्गमपहाय प्रधानं प्रयुङ्क्त इति सेयमुभयतस्पाशा रज्जुः।

साम्प्रतमेकदेशी स्वाऽभिप्रायमाविष्करोति—कादाचित्कमसामर्थ्यम-सम्भवो न तेनाऽधिकारात्पर्युदासो द्रव्याप्रतिसमाधेयाऽङ्गवैकल्य इव। इदमत्रा-कूतम्। द्वैधं खल्विह पुमांसो व्यवस्थिताः। केचिदसमर्थाः केचिच्च तिरोहि-तसामर्थ्याः। तत्र ये तावदसमर्था अन्धपङ्ग्वादयः शूद्रादयश्च तेषामनधिकार एव, सामर्थ्यस्याऽधिकृतविशेषणस्याऽभावात्। येऽपि समर्थाः कुतश्चिन्नि-

१. विषयाभावात् पु० पा०। २. अनङ्गत्वमेव २ पु० पा०।

कारात्पर्य्युदासो द्रव्याप्रतिसन्धेयाङ्गवैकल्यवत् । सत्यम्, न शूद्रवदेकान्ततो न त्वधिकारहेतुविगमेऽधिकारो न निवर्त्तते वीतायामिव फलेच्छायां

मितादभिभूतसामर्थ्यास्तेषामधिकृतविशेषणस्य सामर्थ्यस्य सद्भावात्कोऽधिकारविलयहेतुः ? न खल्वभिभूतसामर्थ्यो भवत्यसमर्थः । न च कार्यव्यवसेयत्वात्सामर्थ्यस्य कार्याऽभावे तदप्रमाणमिति वाच्यम् । प्रतीतचरसामर्थ्यस्य कार्यकारिणः पश्चादकरणे पुनश्च करणे किं सामर्थ्यविनाशोत्पादौ, आहोस्वित्तिरोभावाऽऽविर्भावौ ? इति विषये परैव कल्पना ज्यायसी, लाघवात्, न पूर्वा । तदा हि समर्थ्यरूपधर्मकल्पनायां गौरवप्रसङ्गः । ततश्च सामर्थ्यस्याऽधिकृतविशेषणस्य विद्यमानत्वादुपक्रमे प्रयोगस्य साध्वेव चाऽधिकृत इति यथाशक्ति नैमित्तिकमारभेत समापयेच्चेति । अत्रैव निदर्शनमाह—द्रव्याऽप्रतिसन्धेयाङ्गवैकल्यवत् ।

तद्दूषयति—सत्यं न शूद्रवदेकान्ततो न त्वस्याऽधिकारहेतुविगमेऽधिकारो न निवर्त्तते । अयमत्राऽभिसन्धिः । इदमत्र भवान् व्याचष्टां यदेतत्सामर्थ्यमधिकृतविशेषणमुच्यते तत् किं साक्षात्सामर्थ्यस्य श्रुतेराहोस्विदङ्गोपदेशबलात् ? तत्र तावत्प्रथमः कल्पोऽनुपलब्धिनिराकृत एव । द्वितीये तु कल्पेऽङ्गोपदेशसामर्थ्याद्यथाविनियोगमधिकारव्यवस्थितेरयमधिकारविधिः साङ्गस्य प्रधानस्याऽनुष्ठानमाक्षिपन् कर्त्तारमन्तरेण तदनुपपत्तेः कर्त्तारमाक्षिपति । न चाऽसामर्थ्यस्य कर्तृत्वं कारकविशेषस्य तद्भावाच्छक्तिमतश्च कारकत्वात् । क्रियानिमित्तं हि कारकं, निमितं च नाम तदुच्यते यस्मिन् सति नैमित्तिकं भवत्येवेत्युपरिष्टाद्वक्ष्यते । न च द्रव्यस्वरूपमात्रे सति क्रिया भवत्येव । तस्माच्छक्तिमद्रूपकारकत्वाऽध्यवसानम् । यथा न द्रव्यमात्रं कारकं तथा न शक्तिमदपि । अभिभूतशक्तेरपि शक्तिमतः क्रियाया अनुपजननात् । ततश्चोद्भूतशक्तेरेव सहकारिसमवधानशालिनः कर्तृत्वं कारकत्वं चेति रमणीयम् । न चाऽधिकारमन्तरेण कर्तृत्वं न च नियोज्यमन्तरेणाऽधिकार इति तदाविर्भूतसामर्थ्यं कर्तृताप्रणाडिकया नियोज्यताऽवस्थामुपगतमनुपादेयं सन्नियोज्यविशेषणतामनुभवति । यथा चाऽसमर्थवदभिभूतसामर्थ्योऽप्यनियोज्यो नाऽधिकृतश्च । तदुक्तं 'न त्वस्याऽधिकारहेतुत्वविगमेऽधिकारो न निवर्त्तत' इति । न सामर्थ्यमात्रमनुष्ठानाऽनुपयोगि सदप्यधिकारमनुवर्त्तयति, किं तर्हि यदनुष्ठानहेतुरुद्भवविशिष्टम्, तस्यैवाऽधिकारहेतुत्वात् । तच्चेद्विगतमधिकारोऽपि निवर्त्ततएवेति न कस्यचिदङ्गस्योपसंहारसामर्थ्ये तिरोभावेऽप्यप्रयुञ्जानस्य नैमित्तिकाऽधिकाराऽतिक्रान्तिरित्यर्थः । अपि च जातेष्टौ भवतां संवलिताऽधिकारपक्षे जन्मवतः

कामिनः। अन्यथाऽधिकृतस्य समर्थस्य स्वर्गकामस्य कादाचित्काङ्ग-

पुत्रस्येन्द्रियादिकामस्य पितुरधिकारादितरकाम्यवत्करणीभूतस्यैव भावार्थस्य विषयभावात्तन्मात्रविषयत्वे काम्यत्वाऽनुपपत्तेर्नैमित्तिकस्य च करणीभूत-भावार्थविषयत्वेऽप्यविरोधात् यथाशक्तिप्रयोगाऽनुपपत्तिरित्यास्तां तावत्।

अथोच्येत अधिकारांऽवगमः प्रवृत्तिहेतुत्वात्प्रवृत्तेः पूर्वमुपयुज्यते, न प्रवृत्तावुपजातायाम्, न जातूपजनितकुम्भः कुम्भकारः कुम्भकरणाय घटते। तदुद्भूतसाङ्गप्रधानकरणसामर्थ्योऽधिकृतः सन्यदि कुतश्चित्प्रमादतोऽङ्गैकदेशे न स्वसामर्थ्यमुत्पश्यति तथापि तदाऽनधिकृतो न विरन्तुमर्हतीत्यत आह—वीतायामिव फलेच्छायां कामिनः। इदमत्राकूतम्। अस्ति हि किंचिन्निमित्तिकारणमपि यदुपजनितकार्यं निवर्त्तमानं कार्यमपि निवर्त्तयति। यथाऽपेक्षाबुद्धिर्द्वित्वसंख्यानिमित्तमुत्पादितद्वित्वा निवर्त्तमाना द्वित्वमपि निवर्त्तयति। समवायस्य समवायिकारणेषु सर्वत्र प्रायेणेयमेव गतिः। तदिहापि स्वर्गकामः प्रवृत्तोऽप्युपरतकामो नाऽधिकारी केवलं शिष्टविगर्हणभियाऽनधिकृतोऽपि कर्म समापयति। तथा निमित्तवानपि तिरोहितसामर्थ्योऽसन्नधिकारीत्यकुर्वन्नाधिकारमतिक्रामेत्। शिष्टगर्हणभयात्तु समापनं काम्येऽपि समानमिति न नैमित्तिकस्य विरोधायाऽलमिति।

यदि च समर्थस्य प्रवृत्तस्य पश्चात्सामर्थ्याऽभिभवेन प्रवृत्त्युपरमेऽधिकाराऽतिक्रान्तिर्नैमित्तिके काम्येऽपि[1] प्रसज्येतेत्याह—अन्यथाऽधिकृतस्य समर्थस्य स्वर्गकामस्य कादाचित्काऽङ्गवैकल्ये[2] फलाऽनुत्पत्तावधिकाराऽतिक्रान्तिः स्यात्। ये पुनराहुः। एकाङ्गवैकल्येऽपि प्रयोगस्य प्रत्यभिज्ञानात्प्रवृत्तस्यापि नाऽधिकारविगमः, न खलु भग्नशृङ्गो गौरिति। तान् प्रति काम्येऽपि समानमित्युत्तरम्। प्रसिद्धतरत्वाच्च तदुपेक्ष्य दूषणान्तरमाह—अप्राप्तकालं चाऽकुर्वतोऽधिकाराऽतिक्रान्तिः स्यादिति चेनाऽनुपज्यते। अप्राप्तकालं च पञ्चम्यामिष्टिप्रयोगमकुर्वतोऽधिकाराऽतिक्रान्तिर्भवेदित्यर्थः। अथापि स्यात् किमित्येवमप्राप्तकालमननुतिष्ठन्नधिकारमतिक्रामति। न हि निमित्तानन्तरमेव नैमित्तिकं कर्त्तव्यमिति प्रमाणमस्ति, किं तर्हि निमित्ते सतीति सत्तामात्रमवगम्यते। शास्त्रान्मीमांसित्वा व्यवस्थापितमिदं हि जातेष्टौ। एवं हि श्रूयते। 'वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते' इति। तत्र संशयः किं पुत्रजन्माऽनन्तरमेव निर्वप्तव्यम्, उत कृते जातकर्मणि? इति। किं प्राप्तम्। पुत्रजन्माऽनन्तरमिति। कुतः? जात इति निमित्तश्रुतेः।

१. नैमित्तिकस्य काम्येऽपि २ पु० पा०। २. अङ्गशक्तिवैकल्ये २ पु० पा०।

शक्तिवैकल्ये फलाऽनुत्पत्तावप्यधिकाराऽतिक्रान्तिः स्यात् अप्राप्तकालं चाऽऽकुर्वतः ।

अथाऽधिकृतोऽपि जातपुत्रवत्कालशौचे कालमुपसंहृत्य[1] कुर्वन्नाऽधिकारमतिक्रामति निमित्तानन्तर्यस्याऽशब्दार्थत्वात् । कालसंपत्तावप्यन्याङ्ग-

सत्यस्मिन्नक्रियायां तद्विरोधप्रसङ्गादिति प्राप्ते उच्यते । कृते जातकर्मणीति । कुतः ? इष्टिभावनायामस्यां भाव्याकाङ्क्षायामर्थवादतो वहवः खल्विह भावेन सम्वन्धुं समर्थास्तेजस्वितेन्द्रियावित्वादयः पुत्रगामिनः श्रूयन्ते । तत्तेषामेव रात्रिसत्रन्यायेन फलत्वकल्पना । यदि च जातमात्रे एव कुमारे इष्टिरियं निरुप्येत ततोऽकृतजातकर्मणः स्तन्यदाननिषेधादिष्टिक्रियायां च कालक्षेपात् कुमारविपत्तिप्रसङ्गात्तद्गुणविधानार्थमिष्टिरनर्थिका स्यादिति न जातमात्रे इति निरूपितम् ।

तथेदमपरं चिन्त्यते । अवगतमेतन्नाऽकृते जातकर्मणीति । इदमिदानीं सन्दिह्यते किं जातकर्माऽनन्तरमेव निर्वप्तव्यम्, आहोस्विदूर्ध्वं दशरात्रात् ? इति । कुमारमरणभयात्कारणाज्जन्माऽऽनन्तर्यमतिक्रान्तम् । कृते तु जातकर्मणि पुत्रजन्मनो निमित्तस्य संनिधानादिति क्रमकारणाऽभावाज्जातकर्माऽनन्तरमेवेति प्राप्ते ब्रूमः । शुचिना कर्म कर्त्तव्यमिति शौचस्याप्यधिकारकारणत्वादानन्तर्यस्य च जातकर्मणैव वधितत्वात् सति भावमात्रतया निमित्तभावाऽवलम्वनाद्दशरात्रस्य परस्तादपि तदुपपत्तेरतीते दशरात्रे इति सिद्धान्तः ।

पुनश्चिन्त्यते दशरात्राऽनन्तरमियमिष्टिः, उताऽमावस्यादिकालप्रतीक्षा?इति । तत्राऽत्यन्तव्यवधाने सति निमित्तस्य निमित्तभावः श्रुत एकान्ततो वाधितः स्यादिति दशरात्राऽनन्तरमेवेति प्राप्तेऽभिधीयते । कालप्रतीक्षेति । तदवच्छिन्नस्य निमित्तस्य निमित्तभावान्न जात्वतिक्रान्ते दशरात्रे दर्शपूर्णमासकालावच्छिन्नसद्भावो जातपुत्रो जातपुत्रतामतिवर्त्तते । तदेवं जातेष्टिन्यायेन निमित्तानन्तर्यस्याऽशाब्दत्वात् पञ्चम्यामिष्टिमप्रयुञ्जानोऽपि नाऽधिकारमतिपततीत्याह—अथाऽधिकृतो जातपुत्र इव कालशौचे कालं च शौचं च निमित्ते पुत्रजन्मन्युपसंहृत्य यथा जातपुत्रो दशरात्रस्य परस्तादमावास्यायां पौर्ण्णमास्यां वा जातेष्टिं कुर्वन्नाऽतिपतत्यधिकारं तथा जीवनवानपि निमित्ते जीवने दर्शपूर्णमासकालमुपसंहृत्य कुर्वन्नाऽधिकारमतिक्रामति, निमित्तानन्तर्यस्याऽशब्दार्थत्वात् । अत्रोत्तरम्—कालसंपत्तावन्याङ्गसंपत्तिमपेक्ष्य कुर्वंस्तथा स्यात् । नाऽधिकारमतिक्रामेदित्यर्थः ।

---

१. संगृह्य मू० पु० पा० ।

संपत्तिमपेक्ष्य कुर्वंस्तथा स्यात्। अथाङ्गभूतकालावच्छिन्नमेव जीवनमधिकारहेतुः, अन्याङ्गेष्वपि तुल्यम्। अपि च परिपूर्णाङ्गोऽधिकृतः किमङ्गविकलं प्रयुङ्क्ते ? असंभवादिति चेन्न। कल्पनात्रयोपप्लुतेः[1]। तथा हि। कर्म्मपर्य्यन्तापेक्षित्वाद्वा नियोगस्याऽधिकारानिर्वृत्तेरप्रयोगः, अधिकारवशाद्वा यथासंभवमधिकाङ्गोपदेशाऽनुरोधाद्वा। यदा तादृशस्य संभवः

अथाङ्गमपि कालो निमित्तमवच्छिन्दन्नङ्गतामुपयाति, नाऽनवच्छिन्दन्निति निमित्ते कालोपसंहारो नाङ्गोपसंहार इत्याह—अथाऽङ्गभूतकालावच्छिन्नमेव जीवनमधिकारहेतुः। अत्रोत्तरम्—अन्याङ्गेष्वपि तुल्यम्। मा नाम भूवन्नङ्गानि साक्षान्निमित्तावच्छेदकानि, अङ्गोपदेशबलसमासादितनिर्णयं तु सर्वाङ्गोपसंहारसामर्थ्यमुद्भूतं निमित्तमवच्छेत्तुं पारयतीति तुल्यताऽङ्गान्तराणां कालेनेत्यभिप्रायः।

एवं तावदितराङ्गविरहवच्चोदितकालविरहेऽप्यनुष्ठानप्रसङ्गमापाद्य सम्प्रति किञ्चिदङ्गवैगुण्येऽपि प्रयोगप्रत्यभिज्ञानं यदुक्तं तदपि दूषयन्नाह—अपि च परिपूर्णाङ्गोऽधिकृतः किमङ्गविकलं प्रयुङ्क्ते ? विधिगम्योऽयमर्थो नात्र प्रमाणान्तरं क्रमते। विधिना च यावदङ्गग्रामसहितः प्रयोगोऽवबोधितस्तत्राऽङ्गतुषत्यागेऽपि तत्प्रयोगत्वमनवबोधितं विधिना। पुरुषस्य प्रतिभामात्रं न प्रामाणिकमिति भावः।

अत्र शङ्कते—असम्भवादिति चेत्। शङ्कां निराकर्तुमसम्भवशब्दार्थं विकल्पयति—न। कल्पनात्रयपरिप्लुतेः। तिस्रः खल्विह कल्पनाः परिप्लवन्ते। परिप्लुतिरुपपत्तिः। सह वैकग्रन्थेन स्वाऽनुगुणां तावत्कल्पनामादितो दर्शयति—तथा हि। क्रमपर्यन्तापेक्षित्वाद्वा नियोगस्याऽधिकाराऽनिर्वृत्तेरप्रयोगः। विनियोगोपादानाऽवगतशेषभावं पदार्थाऽवगमे शब्दाभिहितं च तत्क्रममनङ्गमप्यपेक्षमाणः स्वोत्पत्तौ नियोगो यावज्जीविको नाऽङ्गहानावुत्पत्तुमर्हतीति। सर्वथैव प्रयोगाऽभावोऽसंभवशब्दार्थं इति चोदकाऽनुगुणां कल्पनामाह—अधिकारवशाद्वा यथासम्भवम्। अयमर्थः। यद्यप्ययं परिपूर्ण्णाङ्गोऽप्यधिकृतस्तथापि तदधिकारप्रतीतिसामर्थ्यात्तत्प्रवृत्तौ हीनाङ्गमपि समापयति। क्वचिदङ्गकरणे सामर्थ्याऽभावे संपूर्णाङ्गप्रयोगकरणादिति। सोऽयमसम्भवः। कल्पनां तृतीयामाह—अधिकाङ्गोपदेशाऽनुरोधाद्वा यदा तादृशस्य सम्भवः अधिकं तत्कालशक्याङ्गापेक्षया यदशक्यमङ्गं तदुच्यते। यदा साङ्गमुपसंहर्तुं शक्यते तदा तस्य सम्भवः।

१. कामनात्रयोपपत्तेः मू० पु० पा०।

तत्रोभयाऽनुग्रहादानन्तर्यस्याऽशब्दार्थत्वाज्जातपुत्रेष्टिवद्यदेति युक्तम्। अङ्ग[1] शक्त्या वा कालवदधिकारावच्छेदादप्रयोगः। न चैक एव विधिस्तेषामेव प्रयोजकश्चाऽप्रयोजकश्च। अपि च किमर्थं विकलाङ्गे प्रवर्त्तते? अधिकारनिर्वृत्तय इति ब्रूमः। किमधिकारनिर्वृत्तिर्नाङ्गापेक्षा फलनिर्वृत्तिरिव? यद्येवमनङ्गत्वमेव। सापेक्षा चेद्यथाशक्त्यङ्गसाध्यैवेति वैकल्ये

तत्राऽनन्तराऽभिहितां तावत्कल्पनामुपपादयति—तत्रोभयाऽनुग्रहादानन्तर्यस्याऽशब्दार्थत्वाज्जातेष्टिवद्यदेति युक्तम्। अस्यार्थः। अधिकारप्रतीतेरधिकाङ्गोपदेशस्य चाऽनुग्रहाद्यदेति युक्तम्। नन्वेवं निमित्ताऽनन्तरमकरणान्निमित्तत्वव्याहतिरित्याशङ्क्याह——आनन्तर्यस्याऽशब्दार्थत्वाज्जातपुत्रेष्टिवदिति। व्याकृतमेतद्युक्तम्। ननु यथासम्भवमङ्गानुष्ठानं तथा काम्यनैमित्तिकयोरविशेष इति दूषणम्। यदि पुनरङ्गोपसंहारसामर्थ्यस्याऽनुपादेयतया कालवदधिकारावच्छेदकत्वान्नाङ्गवैगुण्ये कालाऽभावइव क्रिया, न चाऽवैगुण्यं यावज्जीवं कस्यचिदपि सम्भवति। ततश्च यावज्जीवसर्वाङ्गसमवेतं प्रयोक्तव्यमित्ययमर्थो विरुद्धत्वान्न सम्भवति। ततोऽशक्यार्थविधानात् ज्वरहरतक्षकचूडारत्नालङ्कारोपदेशवदप्रामाणिकत्वं शास्त्रस्येति सर्वदैवाऽप्रयोग इत्याह—अङ्गशक्त्या च कालवदधिकारावच्छेदादप्रयोगः। ननु यावज्जीवमुपदेशसामर्थ्यात्किमिति विगुणः प्रयोगोऽपि न कल्पते? इत्याशङ्क्याह—न चैक एव विधिस्तेषामेव प्रयोजकश्चाऽप्रयोजकश्च। एवं हि स एवैकोपि विधिस्तान्येवाऽङ्गान्याक्षिपति प्रतिक्षिपति चेति व्याहतमापद्यते। तस्मादात्यन्तिक एव प्रयोगाऽसम्भवोऽसम्भववादिनाऽभिहितः। सोऽयमात्मीय एव बाणो भवन्तं प्रहरतीत्यागतमित्यर्थः।

एवं तावद्यावदधिकारप्रधानं निखिलाङ्गग्रामसहितं प्रयोज्यतयाऽवगतं तावदेव प्रयोक्तव्यम्। न चाऽन्यूनप्रयोगस्तु प्रातिभ इत्युक्तम्। सम्प्रति न्यूनप्रयोगस्य निष्प्रयोजनवत्तामपि प्रतिपादयति—अपि च किमर्थं विकलाङ्गे प्रवर्त्तते। प्रेक्षावतां हि प्रवृत्तिः प्रयोजनवत्ताव्याप्ता प्रयोजनवत्ताभावे न भवति, शिंशपात्वमिव तरुत्वाऽभाव इत्यर्थः।

अत्रैकदेशी प्रयोजनमाह—अधिकाराऽनिर्वृत्तये इति ब्रूमः। एतदुक्तं भवति। यमर्थमधिकृत्य प्रवर्त्तते तत्प्रयोजनं प्रयुज्यतेऽनेनेति व्युत्पत्त्या, कार्यं चाऽधिकृत्य लोकः प्रवर्त्तते, कार्यं चाऽधिकारः, तदयं विकलाङ्गेऽपि कर्मणि कार्यनिर्वृत्तये प्रवर्त्तते इति। तदेतद् दूषयति—किमधिकारनिर्वृत्तिर्नाङ्गापेक्षा, फलनिवृत्तिरिव। ननु मा भूदधिकारनिर्वृत्तिरङ्गापेक्षा, को दोष? इत्याशङ्क्याह—यद्येवमनङ्गत्वमेवाङ्गैर्विनापि करणोपकारस्य

१. अङ्गा० मू० पु०।

वृथा चेष्टा स्यात्। अथ यथाशक्त्यङ्गसाध्येति। न कार्य्यनिष्ठता विशेषायालम्। अपि चाऽधिकारात्फलनिर्वृ त्तिः, तत्र यथाशक्त्यङ्गोपेतेऽधिकृतस्य तादृशादेवाऽधिकारनिर्वृ त्तिमुखेन तन्निमित्तमिव। अथ न तादृशे? अधिकारनिर्वृ त्तिरपि न स्यात्। परिपूर्णाङ्गेऽधिकृतस्य विकलाङ्ग-

कार्यसिद्धेरिति भावः। सापेक्षा चेद्यथाम्नाताङ्गसाध्यैवेति वैकल्ये वृथा चेष्टा स्यात्। शङ्कते—अथ यथाशक्त्यङ्गसाध्येति। निराकरोति—न कार्यनिष्ठता विशेषायाऽलम्। एतदुक्तं भवति। कार्यनिष्ठतायां सत्यां काम्येऽप्युपकरणीभूतभावार्थस्य विषयत्वात्सकलाङ्गग्रामजनितोपकारस्य च भावार्थस्य करणभावादेकाङ्गवैकल्ये च तदनुपपत्तेर्विषयाऽभावादधिकार-प्रविलयः। नैमित्तिकेषु तु भावार्थमात्रस्य विषयभावाद्वैकल्येऽपि च विषय-भावोपपत्तेरप्रलीनोऽधिकार इति काम्यनैमित्तिकयोर्यो विशेषः स नोपपद्यते। यथाशक्त्यङ्गसाध्येऽधिकारेऽधिकारश्चेदङ्गविकलादपि प्रधानाद्भवति नून-मङ्गहीनमपि करणमकरणादनुपपत्तेः। करणं चेत्कथमविषयः, विषय-श्चेत्कथमनधिकारः, अनधिकारश्चेत्कथं काम्यनित्ययोर्विशेषः? इति। यद्युच्येत नैमित्तिके भावार्थमात्रस्य विषयभावादङ्गवैकल्येऽपि तदस्तीत्यनपेतोऽधिकारः स्वसिद्ध्यर्थं यथाशक्त्यङ्गजनितोपकारमेव स्वकारणमाक्षिपति अङ्गबाधायामिवाऽबाधिताङ्गमात्राहितोपकारमिति। तदसत्। अधिकार-प्रविलयात्। न हि विषयमात्रमयमधिकारस्य व्यवस्थापनायाऽपेक्षते, अपि त्वधिकारिविशेषणमपि। आविर्भूतसर्वाङ्गकरणसामर्थ्यश्चाधिकारी नाङ्ग-सामर्थ्याऽभिभवेऽधिकारवानित्युक्तमित्युपरम्यते।

एवं पुरुषप्रवृत्तिं पर्यनुयुज्याऽधिकारोत्पत्तिं प्रति पर्यनुयोगमाह—अपि चाऽधिकारात् फलनिर्वृ त्तिः काम्येऽपि कर्मणीति भवन्मते सिद्धम्। अस्तु वा को दोषः? इत्याशङ्क्याह—तत्र यथाशक्त्यङ्गोपेतेऽधिकृतस्य तादृशा-देव यथाशक्त्यङ्गोपेतादेवाधिकारनिर्वृ त्तिमुखेन तत्फलं संपद्यते। अत्रैव दृष्टान्तमाह—निमित्तमिव। यथा निमित्तं विकलाङ्गमपि नैमित्तिकं प्रयोजयेदधिकारनिर्वृ त्तिमुखेन निमित्तभावेन संपाद्यते तथा फलमपीत्यर्थः। अथ न तादृशेऽङ्गहीने काम्येऽधिकारः। एवं तर्हि काम्यवन्नैमित्तिके विकलाङ्गेऽनधिकारनिर्वृ त्तिरपि न स्यात्। यतः परिपूर्णाङ्गाऽधिकृतस्य विकलाङ्गप्रयोगे कर्मान्तरप्रयोग इव। यथैव खल्वग्निहोत्रेऽधिकृतश्चैत्यवन्दनां कुर्वन्नाऽधिकारं संपादयति एवं साङ्गे तस्मिन्नधिकृतोऽङ्गहीनं निर्वर्त्तयन्न कृताधिकार इत्यर्थः।

स्यादेतत्। अग्निहोत्रेऽधिकृतश्चैत्यं वन्दमानो नाऽधिकारं संपादयति। अधिकारविषयकरणस्य होमस्याऽननुष्ठानात्। जुह्वत्युत्तराङ्गहीनमप्यधिकार-

**प्रयोगे कर्म्मान्तरप्रयोग इव अङ्गप्रधानभेदोऽप्यत्राऽनुपकारकोऽधिकारविधिविषयत्वेनाऽभेदात्। भेदे चाऽनङ्गत्वप्रसङ्गः। अङ्गप्रधानभावस्य चासंप्रधार्य्यत्वात्।**

विषयसंपत्तेस्तथाभूतस्यैव होमस्याऽधिकारेण करणभावाऽऽक्षेपादधिकारं संपादयतीत्ययमङ्गप्रधानयोर्विशेषो यत्प्रधानाऽभावे नाऽधिकारो भवति अङ्गाभावे च सति प्रधानं भवतीत्याशङ्क्याह—अङ्गप्रधानभेदोऽप्यत्राऽनुपकारकः। कुतः ? इत्याह—अधिकारविधिविषयत्वेनाऽभेदात्। यद्यपि नियोगस्य भावार्थ एव प्रतिपत्त्यनुवन्धित्वाद्विषयस्तथापि साङ्गप्रधाने प्रयोजकत्वादङ्गानां प्रधानस्य च नियोगस्य विषयत्वेनाऽभेद युक्तः। यदि पुनरेतद्ब्रूयादधिकारनियोगस्याऽङ्गेषु प्रयोजकत्वं नाऽऽस्थीयेत ततो भेदे चाऽप्रधानस्य प्रयोज्यत्वेनाऽङ्गानां चाऽप्रयोज्यत्वेन विषयत्वाऽविषयत्वलक्षणेऽङ्गीक्रियमाणेऽनङ्गत्वप्रसङ्गः। येन येन विनाऽयं कार्यस्वभावोऽधिकारो नोत्पद्यते तत्तदात्मोपपत्तिनान्तरीयकत्वादाक्षिपति, नाक्षिपति चेदङ्गानि तर्हि तैरपि नोत्पद्येत, ततश्चाऽनङ्गत्वप्रसङ्ग इति भावः।

किं चाऽस्यैकदेशिनो मतेऽङ्गप्रधानभावस्य चासंप्रधार्यत्वादनुपकारक इति सम्बन्धः। इदमत्राऽऽकूतम्। कार्यरूपमपूर्वं प्रत्ययार्थः। कार्यं च कृतिं पुरुषप्रयत्नं प्रति यदुद्देश्यं प्रधानम्, तच्च यथा 'दर्शपूर्ण्णमासाभ्यां स्वर्गकामो यजेते'[1]त्येतस्मिन्प्रतीयते तथा समिदादिवाक्येष्वपीति कार्यान्तरविषयकारणानां समिदादीनामधिकारं प्रत्यै[2]दमर्थ्याऽनुपपत्तेः कार्यस्य च समिदादिविषयस्य "कार्यमेव हि तन्न स्याद्यदन्यार्थमि"ति न्यायादधिकारकार्यं प्रति तादर्थ्याऽभावादङ्गप्रधानभावाऽनुपपत्तिः।

स्यान्मतम्, न हि कार्यमित्येव नाऽन्यार्थमपि तु यदनुष्ठेयम्। अनुष्ठेयं तदुच्यते यत्पुरुषेण ममेदं कार्यमिति निरपेक्षं कार्यमवगम्यते। परमाऽपूर्वं च तन्न जातु तस्याऽन्यार्थप्रवृत्तेः कृतिव्याप्यताप्रतीतिः। अन्यस्य[2] प्रधानस्याऽनवगमात्। ननु फलमीप्सितमवगम्यते न प्रथमतः प्रतीतेन कार्येण नियोज्यं विना पर्यवस्यता विशिष्टनियोज्याऽपेक्षिणा स्वर्गकाम इति नियोज्यविशेषणतया ग्रहणान्न फलप्रतिपादनपरं तत्पदं तदेव तु निरपेक्षं कार्यमवगतं साध्यस्वर्गविशिष्टेन नाऽनुत्पादयत्स्वर्गमुत्पद्यत इति स्वर्गोपायतामश्नुत इति निरपेक्षमपरकार्याऽपगमे सति फलाऽवगतिर्न पुनः फलाऽवगतौ सत्यां कार्याऽवगतिः। यतः साऽपेक्षत्वेन परमाऽपूर्वमनुष्ठेयं स्यात्। तदेव तु निरपेक्षं प्रयोजनं सत्परमाऽपूर्वमभिदधाति लिङ् स्वसन्निधिसमाम्नानैः स्वयं प्रयोजनीभूतैरवघातादिभिः समिदादिभिश्च प्रयोजनिभिरन्वितमभिधत्ते इति

१. अधिकारनियोगं प्रति० २ पु० पा०। २. अन्यथा० २ पु० पा०।

सत्यपि चोदनार्थाऽनिर्वृत्तेर्वृथा चेष्टाप्रसङ्ग इत्युक्तम् ।

कश्चायमधिकारो यस्य निर्वृत्तिः? नियोगश्चेत् न निर्वृत्तिवि-

तदिदं ग्राहकग्रहणमभिधीयते। तदेवं साऽधिकारविधिसन्निधिसमाम्नातेषु समिदादिविधिषु तदुपगृहीतविषये[1]षु ततः परमाऽपूर्वलक्षणकार्यप्रत्यभिज्ञानान्न द्रागित्येव कार्यान्तरबुद्धिरुदयमासादयति। पश्चात्तु कथमपि समिदादयः क्रियारूपतया विशरारवः परस्परमसंभवन्तः प्रोक्षणादिवदपूर्वसाधनीभूतद्रव्य-संस्कारादिद्वारेणाऽपूर्वविषयाऽननुप्रवेशिनः परमाऽपूर्वेण ग्रहीष्यन्ते इति प्रसिद्धतरैदमर्थ्यानामवान्तराऽपूर्वं कार्यं समिदादीनामवकल्प्यमानं समिदादि-गताऽऽख्याताऽभिधेयमपि परमाऽपूर्वपारतन्त्र्येणाऽभिधीयमानत्वात्कार्यमप्य-ननुष्ठेयमित्युपपन्नोऽङ्गभावः कार्यविषयाणामपि समिदादीनाम् ।

अत्रोच्यते। अधिकारवाक्येषु तावदमी लिङादयो निरपेक्षकार्याऽभि-धानविदितशक्तयो न समिदादिवाक्येष्वन्यनिष्ठं कार्यमभिधातुमीशते। यदि परमवहन्त्यादिवत्किमाधिकाराऽपूर्वस्यैतेऽनुवादा, उताऽपूर्वान्तराऽभिध्यायिनः? इति पदान्तरमवशिष्यते न पुनर्लिङाद्यभिधेयस्य स्वप्रधानस्य कार्यस्य प्राधान्यपरित्यागो युक्तः। ननूक्तमधिकारसमाम्नाताः खल्वमी समिदाद-यस्तेनैवाऽधिकारविधिनाऽभिधानत एवाऽऽ१ादितैदमर्थ्या न स्वनिष्ठकार्य-विषयतां प्रतिपत्तुमर्हन्ति, प्रकृताऽपूर्वैदमर्थ्यविरोधात्। न चाऽवहन्त्यादि-वत्प्रकृताऽपूर्वविषयाऽनुप्रवेशिनः, ततश्च नाऽनुवादाः। न च स्वनिष्ठकार्या-ऽभिधायीनि तत्पदानीत्यभिधेयशून्यतया प्रमत्तगीतानि प्रसज्येरन्निति वरं प्राधान्यमात्रत्यागेन कार्याऽभिधायित्वमस्तीति ।

सत्यमुक्तम्। अयुक्तं तु तत्। न हि साऽधिकारो विधिः संनिधि-समाम्नातमात्रमेव गृह्णातिमात्रं ही (?) ज्योतिष्टोमविधिर्द्वादशोपसत्ताम् अपि तु यद्ग्रहणार्हम्। न च स्वनिष्ठकार्यविषयाः समिदादयो ग्रहणमर्हन्ति। ननु ग्राहकविरोधात्प्राधान्यं समिदादिविषयस्य नियोगस्य नास्ति। अथ प्राधान्यप्रतीतिविरोधाद् ग्राहक एव किमिति न परिह्रियते? तत्र श्रुतिमात्रा-देव नियोगप्राधान्यप्रतीतेर्निरपेक्षत्वाद्वाक्यान्तराऽऽलोचनया ग्राहकगृहीतेः साऽपेक्षतया प्राधान्यप्रतीतेर्बलीयस्त्वेन रात्रिसत्रादिवत्स्वतन्त्राऽधिकारकल्पनायां सत्यां नाऽङ्गभावः प्रयाजादीनां प्रधानभावश्च दर्शपूर्णमासादीनामुपप-द्येत इति सुष्ठूक्तमङ्गप्रधानभावस्य चासंप्रधार्यत्वादिति।

अभ्युपेत्याङ्गप्रधानभावं दूषणान्तरमाह—सत्यङ्गप्रधानभावे नैमित्ति-कस्याऽनङ्गत्वेऽस्य प्रयोगे चोदनार्थाऽनिर्वृत्तेर्वृथा चेष्टाप्रसङ्ग इत्युक्तम्। किं

१. उपगृहीतविधिविषयेषु० पु० पा० ।

चारिता। नियोज्यता चेत् सापि नियोगादेव निर्वृत्ता। स्वामिता चेत् न तत्कृतं किंचिदभुञ्जानः स्वामी, इत्युभावप्यधिकारौ कार्य्यनिष्ठौ स्याताम्। तस्मान्न कार्य्यनिष्ठत्वप्रयोगनिष्ठत्वाभ्यां काम्यनैमित्तिकाऽधिकारयोर्भेदः शक्यः समाधातुमित्यन्यथा समाधेयः।

तदुच्यते—

जीवनादेर्निमित्तस्य साम्यात्कालो विशेषकः।
निमित्तार्थस्तत्र जाते कर्म्मणोऽवश्यकार्य्यता॥

चाऽयमधिकारो विचारं न सहते यस्य निर्वृत्तिरङ्गविकलेऽपि नैमित्तिकस्य प्रयोगे त्वयोच्यत इत्याह—कश्चाऽयमधिकारो यस्य निर्वृत्तिः? त्वयोच्यत-इति शेषः। एकदेशी स्वपरिभाषयाऽऽह—नियोगश्चेत्। दूषयति—तन्निर्वृत्तिर्विचारिता। उक्तं हि "नियोगस्य न कार्यते"त्यत्र 'विषयः कार्यो न नियोज्यस्य नियोक्तृत्वप्रसङ्गादि"ति। भाषान्तरेणाऽऽह—नियोज्यता चेत् परिहरति—सापि नियोगादेव निर्वृत्ता भावार्थविषयं नियोगमवबुद्ध्यमान एवायमधिगतनियोज्यभावो न तदधिगमायाऽनुष्ठानं यावद्गच्छेदिति। व्यर्थीकृतपरिभाषो लौकिकमधिकारपदस्यार्थमाह—स्वामिता चेत्। ईश्वरवचनो ह्ययमधिकृतशब्दो लोके प्रसिद्ध इति भावः। एतद्दूषयति—न तत्कृतं किंचिदभुञ्जानः स्वामी, एवं हि नैमित्तिकं कर्म संभवति पुरुषस्य स्वामिनः, यदि तत्कर्म तस्योपकारे वर्त्तते। द्वयी चेयमुपकारजातिर्हितप्राप्तिरहितनिवृत्तिश्च। न च हिताऽहितप्राप्तिपरिहाराऽनुयायि त्वन्मते नैमित्तिकं कर्म कल्पते। यदुच्यते नैमित्तिकादन्यपूर्वपुरुषगुणो जायते, जायतां नाम न पुनरयमधिकारः[2] स्वयमसुखरूपत्वादतद्धेतुत्वाच्च। यदि त्वेतद्ब्रूयान्नैमित्तिकस्यापि पुरुषोपकारकत्वमङ्गीक्रियेत तत उभावप्यधिकारौ[3] कार्यनिष्ठौ स्याताम्। इतिशब्दस्तस्मादर्थे। प्रकृतमुपसंहरति—तस्मान्न कार्यनिष्ठत्वप्रयोगनिष्ठत्वाभ्यां काम्यनैमित्तिकाधिकारयोर्भेदः शक्याऽध्यवसानः[4]।

स्वमतपातनिकां करोति—तस्मादन्यथा समाधेयः। तदुच्यते।

जीवनादेर्निमित्तस्य साम्यात्कालो विशेषकः।
निमित्तार्थस्तत्र जाते कर्मणोऽवश्यकार्यता॥

यदि श्रुतिमात्राऽपेक्षोऽधिकारो भवेत् ततोऽन्धशूद्रादीनां काम्ये नैमित्तिके चाऽविशेषेण प्रसज्येत, त्रैवर्णिकानां चाऽग्निहोत्रं सततमकुर्वतामधिकाराऽतिक्रान्तिः स्यात्। न त्वस्माकं श्रुत्यपेक्षोऽधिकारः किं त्वङ्गो-

१. तत्र क्लृप्तम् मू० पु०।
२. उपकारः—२ पु० पा०।
३. उपकारौ—२ प० पा०।
४. अध्यवसायः २ पु० पा०।

पदेशाऽनुरोधेन शक्त्यपेक्षः। तथा चाऽशक्तानामन्धशूद्रादीनां त्रैवर्णिकानां च मध्यन्दिने सायमादिसमयमुपसंहर्तुमसमर्थानां नाऽधिकारः। नन्वेवं काम्यवन्नैमित्तिकेष्वप्यङ्गोपदेशाऽनुरोधेन यदेत्युपपद्येत।

तत्रोच्यते। इदं तावदत्र भवान् पृष्टो व्याचष्टाम्, यदेतत्काम्ये सर्वाङ्गोपसंहारसमर्थोऽधिकारीति, तत्किं स्वर्गकामवत्साक्षाच्छब्दाऽवगतम्, उताङ्गोपदेशाऽनुरोधात्? तत्र न तावत्स्वर्गकामपदमिव सर्वाङ्गोपसंहार-समर्थपदमधीयते[1] समाम्नातारः। अथाङ्गोपदेशाऽनुरोधादसमर्थं प्रति तदुपदेशाऽनुपपत्तेः। आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणीति। यथा 'स्रुवेणाऽवद्यती'त्यत्राऽश्रुतमपि द्रव्यादि यच्छक्यत इत्युपबन्धात्सम्बध्यते एवम-श्रुतमपि सर्वाङ्गोपसंहारसामर्थ्यमनुपादेयं सदधिकृतविशेषणतया सम्भन्त्स्यते। युक्तं काम्ये तत्र सर्वाङ्गोपसंहारसामर्थ्यविषयाया अर्थापत्तेः परिपन्थ्यभावेनाऽ-प्रत्यूहमुपपत्तेः अर्थिपदस्य च समर्थेऽपि सम्भवादविरोधात्। न खलु समर्थः स्वर्गकाम इत्युक्तम्। इह तु निमित्तश्रुतिविरोधः। तथा हि। 'यावज्जीवं जुहुयादि'ति यावदुपसंबद्धं जीवनं कर्त्तव्यतायां निमित्तम्। यस्मिन् सति नैमित्तिकं भवत्येव भाक्तमितरदित्युपरिष्टादुपपादयिष्यते। तेन जीवने सति कर्त्तव्यमेव न न कर्त्तव्यमिति प्रतीतेर्निमित्ते[2]सम्बन्धाऽवश्य-कर्त्तव्यताऽऽपत्तिः, निमित्तवदङ्गोपदेशाऽनुरोधात्। तदुपसंहारसामर्थ्यविशेष उद्भवसमाधौ ख्यातः प्रतीयते। स चाऽनित्य इति तन्नान्तरीयकत्वाद-वश्यकर्त्तव्यताऽऽपतति। न चास्ति कश्चिदपि पुरुषधौरेयस्तथापि[3] विधौ दैवसंपन्नो यो यावज्जीवं सायंप्रातरप्रत्यूहमविकलाङ्गमग्निहोत्रमपि प्रयोक्तुं समर्थः। अन्तरायाणां व्याधितोदप्रमादादीनामवश्यम्भावनियमात्। तत्स-हभुवां च दुःखदौर्मनस्यादीनाम्। तदनयोर्निमित्तोपदेशसर्वाङ्गोपसंहार-सामर्थ्ययोर्विरोधान्निमित्तस्य च श्रौतत्वेन तदनुगुणं सामर्थ्यमुपवर्णनीयम्। नन्वङ्गान्यपि श्रुतान्येव किमतस्तान्यपि नित्यवच्छ्रुतानीति बहूनां श्रुतीनाम-नुरोधेन वरमेका निमित्तश्रुतिः 'त्यजेदेकं कुलस्याऽर्थे' इतिवत्परित्यज्यताम्। तत्किमियं निमित्तश्रुतिस्तपस्विनी प्रमत्तगीतमेव अपि तु मुख्यं परित्यज्य गौणं निमित्तभावं यस्मिन्सत्येव नाऽसतीत्येवं भूतमवलम्बते?

अत्रोच्यते। न तावत्साक्षादङ्गश्रुतयो निमित्तश्रुतिविरोधिन्यः। न हि तस्य तस्याङ्गस्य क्रिया निमित्ते सति न सम्भवति। ननु नित्यवच्छ्रु-तानि न चाङ्गानीति विरोधः। सत्यं नित्यवच्छ्रुतानि न त्वङ्गविधयः प्रधानविधिनिरपेक्षा अङ्गानुष्ठानं प्रयोक्तुमीशते। तथा ह्यङ्गभावना-

१. सामर्थ्यमधीयते २ पु० पा०। २. अनैमित्तिकं २ पु० पा०।
३. मुधापि २ पु० पा०।

यस्तावद्यथोक्ताय प्रयोगायैकान्ततोऽसमर्थः स दूरपर्य्युदस्त एवाऽधिकारात्। न त्वसौ[1] तादृशे नियोज्यतया प्रत्येतुं पार्य्यते। तेन शक्त्यङ्गोभाव्याऽऽकाङ्क्षा स्ववाक्ये भाव्यमपश्यन्ती विध्यापादितत्वेन चाऽपुरुषार्थाद्वाच्यार्थात्प्रच्याविता पुरुषार्थात्मकं भाव्यमपेक्षते, प्रधानभावना च निमित्तवत्यवश्यकर्त्तव्यतागोचरो लब्धनित्यसमीहितसाध्यतत्साधना स्वसाधनोपकारहेतुमपेक्षते। तदियमङ्गभावना करणोपकारलक्षणं भाव्यमासाद्य प्रधानभावना च करणोपकारं प्राप्य निर्वृणुतः। ततश्च प्रधानविध्याकाङ्क्षितोपकारसाधनेष्वङ्गेषु प्रधानाऽधिकृताऽधिकारप्राप्तिलब्धानुष्ठानेऽप्यप्रधानानुरोधेन निवृत्तिर्व्यवस्थापनीया। तद्विरोधे तु तदधिकृताऽधिकारभावेनाऽनुष्ठानाऽनुपपत्तेरङ्गविधीनां तत्त्वं हीयेत। न च निमित्तसम्बन्धादवश्यङ्कर्त्तव्यं प्रधानं कादाचित्केनाङ्गसाकल्येन सम्बन्धार्हम्, नित्याऽनित्यसम्बन्धविरोधात्। ननु प्रधानमपि कथं निमित्तेन संभन्त्स्यते? न ह्यग्निहोत्रमङ्गहीनमपि यावज्जीवं शक्यसंपादम्। अन्तरायाणामपि संभवात्। यद्युच्येत विधिसामर्थ्यादनुष्ठात्रा निपुणेन भवितव्यम्। तदङ्गसाकल्येऽपि तुल्यम्। मैवम्। यस्य हि निमित्तसम्बन्धस्तदवश्यकर्त्तव्यम, स च प्रधानस्येति तदेव तथा। तत्र च स्वरूपेणाऽन्याऽसत्त्वादनुष्ठातुर्नैपुण्यमपि सम्भवति न त्वङ्गेषु निमित्तश्रुतिः। यतस्तेषामप्यवश्यकर्त्तव्यता स्यात्। प्रधानसम्बन्धात्तेषामप्यवश्यम्भाव इति चेत्, नाऽवश्यकर्त्तव्यतोपहितमर्यादेन प्रधानविधिना वास्तवमङ्गसाकल्यस्यावश्यम्भावमननुरुध्यमानेन यदा[2] यावन्त्यङ्गानीत्युपबन्धात्। तदेवं निमित्तश्रुतिः प्रधानवाक्यस्था प्रथममेव स्वविषयं प्रधानेन सहैकलोलीभावमुपनयन्ती भूयसीरप्यङ्गश्रुतीः स्वाऽनुगुणतया व्यवस्थापयन्ती नैताभिर्जघन्यवृत्तितामापाद्यते। न चैवमितराङ्गवैकल्यवत्कालापगमेऽपि प्रधानप्रयोगसम्भवान्न तस्य हि गुणत्वेऽपि निमित्ताऽनुप्रवेशोऽपि वक्ष्यते। न चान्धशूद्रादीनामधिकारः। यतो 'यावज्जीवमग्निहोत्रं जुहुयात्' इति भावनालब्धसाध्यतत्साधना[3] कथमिति स्वकरणोपकारजनकाकाङ्क्षा अङ्गोपदेशैर्निराकाङ्क्षीक्रियते। तत्र सर्वाङ्गोपदेशानुरोधादसमर्थस्यानुष्ठानाऽसम्भवात् समर्थस्यापि चाऽनुभूततद्भावस्य तदनुपपत्तेः सर्वाङ्गोपेतप्रधानाऽनुष्ठानगोचरसामर्थ्योद्भूतिरधिकारी काम्यवदिति सामर्थ्यं तदुद्भूतिश्चाऽधिकृतविशेषणतयाऽवगम्यते। तत्र निमित्तश्रुतिविरोध इति तदविरोधायाऽवश्याऽवहेयेऽन्यतरस्याऽनुद्ध्वमात्रं हीयतां नाङ्गसामर्थ्यम्, उभयहानिप्रसङ्गादिति नाऽन्धशूद्रादीनामधिकारो नापि शक्यप्रतिकारव्याधीनामनधिकारो नैमित्तिक इति सिद्धम्।

१. न ह्यसौ मू० पु०। २. अनुरुध्यमानत्वाच्च न यदा २ पु० पा०।
३. साध्यसाधना० २ पु० पा०।

पदेशावपेक्ष्य समर्थस्य तावदधिकारप्रतीतिः। सा चेयमधिकारप्रतीतिर्नेति पर्य्यवसिता अनित्यत्वात्सामर्थ्यस्यअन्यथाऽधिकृतस्य सर्वाङ्गोपसंहाराऽभावे नाऽनुष्ठानं यथासंभवम् अन्यथाऽन्यादृशेऽधिकारात्तादृशप्रयोगस्याऽशास्त्रीयत्वान्नानुष्ठानमनधिकारात्। अतः पुनरपि शक्त्यपेक्षाऽधिकारप्रतिपत्तिपर्य्यवसानाय। शक्तिर्हि प्रमाणैकदेश इत्युक्तम्। न प्रयोगनिश्च-

तदिदमाह—यस्तावत् यथोक्ताय प्रयोगायैकान्ततोऽसमर्थः शूद्रपङ्ग्वादिः स दूरपर्युदस्त एवाधिकारात्[1]। कुतः? इत्याह—न त्वसौ तादृशे[2] नियोज्यतया प्रत्येतुं पार्यते। तेन शक्त्यङ्गोपदेशावपेक्ष्य समर्थस्य तावदधिकारप्रतीतिस्तावदिति। स्फोटयति—साचेयमधिकारप्रतिपत्तिर्नैमित्तिके नेति पर्यवसिता अनित्यत्वात्सामर्थ्यस्याऽनैमित्तिकस्य चाऽवश्यकार्यत्वात् अवश्यमनवश्यम्भावयोश्च विप्रतिषेधादिति भावः। ननु भवतु सर्वाङ्गोपसंहारसामर्थ्यमनित्यं तथापि तेनैवाऽधिकारप्रतिपत्तिः पर्यवस्यतु, समर्थस्त्वधिकृतः कुतश्चित्प्रतिबन्धात्किञ्चिदङ्गमुपसंहर्तुं तदानीमशक्तोऽपि यथाकथंचित्प्रयोक्ष्यत इत्येतन्निराकर्तुमाह—अन्यथाऽधिकृतस्य सर्वाङ्गोपसंहाराभावे सति नाऽनुष्ठानं यथासम्भवमन्यथेति। यद्येतावत्यधिकारप्रत्ययः पर्यवस्येदित्यर्थः। कस्मादित्याह—अन्यादृशेऽधिकारात्सर्वाङ्गोपपन्ने तत्समर्थस्याऽधिकारात् तादृशप्रयोगस्य न्यूनाङ्गस्य प्रयोगस्याऽशास्त्रीयत्वान्नानुष्ठानम्, न्यूनाङ्गस्याऽनधिकारात्।

एतदुक्तं भवति। अधिकारप्रतीत्या सह प्रवृत्तेः संप्रतिपत्तौ सत्यां शास्त्रीयत्वम्, इह त्वङ्गसाकल्यवैकल्यलक्षणे विरुद्धधर्मसंसर्गाद्विषयभेदेऽपि प्रतिपत्तौ सत्यां प्रातिभत्वं प्रयोगस्येत्युपसंहरति—अतः पुनरपि शक्त्यपेक्षाऽधिकारप्रतीतिपर्यवसानाय। शक्त्यपेक्षेति याऽसावङ्गोपदेशासामर्थ्यलब्धाऽशक्तिश्रुतिस्तस्या यदेत्युपबन्धस्य नित्यश्रुतिविरोधादुपबन्धान्तरापेक्षोपबन्धावशक्तिरिति शक्त्यपेक्षेत्युक्तम्। शक्त्या च विषयेण विषयिणीं शक्तिश्रुतिं लक्षयति। यथा धूमादग्निः प्रतीयते इति धूमेन धूमज्ञानलक्षणा। अथ कस्मादधिकारप्रतिपत्तिपर्यवसानाय शक्तिश्रुतिरपेक्ष्यते। यावतोपबन्धविशेषशून्यायामधिकारप्रतिपत्तौ पर्यवसितायां पश्चाद्यथाशक्तिप्रयोगं शक्तिरेव निश्चाययिष्यतीत्यत आह—शक्तिः शक्तिश्रुतिः प्रमाणैकदेशश्चोदनैकदेश इत्युक्तमाचार्यैः। तथा च तदन्तर्भावेनैवाऽधिकारप्रतीतिपर्यवसानमित्यर्थः। यदि तु न चोदनैकदेशः स्यात्प्रमेयमात्रं शक्तिर्न प्रयोगनिश्चयाय कल्पेतेति शेषः। इदमत्राकूतम्। तत्त्वनिश्चयो हि प्रमाणस्य, कार्यप्रमेया

१. अधिकारी २ पु० पा०। २. न चासौ तादृशे २ पु०।

याय, अनन्यप्रमाणकत्वात्तस्य । सा कालतोऽङ्गतो वाऽऽश्रीयेत । तत्राङ्गतः संश्रये शब्दाऽवगतानामङ्गान्तराणां हानाच्छब्दविरोधः । कालतस्तु कालान्तराणामशब्दार्थत्वान्न कश्चिद्विरोधः । स चाऽयमविरोधो निर्निमित्तेऽधिकारे इदमनेनेदृशेनेत्येतावन्मात्रस्य शब्दार्थत्वात् । सन्निमित्ते तु निमित्तश्रुतिविरोधः । संप्राप्ते च तस्मिन्कार्य्यस्य तन्निमित्तत्वव्याघातात् । इतरत्रापि स्वर्गकामश्रुतिविरोध इति चेत् । उक्तम् । न च पुरुषविशेषनिर्देशो-

च शक्तिरिति कारणविरुधोपलब्ध्या प्रयोगनिश्चयो निवर्त्तत इति । अथ शक्तिज्ञानमेव प्रमाणं सत्प्रयोगं निश्चाययेत् । किं चोदनैकदेशत्वेन शक्तिश्रुतेः ? इत्याह—अनन्यप्रमाणकत्वात्तस्य प्रयोगस्य न[1] शक्तिज्ञानं प्रमाणमिति ।

संप्रति पूर्वपक्षी यस्मिन्सत्येव नाऽसतीति नित्यवदङ्गोपदेशाऽनुरोधान्निमित्तभावं मन्यमानो विमृशति—सा च शक्तिः कालतो वाऽङ्गतो वाऽऽश्रीयते कालाद्वेति । सर्वाङ्गोपसंहारसामर्थ्यमपेक्ष्य यदा शक्नुयादिति यावत् । एवं विमृश्याङ्गत इति प्रतिपक्षनिराकरणपूर्वकं कालादिति पक्षमवधारयति—तत्राङ्गतः संश्रये शब्दाऽवगतानामङ्गान्तराणां हानाच्छब्दविरोधः । कालतस्तु कालान्तराणामशब्दार्थत्वान्न विरोधः । नित्यवदङ्गानामुपदेशादन्यतमत्यागे तद्विरोधः । यदेत्युपबन्धे तु कालान्तराणामनुपदिष्टत्वान्नोपदेशविरोध इति काम्ये नैमित्तिके च यदेत्येव युक्तम् ।

परिहरति—स चाऽयमविरोधो निर्निमित्तेऽधिकारे[2] । कुतः ? इदं भाव्यमनेन करणेनेदृशेनेतिकर्त्तव्यताविशेषवतेत्येतावन्मात्रस्य शब्दार्थत्वान्नावश्यकर्त्तव्यता प्रतीयत इत्यर्थः । सन्निमित्ते तु निमित्तश्रुतिविरोधे कस्मात्सम्प्राप्ते च तस्मिन्न कार्यस्य तन्निमितत्वव्याघातात्सम्प्राप्त इति प्रकृतिप्रत्ययाभ्यामनुपादेयतां निमित्ततां च कथयति । चशब्दोऽपेरर्थे विरोधद्योतनः । सति भवत्येव न भवतीति निमित्तार्थो न भवदुक्त इति वक्ष्यते । न चाङ्गविधिविरोध इति प्रपञ्चितम् इति भावः[3] ।

पार्श्वस्थः सिद्धान्तिनं पर्यनुयुङ्क्ते—इतरत्रापि स्वर्गकामश्रुतिविरोध इति चेत् । समर्थमसमर्थं चार्ऽथिमात्रं प्रत्यसंकुञ्चितवृत्तिरर्थिश्रुतिः समर्थं प्रति नियम्यमाना पीड्यतइत्यर्थः । समाधत्ते—उक्तमिति । केवलपदार्थव्यवहाराऽभावादित्यादिना प्राक् । अर्थिपदस्य चाऽधिकारिवचनतामभ्युपेत्येदमुक्तम् । परमार्थतस्तु नेदमधिकारिप्रतिपादनपरम्, अपि तु भावनाकाङ्क्षितभाव्यविशेषपरम् । अर्थात्त्वधिकारिप्रतिपत्तिरित्युपरिष्टादिहैव वक्ष्यते ।

१. अनन्योपायकत्वात्तस्योपायस्य न० २ पु० पा० ।
२. अधिकारः २ पु० पा० । ३. विरोध इति भावः २ पु० पा० ।

ऽत्र विवक्षितः, साध्यत्वात्। न च सातत्येन प्रयोगः[1]। निमित्ते कालविशेषवतः कर्त्तव्यताऽवगमात्। कालविशेषेण तस्याऽर्थाद्विशेषणात्। तस्या निमित्ताऽनुप्रवेशित्वात्। तदुक्तं "न कालो गुणो निमित्तं ह्येतदि"ति। न गुण एवेत्यर्थः। न त्वङ्गान्तराण्येवम्, असाम्याद्वचनव्यक्तिभेदात्।

उक्तं च भावनाविवेके, ततो"ऽधिकारिपदाऽभावात्कुतस्तद्विरोधिते"ति इति दर्शयति—न च पुरुषनिर्देशोऽत्र विवक्षितः, साध्यपरत्वात्।

एवमुक्तां कारिकामुक्त्वा कारिकार्थपातनिकां करोति च किंचित्—न च सातत्येन प्रयोगः। अत्रैव शङ्कते—यदि निमित्तश्रुतिवशादङ्गहीनमपि यथाशक्ति प्रयुज्येत ततः कालस्यापि सायमादेरङ्गत्वेन विधानात्तदभावे मध्यन्दिनादौ जीवनस्य निमित्तस्य विद्यमानत्वादग्निहोत्रप्रयोगप्रसङ्गः। सायमाद्यङ्गापगमेन वा[2] तदा तदप्रयोगे[3]ऽङ्गान्तराभावेप्यप्रयोग इति काम्यवद्यदेवेत्येवं प्राप्तमिति। तदनेन निराक्रियते—न च सातत्येन प्रयोग इति। निमित्ते कालविशेषवतः कर्त्तव्यतावगमात्। एतदुक्तं भवति। प्रयोगाङ्गमप्ययं कालोऽनुपादेयत्वादङ्गोपसंहारसामर्थ्यमिव नियोज्यं विशिनष्टि। तेन तदभावान्मध्यन्दिनादौ नाऽधिकारे विष्णुक्रमणादिसामर्थ्याऽभावादिव पङ्ग्वादीनामिति। नन्वङ्गतया कालः श्रूयते नाधिकृतविशेषणतया। तथा हि। अप्रवृत्तप्रवर्तन्तात्मको विधिः प्रवर्त्यपुरुषविशेषसमधिगतसाङ्गप्रधानतया, तत्कथं तद्वतोऽधिकारावगमः? इत्यत आह—कालविशेषेण तस्यार्थाद्विशेषणात्। यद्यप्यङ्गत्वेन श्रूयते कालस्तथाप्यधिकृतविशेषणम्। तथा ह्यप्रवर्तप्रवर्तनात्मको विधिः प्रवर्त्यपुरुषसमधिगतसाङ्गप्रधानविषयोऽनुपादेयवस्त्ववच्छिन्नं प्रवर्त्यपुरुषविशेषं कल्पयितुमुद्यतः तस्य विषयं चाऽनुपादेयत्वविधेयत्वलक्षणयोः प्राप्त्याप्तिभ्यां विरोधाद्विशेषणतया स्वीकर्तुमसमर्थो यथाविनियोगमधिकारावगमाच्च तन्नान्तरीयकसाङ्गप्रधानोपसंहारसामर्थ्यमनुरुध्यमानोऽनुपादेयाङ्गसामर्थ्यं च निमित्तं चाङ्गमपि प्रवर्त्यपुरुषविशेषणतया गृह्णाति। न च कालस्येतराङ्गग्रामवत्स्वक्रियोपसंहारसामर्थ्यमपि सम्भवति कार्याङ्गत्वात्सामर्थ्यस्य कार्यस्योपसंहारलक्षणस्य तदनुपादेयाऽनुपपत्तेः। काले हि कर्म क्रियते न कर्मणि कालः। तस्मात्कालविशेषेणाङ्गेनापि सता विधिः प्रवर्त्यपुरुषविशेषाऽपेक्षायामर्थात्तद्विशेषणात्तद्वतः कर्त्तव्यताऽवगमः। ततश्च न सातत्येन प्रयोग इति। कुतः? इत्यत आह—तस्यापि निमित्ताऽनुप्रवेशित्वान्निमित्तसम्बन्धश्चैकं नियोज्याऽवच्छेदलक्षणो यथा सामान्यगुणयोरेकव्यक्तिसमवायः

१. प्रसङ्गः—मू० पु० पा०। २. सायमाद्यनभ्युपगमेन वा० २ पु० पा०। ३. तदा प्रयोगे १ पु० पा०।

उपादेयानि ह्यङ्गान्तण्यनुपादेयं निमित्तम्। एभिरेतानि वा कुर्या-दित्यङ्गेषु वचनव्यक्तिः। अस्मिन् सतीति निमित्ते। ततोऽङ्गान्त-राणि नालं निमित्तमनुप्रवेष्टुम्। कालस्त्वनुपादेयः समानवचनव्यक्ति-रङ्गमपि सन्निमित्तमनुप्रविशतीति युक्तम्। अथ निमित्तोपसंहार एव किं नेष्यते? काम्येऽपि तत्कालेच्छया। ननु प्रयोजनमेतत्? सत्यम्।

सम्बन्धो गौः शुक्ल इति सामानाधिकरण्यहेतुः। आचार्यस्यापि तत्रभवत एतदभिमतमित्याह—तदुक्तं 'न कालो गुणो निमित्तं ह्येतदि'ति। ननु प्रयोगाङ्गं काल इति स्वतन्त्रसिद्धान्तभङ्गः प्रसक्त इत्याशङ्क्याव्याचष्टे—न गुण एवेत्यर्थः। निमित्तत्वं च निमित्तसम्बन्धाद् भाक्तं न पुनस्तत्त्वमेव, तत्कल्पनायां प्रमाणाऽभावात्। ननु यद्यङ्गमपि कालो निमित्ताऽनु-प्रवेशी कस्मान्नाङ्गान्तराण्यप्येवम्? अत आह—न त्वङ्गान्तराण्येवम्। कुतः? असाम्यान्निमित्तेन। तदेव कुतः? वचनव्यक्तिभेदात्। किं पुनः कारणं वचनव्यक्तिभेदे? इत्यत आह—उपादेयानि ह्यङ्गान्तराणि कालात् अनुपादेयं निमित्तम्, ततो वचनव्यक्तिभेदः। तद्दर्शयति—एभिरे-तानि वा कुर्यादिति अङ्गेषु वचनव्यक्तिः। अङ्गैः खलु करणोपकारे क्रिय-माणेऽकृतानि न सन्तीति तान्यपि कियन्तएव। तदिदमुपादेयत्वमङ्गानाम्। तेन तत्रोभयो वचनव्यक्तिरुपपन्ना। एतैरेतानि पुरुषप्रयत्नाऽगोचरे त्वस्मिन्सतीति निमित्ते वचनव्यक्तिः। ततो वचनव्यक्तिभेदादङ्गान्तराणि नाऽलं निमित्तमनुप्रवेष्टुम्। कालस्त्वनुपादेयो यतस्तस्मान्निमित्तसमान-वचनव्यक्तिः कालोऽङ्गमपि सन्निमित्तमनुप्रविशतीति युक्तम्। यथा अनुपादेये निमित्ते कर्म विधीयते तथा कालेऽपि न त्वङ्गान्तरेष्विति निमित्त-वत्कालोऽधिकृतविशेषणं नाङ्गान्तराणीति सिद्धम्।

अत्र पार्श्वस्थश्चोदयति—अथ निमित्तोपसंहार एव किं नेष्यते? प्रथमङ्गत्वेन सम्वध्यते कालः पश्चात्त्वर्थान्निमित्तमनुप्रविशतीति किमनया परम्परया? यत्सामान्येन यावज्जीवमिति श्रुतेः प्रसृतं जीवनं श्रुत्यैवाऽयं कालविधिः कालविशेषे उपसंहरिष्यति। नेयं कालश्रुतिरङ्गश्रुतिरपि तु निमित्तश्रुतिरेवास्त्वित्यर्थः।

पार्श्वस्थान्तरं परिहरति—काम्येऽपि तत्कालेच्छया। अयमर्थः। यदीयं पौर्णमास्याममावास्याममावास्यायामिति निमित्तश्रुतिः स्यात् तत्काम्येन न सम्वध्येत, न चैकमेव वाक्यं तस्यैव निमित्ततामङ्गतां च बोधयितुं पारयति वैरूप्यात्। निमित्ततया चोभयसम्वन्धे काम्येऽपि यथाशक्ति प्रयोगप्रसङ्गः। असम्बन्धे वा काम्यस्याऽनियतकालत्वाऽऽप-त्तिरिति।'

हेतुस्तु यावज्जीवश्रुतेरनतिरिक्तार्थत्वम् । प्रकरणिनोऽप्यङ्गार्थत्वं च । तदेवमविरोधादनिमित्ते कालतः शक्त्याश्रयो यदेति, निमित्तवति तु निमित्त-विरोधात्कालवत एवाङ्गतो यथेति ।

तदेतद् दूषयति—ननु प्रयोजनमेतत् । अयमभिसन्धिः । यदि प्रमाणप्रत्यालोचनयां काम्यस्याऽनियतकालत्वं भवति भवतु का नः पीडा प्रामाणिकानाम् ? न जातु प्रयोजनाऽनुवर्ति प्रमाणम्, प्रमाणवशवर्त्तित्वा-त्तस्येति ।

परमसिद्धान्ती ब्रूते—सत्यम्, न प्रयोजनाधीनं प्रमाणमित्यर्थः । हेतुस्तु यावज्जीवश्रुतेरनतिरिक्तार्थत्वम् इदमत्राकूतम् । तत्र नाम सामान्यश्रुति-र्विशेषे उपसंह्रियते यत्र सा विशेषशास्त्रादतिरिक्ताऽर्था भवति, तद्यथा पुरोडाशं चतुर्धा करोतीति सामान्यश्रुतिराग्नेये उपसंह्रियते 'आग्नेयं चतुर्धा करोती'त्यनेन, तत्र यद्याग्नेयं चतुर्धा करोतीत्येतावन्मात्रं न श्रूयते अनाग्ने-यस्यापि प्रसज्येत तदुभयमर्थवत् । यदि तु पौर्णमास्याममावास्यायां वा निमित्ते कर्म क्रियमाणं तर्हि नाऽजीवतो नाप्ययावज्जीवं स्यात् । निमित्ते सत्यवश्यकर्त्तव्यत्वात् नैमित्तिकस्येति यावज्जीवश्रुतेरनतिरिक्तार्थत्वप्रसङ्गः । अथोच्येत यदि यावज्जीवं दर्शपूर्णमासाभ्यामिति न पठ्यते ततः समुदाय-द्वयस्य प्रत्येकं निमित्तसम्बन्धात्प्रत्येकमधिकारविषयत्वं प्रपद्येत[1] । तन्माऽत्र प्रसाङ्क्षीदिति यावज्जीवं दर्शपूर्णमासाभ्यामिति वाक्यार्थः । अनेन हि यागषट्कस्यैकाऽधिकारविषयत्वमापाद्यत इति । तथापि यावज्जीवमिति व्यर्थम्, दर्शपूर्णमासाभ्यां यजेतेत्येतावन्मात्रमेव पठितव्यम् । न चात्र स स्वर्गः स्यादिति स्वर्गकामाऽधिकारः । स्वर्गकामो यजेतेत्यनेनैव तस्याऽ-वगतेः । न च यावज्जीवमग्निहोत्रमित्यत्रायं परिहारः संभवति । अग्नि-होत्रं जुहोतीत्युत्पन्नस्याऽग्निहोत्रस्य सायंप्रातरग्निहोत्रं जुहोतीति सायंप्रातर्ल-क्षणनिमित्तविधाने सति यावज्जीवमग्निहोत्रं जुहुयादिति वाक्यस्य वैयर्थ्य-प्रसङ्गादिति । हेत्वन्तरं समुच्चिनोति—प्रकरणिनोऽप्यङ्गार्थत्वं च । संसाध्यसाधना खल्वियं प्रधानभावना स्वसाधनाऽनुग्रहाऽपेक्षा यद्यदङ्गे संनिध्यानुपतितं तत्स्वसाधनाऽनुग्राहकतया गृह्णातीति । तत्प्रकरणे च कालविधिवाक्यं श्रुतं स्वगोचरस्याङ्गतामवगमयति न निमित्तभावम्, प्रकरणिनोऽङ्गाऽनपेक्षितत्वात् । तस्मात्कालविधिवाक्यं प्रकरणसहायं कालस्याङ्गतायां प्रमाणं न निमित्ततायामिति रमणीयम् ।

१. प्रसज्येत २ पु० पा० ।

किं पुनरिदं यद्विरुणद्धि ? कालतः शक्त्याश्रयम्। कस्य चेति कुतो गम्यते निमित्तनैमित्तिकभावः ? कथं चाऽस्य नैमित्तिकसम्बन्धः ? यदि तावद्यस्मिन् सति। को विरोधः ? न हि कालतोऽपि शक्त्याश्रये तस्मिन्नसति तत्क्रिया सत्येव। अथ तस्मिन् सति क्रियते एव। स्याद् विरोधः। न त्वीदृशो निमित्तार्थः। हेतुर्हि निमित्तम्। न चाऽवश्यं हेतवः कार्य्यवन्तः। कार्य्यन्तु नाऽसति हेतौ। तस्मान्न विरोधः।

सहेतुकं प्रकृतमुपसंहरति–तदेवमविरोधादनिमित्ते कालतः शक्त्याश्रयो यदेति, निमित्तवति तु निमित्तविरोधात् कालवत एवाङ्गतो यथेति। सुगमम्।

एवं पूर्वार्द्धं कारिकाया व्याख्याय पश्चार्धं विवरीतुकामस्तदवतारयितुं निमित्तमाक्षिपति—किं पुनरित्यादिना। किमाक्षेपे। तत्र किं पुनरिदं तन्निमितं यद्विरुणद्धि कालतः शक्त्याश्रयमिति स्परूपाक्षेपः, कस्य चेति संवन्ध्यन्तराक्षेपः कुतो गम्यते। निमित्तनैमित्तिकभाव इति प्रमाणाक्षेपः कथमिति। तत्र स्वरूपाक्षेपं विभजते—यदि तावद्यस्मिन् सति। को विरोधः कालतः। शक्त्याश्रयेणेति शेषः। अविरोधं दर्शयति—न हि कालतोऽपि शक्त्याश्रये तस्मिन्नसति तत्क्रिया, अपि तु सत्येव सा। अथोच्यते। तस्मिन् सत्येव क्रियते नाऽसतीति नाऽवधार्यते, अपि तु क्रियते एव न न क्रियते इति भवत्यक्रियायां निमित्तविरोध इत्याह—अथ तस्मिन् सति क्रियतएवेति। दूषयति—स्याद्विरोधो न त्वीदृशो निमित्त-शब्दस्यार्थः। हेतुर्हि निमित्तम्। ततः किम् ? न चावश्यं हेतवः कार्य-वन्तः, ततश्च पूर्व एव निमित्तार्थः सत्येव नाऽसतीति। तथा च न विरोध इत्याह—कार्यं तु नाऽसति हेतौ, तस्मान्न विरोधः। इदमभि-संहितम्। लोकप्रयोगाऽवधारणाधीनो हि शब्दार्थसंवन्धः। हेतुशब्दश्चाऽ-विवादं यस्मिन् सत्येव नाऽसति कार्यं तस्मिन् प्रयुज्यते। न खलु कुसूलस्थं वीजमजनयदङ्कुरं हेतुतया न प्रतियन्ति लौकिकाः। तेन यथा व्याप्यव्या-पकभाव उभयाश्रयोपि व्यापकसंवन्धितया व्याप्ये भाव एवऽनाभाव इति व्याप्तसंवन्धितया च नाऽन्यत्रेति निरूप्यते तथा कार्यकारणभावोऽपि कार्यस्य कारणे सत्येव नाऽसति भाव इति कारणस्यापि कार्यात्प्रागभावो नाभाव इति निरूपणीयः। ततश्चायं निमित्तशब्दः। तस्मात्सोऽतदर्थं इति। कस्येत्याक्षिप्तं विभजते—यदि कर्मणो निमित्तं ततः कर्मप्रवृत्ते-र्विधिवैयर्थ्यम्, सकलवचोवैयर्थ्यं च।

यदि कर्मणो निमित्तं तत एव कर्म्मप्रवृत्तेर्विधिवैयर्थ्यम्। अनिरूपितादपि निमित्तान्निमित्तवद्दर्शनात् पुरुषकाराऽभावात्। न तस्य निमित्तादुत्पत्तिः। नित्यत्वात्। तस्य तस्मिन् सति न बोधः। वाक्यादेव तत्सिद्धेः। कर्मवैयर्थ्यम्। सति भवत्येवेति। सत्येव तस्मिन् कर्म्मणः फलमिति चेत्। विरोधाभावः सर्वाङ्गोपसंहारेण। अथाऽधिकारस्य। न, नियोगादधिकारः। स एव नियोगसम्बन्धस्तन्निमित्तः। यदि तर्हि

ननु किमिति वचोवैयर्थ्यम्? यावता वचो निमित्तमवगमयिष्यति ततो निमित्तावगमात्पुरुषः कर्मणे घटिष्यते इत्याशङ्क्याह—अनिरूपितादपि निमित्तान्निमित्तवद्दर्शनात्पुरुषकाराऽभावात्। अयमभिप्रायः। तन्नाम हेतुभूतमपिशब्देन ज्ञायतां यदज्ञानमनुपात्तं सत्कार्यायाऽपर्याप्तम्। यथा यथास्वमुपादेयानि द्रव्यगुणकर्माणि कर्मणः न चेदमुपादेयं जीवनादि। तस्मात्सत्तामात्रेणैव कर्मणो हेतुरिति न पुरुषकारस्तन्निरूपणं चाऽर्थवदिति। अथ विधेर्निमित्तमित्यनुषज्यते। दूषयति—न तस्य निमित्तादुत्पत्तिः। कुतः? नित्यत्वात्स्वाभाविकत्वात्। श्रेयः साधनता हि कर्मणो विधिः। न चाऽसौ निमित्तेन जीवनादिना कर्मण्याधीयते, अपि तु स्वकारणादेव श्रेयः साधनमुत्पद्यते कर्मणः। न च जीवनादि कर्मनिमित्तमित्युक्तमित्यभिप्रायः। ननु मा भूद्विधेस्तद्बोधस्य भविष्यतीत्यत आह—तस्य तस्मिन् सति न बोधः। कुतः? वाक्यादेव तत्सिद्धेः। अथ फलस्य निमित्तमित्यनुषज्यते। दूषयति—कर्मवैयर्थ्यम्। यतः सति निमित्ते फलं भवत्येवेति। पुनः शङ्कते—सत्येव तस्मिन्निमित्ते कर्मणः फलमिति चेत्। न कर्माऽपेक्षा निमित्तभावं विहन्ति, मोपघानि तथा सर्वत्रेति भावः। सत्यमेवम्, अभिमतं तु नास्तीत्याह—विरोधाभावः सर्वाङ्गोपसंहारेण। निगदव्याख्यातम्। अथाऽधिकारस्य निमित्तमिति संवन्धः। एतदुक्तं भवति। येयं कर्मणि स्वामिता कर्मैतदस्य तदभिमतस्य जनकमिति पुरुषस्य प्रतीतिरसौ निमित्तादिति। निराकरोति—निमित्तात्किं तु नियोगादधिकारः। नियोगमवगच्छत् कार्ये भावार्थे विषये तिरश्चीनमात्मानं नियोज्यं प्रतिपद्यमानः पुरुषो नियोगविषये भावार्थे स्वामितामात्मनो नियोगसामर्थ्यादेव विजानातीति किं निमितेन? इत्यर्थः। सत्यम्, नियोज्यता भावार्थविषयां स्वामितामाक्षिपति, सैव तु नियोज्यता नियोगसंवन्धः पुंसो न निमित्तमन्तरेण भवति, तत्र निमित्तस्य सद्भावो भविष्यतीत्याशङ्कते—स एव नियोगसंवन्धस्तन्निमित्तः। दूषयति—यदि तर्हि तन्निमित्तको नियोगो न नियोगान्निमित्ताऽवगतिः। अयमभिसंधिः। जीवनादि निमित्तं नियोगसंवन्धं पुंसो वदंस्त-

तन्निमित्तको नियोगो न नियोगान्निमित्ताऽवगतिः । प्राक्सिद्धनिमित्तापेक्षः स शब्देनोच्यत इति सापेक्षत्वम् ।

अथ नियोज्यविशेषणस्यार्थान्निमित्तभावस्तस्मिन् सत्यधिकारात् । न चात्र प्रत्यक्षादि क्रमते । नापि शब्दः । विधिप्रधानत्वात् । तस्य च भावविषयत्वात् । तस्य चांशत्रयाऽतिरेकात् । तत्र विधीयमानस्य कर्म्मणः फले विधानात् तत्र विधौ निमित्ते उभयविधौ वाक्यभेद इति ।

न्निमित्तं नियोगमेव ब्रूते । न हि कार्यमित्येवाऽवगम्यते, अपि तु ममेदं कार्यमिति । एवं च स्वसम्बन्धिकार्यप्रतिपत्तिरेव नियोगप्रतीतिः । अतो निमित्ताऽवगतिपुरःसरं नियोगसंबन्धं ब्रुवाणो नियोगमेव तत्पुरःसरमाह । ततश्च न नियोगान्निमित्ताऽवगतिः स्यादिति । मा भूत्को दोषः ? इत्यत आह—प्राक्सिद्धनिमित्तापेक्षः स शब्देनोच्यते इति सापेक्षत्वम् । निमित्तं हि नियोगस्य कारकं वा स्याद् ज्ञापकं वेति तृतीयस्य प्रकारस्य निमित्तताायामभावात् तत्कारकत्वे कर्मानुष्ठानवैयर्थ्याद् ज्ञापकत्वमवशिष्यते । तथा च प्राक्सिद्धेनैव निमित्तेन नियोगस्याऽवगमितत्वात्तदपेक्षमभिधानं शब्दस्येत्यप्रामाण्यप्रसङ्गः ।

अथोच्येत न वयं निमित्ताऽवगमान्नियोगाऽवगतिं ब्रूमहे, यदेवमुपालभ्येमहि । किं तु शब्द एव निरपेक्षो जीवनवतो नियोगमवगमयति । नियोगेन नियोज्यविशेषणस्यैव प्रथममपेक्षितत्वात् जीवनादेस्तदवच्छेदकत्वेन सम्बन्धः । नियोज्यविशेषणमेव तु जीवनादि निमित्तमित्युच्यते । तन्नियोज्यविशेषणे सत्येवाऽऽत्मसंवन्धितया नियोगप्रतीतेः कर्मणि च स्वामिताऽवगमात् कर्तुरधिकारसिद्धेरित्याह—अथ नियोज्यविशेषणस्यार्थान्निमित्तभाव[1]स्तस्मिन् सत्यधिकारात् । अर्थान्निनित्तत्वं स्वर्गकामनाया अपि संभवति । न च सर्वाङ्गोपसंहारेण विरोधस्तथा यावज्जीवमित्यत्रापि स्यादित्यर्थः ।

एवं कस्य चेति विभज्य कुतो वेति विभजते—न चात्र निमित्तभावे जीवनादेः प्रत्यक्षादि क्रमते । ननु मा नाम क्रमन्तां[2] प्रत्यक्षादीनि, शब्दस्तु क्रंस्यते इत्यत आह—नापि शब्दः । कुतः ? विधिप्रधानत्वात् । तथापि कुतो न निमित्तविषयत्वम् ? इत्यत आह—तस्य च विधेर्भावविषयत्वाद्भावशब्दश्च ण्यन्ताद्भवतेरेरजित्यचिव्युत्पत्तेर्भावनामाह । यद्युच्येत भवतु भावनाविषयो विधिस्तत्संवन्धात्तु निमित्तमपि गोचरयन् तत्र शब्दं प्रमाण-

१. विशेषणात् स्यान्निमित्तभावः २ पु० पा० । २. नाम क्रंसत० पु० प० ।

उच्यते । यत्र जाते कर्मणोऽवश्यकर्त्तव्यता तन्निमित्तम् । कथम् ? यस्मिन् सति भवत्येव स हेतुर्मुख्यः, इतरस्तु भक्त्या । तदवस्थाभेद-सम्बन्धात् । गौणमुख्ययोश्च मुख्ये संप्रत्यय इत्यावश्यकसिद्धिः । तन्निमित्त-

यिष्यतीत्यत आह—तस्य चांशत्रयाऽतिरेकात् । भावनासंवन्धे सिद्धे निमित्तस्य चोदनार्थत्वम् स एव तु साध्यसाधनेतिकर्त्तव्यताऽतिरेकादसिद्ध इत्यर्थः ।

कथं चास्येति विभजते—तत्र निमित्ते विधीयमानस्य कर्मणः फले नित्यसमोहिते विधानात्तत्र फले विधौ निमित्ते विधानादित्यनुषङ्गः । उभय-विधौ तूभयस्मिन् फले निमित्ते च कर्मविधौ वाक्यभेद इति । इतिश्चाऽऽक्षेप-परिसमाप्तौ ।

एवमाक्षिप्योत्तरतयोत्तरार्धं कारिकाया अवतारयति—उच्यते । यत्र जाते कर्मणोऽवश्यकर्त्तव्यता तन्निमित्तम् । जाते इत्यनुपादेयतां निमित्त-भावोपयोगिनीं सूचयति । कर्त्तव्यतायां निमित्तमित्याह कर्मणां कर्त्तव्यतेति । यस्मिन् सति भवत्येव न न भवति तन्निमित्तमित्यवश्यग्रहणेन दर्शयति । एवं च वदता कर्त्तव्यतारूपविधिविशेषणतया निमित्तं संवध्यत इति वाक्यार्था-ऽन्वयप्रकारोऽपि निमित्तस्यार्थात्सूचित इति । पूर्वोक्तानि प्रायेण पृच्छति—कथम् ? उत्तरम्—यस्मिन् सति भवत्येव स हेतुर्मुख्यः । ननु कार्यम-कुर्वाणो सत्येव नाऽसतीति विवक्षित्वा हेतुशब्दं लौकिकाः प्रयुञ्जते, तत्र कथमसौ मुख्यो हेतुः ? इत्यत आह—इतरस्तु भक्त्या लक्षणया । सत्यम-कुर्वत्यपि कार्यं धूमादिलक्षणं वह्न्यादौ हेतुशब्दः प्रयुज्यते । न त्वेतावताऽसौ मुख्याऽर्थः । न खल्वयं हेतुशब्दो यद्यत् कार्यं जनयति तत्र सर्वत्र विशेषेण प्रवर्त्तमानो जनयति प्रवर्तितुमर्हति । न जातु दण्डविशेषणाऽधीनप्रवृत्ति दण्डिपदं दण्डविरहिणि चैत्रादौ वर्त्तते जनयतीति स एवोच्यते यस्मिन् सति कार्यं भवत्येव न तु यस्मिन्सत्येव तद्धि करोति न करोति च । करणं चोपाधिः प्रवृत्तौ हेतुशब्दस्य कथम् ? यत् करिष्यत्यकार्षीद्वा न तत्र हेतुशब्दः प्रवर्त्तते, अवर्त्तमानस्योपाधेरसत्त्वात् । असतश्च प्रवृत्तिनिमित्तत्वेऽति-प्रसङ्गात् । तस्माद्यस्मिन् सति भवत्येवेति तत्राऽयं निमित्तशब्दो मुख्यो भाक्त इतरत्रेति साम्प्रतम् । लक्षणायां बीजमाह—तदवस्थाभेदसंवन्धात् । बीजादय एव हि परस्परसमवधानसमासादिताऽवस्थाविशेषा नियमेन कार्य-शालिनः । यदाहुर्बाह्या अपि "न किंचिदेकमेकस्मात्सामग्रचा[1] सर्वसम्भव" इति । तस्मादवस्थाविशेषा वा[2]ऽवस्थाविशेषशालिनो वा निमित्तपदाऽ-

१. सामग्रचात् २ पु० पा० । २. अवस्थाविशेषा वा इति नास्ति २ पु० ।

सामर्थ्यादेव । निमित्तमेव हि तन्न स्याद् यस्मिन् सति न क्रियेत ।

अवश्यकर्त्तव्यता च कर्म्मणः प्रतीता नोपसंहार्य्यनिखिलाङ्गस्य कल्पते, न कदाचिदहितोपायस्येत्यतो यथाशक्त्यङ्गसमवेतं सदा समभिलषितोपायं कर्म्मेति गम्यते । निमित्तता च कर्त्तव्यताया विधिरूपायाः । तस्मिन् सति तत्कुर्वतो यथाकथंचित्सदा समीहितमेनःक्षयं साधयत्येव ।

भिधेयाः । यत्र तु सोऽवस्थाविशेषो न वर्त्तमानस्तत्र सोऽभूद्भविष्यति वेति कथंचिदवस्थाभेदसंवन्धाल्लाक्षणिक इत्यर्थः । ननु भवतु भाक्तम्, तथापि स एव हेतुः किमिति न ? इत्यत आह—गौणमुख्ययोश्च मुख्ये संप्रत्यय इति । तस्मादावश्यकसिद्धिः कर्त्तव्यतायाः । कुतः ? निमित्तसामर्थ्यादेव । सामर्थ्यमेव व्यतिरेकमुखेन दर्शयति—निमित्तमेव हि तन्न स्याद् यस्मिन् सति न क्रियेत । ततश्च सिद्धः सर्वाङ्गोपसंहारविरोधान्नैमित्तिके यथाशक्तिप्रयोगः । सदा समीहितोपायता चेत्याह—अवश्यकर्त्तव्यता च कर्मणः प्रतीता नोपसंहार्याऽखिलाङ्गस्य कल्पते । न कदाचिदीहितोपायस्येत्यर्थाद्यथाशक्त्यङ्गसमवेतं सदा समभिलषितोपायं कर्म नैमित्तिकमिति गम्यते । कस्य निमित्तमिति यदुक्तं तत्रोत्तरमाह—निमित्तता च कर्त्तव्यतायाः फलकर्त्तव्यताया व्यवच्छिनत्ति विधिरूपाया इति ।

ननु तस्य नित्यत्वादित्युक्तम्, तत्राह— तस्मिन्सति कुर्वतो यथा कथंचित्सदा समीहितमेनःक्षयं साधयत्येव । इदमाकूतम् । सत्यं कर्तृसमीहितोपायता कर्मधर्मो विधिः । स च स्वकारणादुत्पत्स्यमानस्य स्वाभाविकस्तथापि निमित्ते सत्यवश्यकर्त्तव्यत्वाद्यथा कथंचित् क्रियमाणं कर्तुः समीहितमुपात्तदुरितक्षयलक्षणं फलं साधयत्येव । एतदुक्तं भवति । निमित्ते सति स्वकारणेभ्यः कर्मोपजायमानमविकलाङ्गमितरथा कर्त्तुः समीहितोपायतां कर्त्तव्यतामासादयति । नाऽसतीति भवति कर्त्तव्यतायाः कर्तृसमीहितसाधनताया विधेर्निमित्त[1] श्रवणादिति ।

यदुक्तं निमित्तभावे प्रमाणाभाव इति, तत्र शब्दव्यतिरिक्तानामभावंमृष्यामहे, न तु शब्दस्य । ननु विधिप्रधानः शब्दो विधौ तद्गोचरभावनायां तदङ्गेषु वा तत्संवन्धात्प्रमाणम् । न च निमित्तमेषामन्यतमम्, कथं तत्र चोदनात्वेन शब्दः प्रमाणम् ? इत्यत आह—भावव्यतिरेकेऽपि च चोदनाभूतशब्दप्रमेयत्वं निमित्तस्येति संवन्धः । भावशब्देनांशत्रयोपेतां भावनामाह ।

ननु निमित्तस्याऽनुपादेयत्वादविधेयस्य वाक्यभेद[2]प्रसङ्गाच्चाऽनु-

१. निमित्ते २ पु० पा० । २. वाक्यर्थभेद १ पु० पा० ।

भावव्यतिरेकेऽपि च शब्दप्रमेयत्वम्। अविधेयस्यापि विधिवद्विध्यनुप्रवेशा[1]-द्विधिविशेषणत्वात्। अत एव चास्य कर्म्मणा सह सम्बन्धे विकल्पोऽनवकाश इति चतुरस्रम्।

ननु नियोज्यविशेषणं जीवनादि स्वर्गादिवन्मन्यन्ते, नियोगेन नियोज्यस्य प्रथममपेक्षितत्वात्। न ह्यनाश्रितनियोज्यविशेषो नियोगो लोके

द्देश्यस्य कथं चोदनाभूतशब्दविषयत्वम्? इत्यत आह—अविधेयस्यापि विधिवत्। अयमभिसंधिः। नास्त्ययं नियमो यद्विधेयमेव सोद्देश्यं चोदनार्थं इति। विधेरविधेयस्य चाऽनुद्देश्यस्य चाऽचोदनार्थत्वप्रसङ्गात्, अपि तु यच्चोदना वोधयति निमित्तमिति विधिवत्तदपि तदर्थः। ननु विधिं विधेयं वा वोधयन् शब्दश्चोदनात्वेन प्रमाणम्, न च निमित्तं विधिर्विधेयं वा, तत्कथं तत्र चोदनात्वेन शब्दः प्रमाणम्? इत्यत आह—विध्यनुप्रवेशात्। स एवाऽविधेयस्य कुतः? इत्यत आह—विधिविशेषणत्वात्। अयमभिसंधिः। वैश्वानरं द्वादशकपालकर्म्म, तत्कर्त्तव्यता पुत्रजन्मनि सत्यसति चाऽविशेषेण प्रसक्ता न चाऽवश्यभाविनी स्यात्। अनेन त पुत्रजन्मना निमित्तेन जाते एव नाऽजाते कर्त्तव्यतैव नाऽकर्त्तव्यतेति व्यवस्थाप्यमाना निमित्तमविधेय-मप्यनुद्देश्यमपि स्वयमनुद्देश्या वाऽविधेया च विशेषणतया गृह्णातीति विशेषणाऽभिधाने चोपपन्नं शब्दस्य चोदनात्वमिति।

कथं चाऽस्य नैमित्तिकसंवन्ध इति यदुक्तं तत्रोत्तरमाह—अत एव चास्य[2] कर्मणा सह संवन्धे विकल्पोऽनवकाशः। यत एवाऽविधेयस्य विशेषणतया विध्यनुप्रवेशित्वेन शब्दप्रमेयतया विधिसंवन्धः[3] अत एव विधेयेन कर्मणा सह निमित्तस्य संवन्धे यो विकल्पः किं निमित्तोद्देशेन कर्म विधीयते, आहोस्वित्कर्मोद्देशेन निमित्तमिति, तत्र यो दोषः प्रसञ्जितः स सर्वोऽनवकाशः। विधेयसम्वन्धनिवन्धनो विकल्पप्रसङ्गो नाऽविधेय-संवन्धे भवितुमर्हतीत्यर्थ इति। तस्माच्चतुरस्रम्।

यदुक्तं प्रथमत एव जीवनादिर्निमित्ततया संवध्यत इति, तत्प्रत्याचक्षाण आह—ननु नियोज्यविशेषणं जीवनादि स्वर्गादिवन्मन्यन्ते। न मननमात्रा-द्वस्तुसिद्धिरिति हेतुमुपन्यस्यति—नियोगेन नियोज्यस्य प्रथममपेक्षितत्वात्। अयमर्थः। कार्यं हि कृत्यधीनसत्त्वमननुष्ठीयमानं न तत्त्वे पर्यवस्यति, अनुष्ठानं च न कर्त्तारमन्तरेण, कर्त्तृता च नाधिकारं विना, अधिकारश्च

१. विध्यर्थानुप्रवेशात्—मू० पु० पा०।
२. निमित्तस्य च—मू० पु० पा०। ३. संबन्धनिबन्धनः २ पु० पा०।

दृश्यते । तदभावे प्रतिपत्तिरेव न स्यात् । तद्विशेषणमेव तु स तस्मिन् सत्यधिकारान्निमित्तत्वेनाऽवतिष्ठते । स्वर्गादि तु साध्यतया काम्यत्वेन ।

नैतत्सारम् । विशेषणाऽनुपपत्तेः । न हि यावज्जीवनं तावता विशिष्टः कश्चित्कदाचिद्वा यो नियुज्यते नानावसन्तकालविशिष्टो वा ।

ममेदं कार्यमिति वोद्धारं नियोज्यमपेक्ष्य भवतीति कार्यवोद्धा नियोज्यभेदो न नियोगेन कार्येणाऽनन्यप्रयुक्ता[1]ऽनुष्ठानेनान्तरङ्गतया निमित्तान्नियोज्यस्यैव प्रथमपेक्षितत्वाद्विशेषणमन्तरेण च नियोज्यभेदाऽसिद्धिर्निमित्तस्याऽनुपादेयतया तदुपपत्तेर्नियोज्यविशेषणतयैव तावत्प्रथमं सङ्गतिर्न तु निमित्तत येति । लोकेऽपि चैतत् सिद्धमिति तत्पूर्वकत्वाद्वेदे न कथं सा सेत्स्यति ? इत्याशयवानाह—न ह्यानाश्रितनियोज्यविशेषो नियोगो लोके दृश्यते । निमित्तमन्तरेण पुनर्लोके वेदे च यथायथं नियोगो दृश्यते एवेत्यर्थः । ननु नाऽदर्शनमात्राद्व्यावृत्तिरित्यत आह—तदभावे नियोज्यविशेषस्य प्रतिपत्तुरभावे प्रतिपत्तिरेव न स्यात् । तदुक्तमाचार्येण 'न हि देवदत्तं यज्ञदत्तं वाऽनुद्दिश्य लिङादयः प्रवर्त्तन्त"इति । ननु यदि निमित्तमप्यधिकृतविशेषणं ततो निमित्तत्वेनाऽसंवन्धान्न नैमित्तिकत्वं कर्मण इति स्वसिद्धान्तव्याकोपः प्राप्त इत्यत श्राह—तद्विशेषणमेव तु स तस्मिन् सत्यधिकारान्निमित्तत्वेन अवतिष्ठते । जीवनादेरधिकृतविशेषणस्यापि सतस्तस्मिन् सत्यधिकारादर्थान्निमित्तत्वमस्तीति तद्योगान्नैमित्तिकं कर्मेति कुतः सिद्धान्तव्याकोप इत्यर्थः । नन्वीदृशं स्वर्गादेरपि निमित्तत्वमिति काम्यस्यापि नैमित्तिकत्वप्रसङ्ग इत्यत आह—स्वर्गादि तु साध्यतया काम्यत्वेनाऽवतिष्ठत इत्यनुषङ्गः । अयमभिसंधिः । सत्यप्यधिकृतविशेषणत्वे स्वर्गादेर्न निमित्तभावः । कमियोगाऽऽपादितेन साध्याभावेन विरोधान्निमित्तत्वस्य च सिद्धतया सहैकार्थसमवायनियमाद्व्यापकविरुद्धोपलब्ध्या विनिवृत्तेः । जीवनादेस्तु सिद्धत्वे निमित्तत्वमविहितमिति सिद्धः काम्यनैमित्तिकविवेक इति ।

तदेकदेशिमतं सिद्धान्ती दूषयति—नैतत्सारम् । कुतः ? विशेषणाऽनुपपत्तेः । तामेवाह—न हि यावज्जीवनं तावता विशिष्टः कश्चित्कदाचिद्वा यो नियुज्यते[2] नानावसन्तकालविशिष्टो वा । अयमर्थः । जीवनं नाम प्राणधारणमुच्यते । तत्पदं चेह यावच्छब्दसमभिव्याहृतं यावतां वा प्राणिनां जीवनानि यावन्ति वा यावत्कालं वा पुंस एकस्य जीवनमभिदधीत । तत्र प्रथममध्यमयोः कल्पयोर्दूषणं—न हि यावतां पुंसां यावन्ति वा जीवनानि

---

१. अन्याऽनायत्तप्रयुक्तः २ पु० पा० । २. नियोक्ष्यते २ पु० पा० ।

